# भाषापरिच्छेदः ।

महामहोपाध्याय-

विश्वनाथ न्यायपञ्चानन-भट्टाचार्य्यप्रणीतः ।



काव्यतर्कतीर्थोपनामक-

श्रीकुञ्जविहारि-तर्कसिद्धान्त-भट्टाचार्य्य-सङ्कलित-

विस्तृतटिप्पनसमलङ्कृतया

सिद्धान्तमुक्तावल्या सहितः ।



जगत्पुराश्रमप्रधानाध्यापक-काव्यतर्कतीर्थोपनामक-

श्रीकुञ्जविहारि-तर्कसिद्धान्त-भट्टाचार्य्येण

व्याकरणतीर्थसिद्धान्तशिरोमण्युपनामक-

श्रीहेरम्बनाथ तर्कतीर्थभट्टाचार्य्येण च प्रकाशितः ।

कलिकातानगर्य्याम्

१६१ नं० मुक्तारामबाबु-ष्ट्रीटस्थितगोवर्द्धनयन्त्रे

श्रीगोवर्द्धनपानेन मुद्रितः ।

बङ्गाब्दः १३२० ।

मूल्यमेकरूप्यकम् १) ।

सटिप्पनः

# "सिद्धान्तमुक्तावली"-सहितो

# भाषापरिच्छेदः ।

महामहोपाध्याय

श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्य्य-प्रणीतः ।

जगत्पुराश्रम-न्यायदर्शनादिशास्त्राणां प्रधानाध्यापकेन

काव्यतर्कतीर्थोपनामकेन

श्रीकुञ्जविहारि-तर्कसिद्धान्तेन

सम्पादितः प्रकाशितश्च ।

१३२० वङ्गाब्दे, प्रथमं संस्करणम् ।

मूल्यं एकरूपकम् १) ।

# भूमिका ।

भगवदनुकम्पया मुद्रणादिविधौ अशेषविघ्नप्रतिबद्धोऽपि नव्य-न्यायशास्त्रे तथा साधारणदर्शनशास्त्रे च प्रवेशलिप्सूनां पाठार्थिनां प्रथमपाठ्यरूपेण निर्वाचितः सटिप्पन-भाषापरिच्छेदोऽद्य सम्पूर्णतां गतः ।

तत्र भवान् महामहोपाध्यायो विश्वनाथन्यायपञ्चाननोऽस्य रच-यिता । तेनैव च अस्य मुक्तावलीनाम विस्तृता टीका निरमायि । अस्याञ्च मुक्तावल्यां विविधशास्त्रीयग्रन्थस्याभिमतं, प्राचीननव्यन्यायस्य बहुशो व्याख्यानं तथा वैशेषिकदर्शनादेरपि सिद्धान्तादिकं तेनैव सिद्धान्तितं सत् स्थानमलभत । अध्ययनेनास्य महामहोपाध्याय-न्यायपञ्चाननमहाशयस्य महत्येव ज्ञानगभीरतानुभूयते ।

परन्तु कृच्छ्रबोधस्यास्य न्यायग्रन्थस्य तथा सुगभीरार्थाया मुक्ता-वल्याश्च बोधसौकर्य्याय नानादर्शनशास्त्राणां मतादिकमवलम्ब्य सरलया संस्कृतगिरा विरचय्य सुविस्तृतां टिप्पनीं सारल्यमुपपाद-यितुं परं यत्नमालम्बितवान् । यदि पुनः ग्रन्थेनानेन पाठार्थिनां कथमप्युपकर्त्तुं समर्थयिष्ये, तदैव मे यत्नः सफलतां यास्यति ।

मुद्रणयन्त्राणां अवश्यतयास्य मुद्रणे महान् आयासः समभवत्, कालोऽपि बहु एव अतिक्रान्तः । प्रथमतः अस्मिन्नेव चट्टग्रामे अस्यांशविशेषो मुद्रित आसीत्, समधिकसमयातिपाते अनुग्राहकाणां ग्राहकाणां समधिका क्षतिरिति सत्वरमुद्रणाशया वाराणस्यामस्य प्रवर्त्तितो मुद्रणोद्योगः । तत्रापि विघ्नपरम्परावटितः कालातिपात इति कलिकातायां परिवर्त्तितमस्य मुद्रणस्थानम्, तत्रैव च सम्पूर्णतां गतोऽयं ग्रन्थः ।

ग्रन्थस्यास्य मुद्रणे कलिकाता-प्रवासिना परमश्रद्धास्पदेन श्रीमता नगेन्द्रनाथसिद्धान्तरत्नेन संशोधनादिविधौ महत् साहाय्यं कृतमिति आशीर्व्वादार्हः सः । परिशेषे त्विदमेव वक्तव्यं,—संशोधनादिविधौ स्वीययत्नावलम्बनासम्भवात् यद्‌यद्-दोषादिकं जातं, तत्तदेव परि-हर्त्तव्यं महात्मभिरिति शम् । वशंवदस्य—

श्रीकुञ्जविहारि-शर्म्मणः ।

नमो गणेशाय ।

विवृत टिप्पनीसमेत—सिद्धान्तमुक्तावलीसमुद्भासितः ।

# भाषापरिच्छेदः ।

—o—

**नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।**
**तस्मै नमः कृष्णाय संसारमहीरुहस्य बीजाय ॥१॥ [१)**

---

यस्या दयालेशवशेन पुंसा वैदग्ध्यभासाद्यत एव सद्यः ।
वाग्देवतां तां सततं प्रणम्य श्रीमद्गुरूणाञ्च पदाब्जराजिम् ॥
रौद्री दिनकरीसारमालम्ब्य च गुरोर्व्वचः ।
संगृह्यते टिप्पनीयमायद्याच्छावसंहृतेः ॥

१। नूतनेत्यादि—जलं धरतीति जलधरो मेघः. नूतनश्चासौ जलधरश्चेति नूतनजलधरः तस्य रुचिरिव रुचिर्यस्य तस्मै, (मध्यपदलोप समासः) गोपानां वध्वः गोपवध्वः, (स्वल्पावधूर्वधूटीस्यादिति कोषः) तासां दुकूलानि वस्त्राणि तेषां चौरः तस्मै, संसार एव महीरुहो वृक्षः तस्य बीजाय निमित्तकारणाय. तस्मै प्रसिद्धाय कृष्णाय नम इति वाक्यार्थः। अत्र तच्छब्दस्य प्रसिद्धार्थकत्वात् न यच्छब्दापेक्षा।

ननु गुणवर्णनादीनामेव स्वापकर्षबोधानुकूलतया नमस्काररूपत्वं सम्भवति तत्कथं चौर्यवृत्तिकीर्त्तनेन भगवतो दोषारोपणमिति चेन्न देवानां स्वरूपकथनस्यैव स्तुतिरूपत्वात्, अनेन च विशेषणेन "भक्ताभिलाषपूरणाय तस्य किमप्यकर्त्तव्यं नास्ती"ति ध्वनितम्। अथवा दुकूलं

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ २

निजनिर्मितकारिकावली मतिसंक्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकात् ननु राजीवदयावशंवदः ॥ ३
सद्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिताऽभावप्रकर्षोज्ज्वला ।
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्ति रेषा चिरम् ॥ ४

---

चित्तवस्त्रयोरिति कोषात् दुकूलं चित्तमित्यर्थे नास्ति कश्चिद्विरोधः । जलधरनिष्ठनूतनत्वञ्च उत्कृष्टतोयकभिन्नत्वे सति पतनोन्मुखतोयकत्वमिति ।

२ । निर्विघ्नग्रन्थपरिसमाप्तये कृतं मङ्गलं शिष्यशिक्षार्थमुपन्यस्यति चूड़ामणीत्यादि । अथात्र भव्यायान्तेनैव वाक्यसमाप्त्या लीलयेत्यादि विशेषणान्वयार्थं विशेष्यस्य पुनरादाने समाप्तपुनरात्मतादोषापत्ति स्तदुक्तं काव्यप्रकाशे ''समाप्तपुनरादानात् समाप्तपुनरात्मता'' इति चेन्न उत्थिताकाङ्क्षारहितान्वयबोधानन्तरं विशेषणान्तरान्वयार्थं विशेष्यवाचकपदानुसन्धानस्यैव समाप्तपुनरात्मतारूपत्वात् । अत्र च लीलयेत्यादि विशेषणमन्तरेण किमर्थं विधो चूड़ामणीकरणं वासुकेर्व्वा वलयीकरणमित्युत्थिताकाङ्क्षाया अनिवृत्तेः भव्यायेत्यन्तेन तादृशान्वयबोधासम्भव इति ध्येयम् । लीलया ताण्डवं नृत्यं तत्र पण्डित इत्यर्थः । प्रथमविशेषणद्वयेन तु नृत्योपयोगि भूषणविशिष्टत्वं सूचितम् ।

३ । राजीवे ( तन्नामकशिष्ये ) दयावशंवदः सन् कौतुकादेव विशदीकरवाणीति प्रतिज्ञानेन स्वस्य ग्रन्थकरणे क्लेशाभावः सूचितः ।

४ । सम्बन्ध प्रयोजनादिकमभिधातुमाह सद्रव्येति । द्रव्यैः सहिता युक्ता प्रतिपादकतया गुणैरपि गुम्फिता युक्ता, सता सुतक्षेपणादीनां पञ्चानां कर्म्मणां ज्ञापिका बोधिका, सामान्यं जातिः, विशेषः पञ्चमपदार्थः, नित्यमिलितं नित्यसम्बन्धः, समवाय इत्यर्थः, सन्ति सामान्य विशेष नित्यमिलितानि यस्यां सा, अभावस्य प्रकर्षः प्रागभावादिभेदेन वैलक्षण्यं तस्य उज्ज्वला

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति नूतनेत्यादि। ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादिति ५ चेत् न अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे ६ तत्र च फल-

---

प्रकाशिका, सत्यः युक्तयो यस्यां सा, एषा बुद्धिस्था, सिद्धान्ता एव मुक्ताः तासां आवली पंक्तिः, विष्णोर्नारायणस्य वचसि वक्षःस्थले विन्यस्ता विशेषतोऽर्पिता, सुकृतिनां पण्डितानां मनसो मुदं हर्षं चिरं बहुकालं वितनुतां विस्तारयतु। अत्र च मुक्तावलीसाम्योक्त्या निर्दोषत्वं सूचितं, साम्यञ्च ग्रन्थे द्रव्यादिपदार्थवत्तया। तथाहि मुक्तावली अपि सद्रव्या साध्यतया द्रव्यवती, द्रव्यसाध्येति यावत्, नानाविधद्रव्यघटिता वा, गुणेन सूत्रेण गुम्फिता निर्म्मिता, सुकृतिनां पुण्यवतां यानि सन्ति समीचीनानि भगवदाराधनादिरूपाणि कर्म्माणि तेषां ज्ञापिका बोधिका, सत्सामान्यं समीचीना जातिः, विशेषो महत्त्वनिर्म्मलत्वादि, ताभ्यां नित्यमनवरतं मिलिता सम्बद्धा, अभावे तेजोऽभावे अन्धकार इति यावत्, प्रकर्षेण उज्ज्वला प्रकाशिका इत्यर्थः।

अत्र द्रव्यादिपदार्थप्रतिपादकत्वप्रदर्शनेन द्रव्यादयो विषया उक्ताः। पदार्थतत्त्वावधारणञ्च प्रयोजनम्। सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावः।

५। एतेन व्यतिरेकव्यभिचारो दर्शितः। समाप्तिश्चरमवर्णध्वंसः। कादम्बर्यादिग्रन्थे मङ्गलसत्त्वेऽपि समाप्तिरदर्शनादन्वयव्यभिचारोऽप्यत्र दोषो बोध्यः।

६। सिद्धे अनुमिते, तथाचायंप्रयोगः—मङ्गलं सफलं अविगीतशिष्टाचारविषयत्वात्। विषयत्वञ्च ज्ञानविषयसुखेऽतिप्रसक्तमत आचारेति, आचारो यद्यपि क्रियैव तथाप्यत्र विषयत्व-श्रुतेः कृतिरेव विवक्षिता. कृतिविषयत्वं पुनर्विधेयतया बोध्यं, तेन फले फलवत्त्वाभावेऽपि न व्यभिचारः तस्योद्देश्यतया कृतिविषयत्वात्। विधेयतया कृतिविषयत्वस्य चैत्यवन्दनादावपि सत्त्वात्तत्र व्यभिचारवारणाय शिष्टेति, शिष्टत्वञ्च फलसाधनतांशे भ्रान्तिरहितत्वं। शिष्टाचार-विषयत्वस्य श्येनयागादावपि सत्त्वात्तत्र व्यभिचारवारणाय अविगीतेति, अविगीतत्वञ्च बलवद-निष्टाननुबन्धित्वम्। अत्र च सफलं इत्यनेन प्रवृत्त्युपयुक्तबलवदनिष्टाननुबन्धीष्टसाधनत्वमेव साध्यं विवक्षितं तेन श्येनयागादीनामपि शत्रुवधादिरूपेष्टसाधनत्वात् सफलत्वानपायेन तत्र हेतोः सत्त्वेऽपि व्यभिचाराभावादविगीतपदवैयर्थ्यमिति शङ्का निरस्ता।

जिज्ञासायां सम्भवति ७ दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वात् उपस्थितत्वाच्च ८ समाप्तिरेव हि फलं कल्प्यते। ९ इत्यञ्च १० यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत् ११ कल्प्यते, यत्र १२ च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्य्यं वा १३ बोध्यं प्रचुरस्यास्यैव १४ बलवत्तरविघ्ननिराकरणकारणत्वं, विघ्नध्वंसस्तु १५ मङ्गलस्य द्वारमित्याहुः १६। नव्यास्तु १७

---

७ यत्र दृष्टफलं न सम्भवति तत्र गङ्गास्नानादावदृष्टार्थकत्वमप्यस्तीत्यावेदयितुमाह सम्भवतीति।

८ ननु विश्वजिन्न्यायेन स्वर्ग एव फलं कल्प्यतामित्यत आह उपस्थितत्वाच्चेति।

९ कल्प्यते अनुमीयते, तथा च मङ्गलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वादित्यनुमानम्।

१० व्यतिरेकव्यभिचारमुद्धरति इत्यञ्चेति, मङ्गलस्य समाप्तिफलकत्वे सिद्धे च इत्यर्थः।

११ तत् मङ्गलं, कल्प्यते अनुमीयते समाप्त्येति शेषः।

१२ अन्वयव्यभिचारं निरस्यति यत्र चेति, तत्र कादम्बर्य्यादौ।

१३ वाकारोऽनास्थायां, अन्यथा विघ्नध्वंसं प्रति विघ्नसमसंख्यकमङ्गलत्वेन हेतुत्वे अधिकसंख्यकमङ्गलान्न्यूनसंख्यकविघ्ननाशो नस्यात्।

१४ नन्वेवमपि कादम्बर्य्यादौ कुतो न विघ्नध्वंस इत्यत आह प्रचुरस्येति, अस्य मङ्गलस्य।

१५ ननु तथापि कादम्बर्य्यादौ विघ्नध्वंसो मा जायतां समाप्तिः परं जायतां मङ्गलरूपहेतोः सत्त्वादित्याशङ्क्याह विघ्नध्वंसस्त्विति। अत्र च स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्ता सम्बन्धेन चरमवर्णध्वंसरूपसमाप्तिं प्रति स्वजन्यविघ्नध्वंसवत्तासम्बन्धेन मङ्गलस्य कारणत्वमित्याशयः, तथाच स्वजन्यविघ्नध्वंसवत्तासम्बन्धेन मङ्गलाभावान्न तत्र समाप्तिरिति भावः।

१६ प्रतिबन्धकसंसर्गाभावस्य कार्य्यमात्रहेतुतायाः क्लृप्ततया विघ्नसंसर्गाभावेन मङ्गलस्यान्यथासिद्धत्वं दुष्परिहरमेवेत्यस्वरससूचनाय आहुरित्युक्तं। प्राञ्च इति शेषः।

१७ विघ्नध्वंस एव मङ्गलाचरणस्य फलमिति वदतां चिन्तामणिकृतां मतमाह नव्यास्त्वित्यादि। एवकारेण समाप्तिव्यवच्छेदः, प्रतिभा स्फूर्त्त्याख्यो ज्ञानविशेषः, आदिना विघ्नसंसर्गाभावपरिग्रहः।

मङ्गलस्य विघ्नध्वंस एव फलं समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात्। न चैवं १८ स्वतःसिद्धविघ्नविरहवता कृतमङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम् इष्टापत्तेः, विघ्नशङ्कया १९ तदाचरणात्, तथैव शिष्टाचरणात् २०। न च तस्य २१ निष्फलत्वे तद्बोधकशिष्टाचारानुमितवेदाप्रामाण्यापत्तिरिति वाच्यं सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात् २२। अत एव पापभ्रमेण कृतप्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम् २४। मङ्गलञ्च २५ विघ्नध्वंसविशेषे

---

१८ एवं मङ्गलस्य विघ्नध्वंसं प्रति जनकत्वे।

१९ ननु निष्फलत्वे प्रवृत्तिरेव कथ मत आह विघ्नाशङ्कयेति। संशयनिश्चयसाधारण विघ्नज्ञानमेव प्रवर्त्तकमिति भावः।

२० शिष्टाचरणादिति विषयतासम्बन्धेन मङ्गल इति शेषः।

२१ तस्य निर्विघ्नपुरुषानुष्ठितमङ्गलस्य। तद्बोधकेति मङ्गलविघ्नध्वंसयोः कार्य्यकारणभावबोधकेत्यर्थः।

२२ तथाच स्वतःसिद्धविघ्नाभावस्थले अवश्यक्लृप्तप्रतियोगिरूप कारणाभावादेव विघ्नध्वंसरूपकार्य्यानुपपत्तौ मङ्गलकारणताया अबाधितत्वेन न तद्बोधकवेदाप्रामाण्यमिति भावः।

२३ अतएव नाशं प्रति प्रतियोगिनः कारणत्वादेव।

२४ तद्बोधकेति प्रायश्चित्तस्य पापनाशकत्वबोधकेत्यर्थः।

२५ कार्य्यतावच्छेदकसङ्कोचेन कारणान्तरजन्ये विघ्नध्वंसे व्यभिचार निरस्यति मङ्गलञ्चेति, तथाच स्वाव्यवहितोत्तरत्वोत्पत्तिकत्वसम्बन्धेन मङ्गलविशिष्टविघ्नध्वंसत्वं विजातीयविघ्नध्वंसत्वं वा मङ्गलस्य कार्य्यतावच्छेदकं, एवं दर्शितसम्बन्धेन विनाशकस्तवपाठादिविशिष्टविघ्नध्वंसत्वं विजातीय विघ्नध्वंसत्वं वा तत्तत्कार्य्यतावच्छेदकमिति न व्यभिचारः।

कारणं विघ्नध्वंसविशेषे च विनायकस्तवपाठादि २६ । क्वचिच्च २७ विघ्नात्यन्ताभाव एव समाप्तिसाधनं, प्रतिबन्धकसंसर्गाभावस्यैव २८ कार्य्यजनकत्वात् । इत्यञ्च २९ नास्तिकादिकृतग्रन्थेषु जन्मान्तरीय-मङ्गलजन्यदुरितध्वंसः स्वतःसिद्धविघ्नात्यन्ताभावो ३० वास्तीति न व्यभिचार इत्याहुः । संसारेति । संसार एव ३१ महीरुहो वृक्ष

---

२६ पाठस्य कण्ठताल्वाद्यभिघातरूपत्वान्न ज्ञानविशेषरूपमङ्गलत्वम् ।

२७ ननु विघ्नध्वंस एव यदि मङ्गलस्य फलं तदा समाप्तिकामस्य मङ्गले प्रवृत्तिर्नस्यादतः समाप्तिसाधनविघ्नध्वंससाधनत्वान्मङ्गले प्रवृत्तिर्वाच्या, तच्च न सम्भवति स्वतःसिद्धविघ्न-विरहस्थले व्यभिचारेण विघ्नध्वंसस्य समाप्तिसाधनत्वाभावादिति शङ्कां निरस्यति क्वचिदिति । तथाच विघ्नसंसर्गाभावत्वेन समाप्तिं प्रति हेतुत्वान्न स्वतःसिद्धविघ्नविरहस्थले व्यभिचार इति भावः ।

२८ ध्वंसादीनां संसर्गाभावत्वरूपेण कारणत्वे वीजमाह प्रतिबन्धकेति ।

२९ व्यतिरेकव्यभिचारं निषेधति इत्यञ्चेति विघ्नसंसर्गाभावत्वेन कारणत्वे च इत्यर्थः ।

३० दुरितध्वंसकल्पने तज्जनकीभूतमङ्गलकल्पने च गौरवादाह स्वतःसिद्धेति । अथ समाप्तिविघ्नध्वंसयोराकाशात्मनिष्ठयोः कथं कार्य्यकारणभाव इति चेदुच्यते स्वप्रतियोगि प्रयोजकत्वसम्बन्धेन चरमवर्णध्वंसरूपसमाप्तिं प्रति विशेषणतासम्बन्धेन विघ्नसंसर्गाभावत्वेन हेतुत्वमिति ।

३१ संसारस्य महीरुह इति षष्ठीतत्पुरुषभ्रान्तिं व्यावर्त्तयितुं कर्म्मधारयमाह संसार एवेति ।

स्तस्य वीजाय निमित्तकारणायेत्यर्थः ३२। एतेन ईश्वरेप्रमाणमपि दर्शितं भवति ३३। तथाहि यथा घटादिकार्य्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि, न च तत्कर्तृत्वमस्मदादीनं सम्भवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः। न च शरीराजन्यत्वेन कर्तृजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम् अप्रयोजकत्वात् ३४ मम तु कर्तृत्वेन कार्य्य·

---

३२ समवायिकारणत्वस्येश्वरे वाधितत्वादाह निमित्तेति।

२३ प्रमाणं अनुमानरूपं, कीदृशं तदनुमानमित्यावेदयितुमाह तथाहीत्यादि, तथाच चित्यङ्कुरादिकं सकर्तृकं कार्य्यत्वात् घटवदिति प्रयोगः। नन्वत्र किं पक्षतावच्छेदकं न तावत्क्षितित्वं अङ्कुरादेरपि क्षितित्वेन पृथक् तदुपादानवैयर्थ्यात्, किञ्च क्षितित्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे दृष्टान्ते घटादावंशतः सिद्धसाधनं, अवच्छेदावच्छेदेन, तथात्वे परमाणौ वाधः, जन्यक्षितित्वस्य पक्षतावच्छेदकत्वे परमते जन्यक्षितेरभावात् जन्यपदव्यावृत्त्यासिद्धिः, जन्यत्वस्यैव तथात्वसम्भवेन पक्षताच्छेदककोठौ क्षितित्वस्य वैयर्थ्यञ्च, नच जन्यत्वस्यापि पक्षतावच्छेदकत्वं सम्भवति पक्षावच्छेदकहेत्वोरैक्यप्रसङ्गादिति चेन्न स्वरूपसम्बन्धरूपकार्य्यत्वस्यैव पक्षतावच्छेदकत्वात् प्रागभावप्रतियोगित्वरूप कार्य्यत्वस्य हेतुत्वेन तयोरैक्याभावात्। साध्यं पुनः कृतिजन्यत्वमात्रं एवञ्च पक्षतावच्छेदकजन्यत्वाक्रान्ते ध्वंसेऽपि ईश्वरीयकृतिजन्यत्वस्य निराबाधतया न बाधस्य सम्भवः। नच कृतिजन्यत्वमात्रस्यसाध्यत्वे अदृष्टद्वाराऽस्मदीयकृतिजन्यत्वमादाय सिद्धसाधनमिति वाच्यम् अदृष्टाद्वारकत्वेन कृतिजन्यताया विशेषणीयत्वादिति दिक्।

३४ अप्रयोजकत्वादिति व्यभिचारशङ्कानिवर्त्तकानुकूलतर्काभावादित्यर्थः। इदमुपलक्षणं

द्रव्यं * गुणास्तथा कर्म सामान्यं सविशेषकम् ।
समवायस्तथाऽभावः पदार्थाः सप्त कीर्त्तिताः ॥२॥

त्वेन कार्य्यकारणभाव एव अनुकूलतर्कः ३५ । "द्यावाभूमी ३६ जनयन् देव एक आस्ते विश्वस्य कर्त्ता भुवनस्य गोप्ता" इत्यादय आगमा अप्यनुसन्धेयाः ॥२॥

---

शरीराजन्यत्वहेतौ शरीररूपविशेषणस्यासिद्धिवारकस्यापि व्यभिचारावारकत्वेन व्यर्थतया तद्विशेषणावच्छेदेन व्याप्तिग्रहासम्भवेन व्याप्यत्वासिद्धिश्चेत्यपि द्रष्टव्यम् ।

३५ तथाच कार्य्यत्वं यदि सकर्तृकत्वव्यभिचारि स्यात्तदा कृतिजन्यतावच्छेदकं नस्यादित्याकारक स्तर्क एव शङ्कानिवर्त्तक इति । ननु कार्य्यत्वावच्छिन्नं प्रति यदि कृतित्वेन कारणत्वं क्लृप्तं स्यात्तदेवोक्तानुकुलतर्कः सम्भवति तदेवतु नास्ति अन्वयव्यतिरेकाभ्यां घटत्वाद्यवच्छिन्नं प्रति कुलालादि कृतित्वेनैव हेतुत्वात्तादृशकार्य्यकारणभावे मानाभावादिति चेन्न घटत्वपटत्वादिभेदेनानन्तकार्य्यकारणभावकल्पनापेक्षया कार्य्यत्वावच्छिन्नं प्रति कृतित्वेनैकहेतुताकल्पनस्यैवोचितत्वात् । 'यद्विशेषे यद्विशेषस्य कारणत्वं तत्सामान्ये तत्सामान्यस्य' इति न्यायेन कार्य्यत्वकृतित्वाभ्यां सामान्यकार्य्यकारणभावस्यावश्यकत्वाच्च ।

३६ एवञ्चोक्तानुमानेनेश्वरसिद्धौ तदुच्चरितत्वेन वेदस्यप्रामाण्यनिश्चयाद्वेदोऽपि ईश्वरे प्रमाणमित्याह द्यावाभूमीइत्यादि । आदिना ईश्वरमुपासीतेत्यादीनां परिग्रहः ।

---

* मीमांसकमते गुणगतजातेरनङ्गीकारात गुणा इति बहुवचनम् । क्वचिद्गुण इत्येव पाठः । संयोगापेक्षया कर्म्मणोऽतिरिक्तत्वं नास्तीति भूषणमतं निराकर्तुं तथेत्युक्तं—

पदार्थानामुद्देशमाह। द्रव्यं गुणा इत्यादि। अत्र सप्तमस्याभावत्वकथनादेव ३७ षण्णां भावत्वं प्राप्तं, ३८ तेन भावत्वेन पृथगुपन्यासो न कृत:। एते च पदार्था वैशेषिकप्रसिद्धा नैयायिकानामप्यविरुद्धा: प्रतिपादितश्चैवमेव भाष्ये। अतएवोपमानचिन्तामणौ ३९ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामतिरिक्तपदार्थत्वमाशङ्कितम्। ननु ४० कथमेत एव पदार्था: शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात् तथाहि ४१ मण्यादिसमवहितेन वह्निना दाहो न जन्यते तच्छून्येन तु जन्यते, तत्र ४२ मण्यादिना वह्नौ दाहानुकूला शक्ति

---

यथागुण: पृथक्पदार्थ: तथा कर्म्मापीत्यर्थ:। अभावोऽधिकरणात्मक इति प्रभाकरमतमपाकर्तुं द्वितीयतथोपन्यास:, युक्तिश्चाग्रे वक्ष्यते।

३७। नन्वितरेषु ग्रन्थेषु षड्भावपदार्था: सप्तमस्त्वभाव इति निरूपितं तथैवात्र कुतो न निरूपितमित्याशङ्कयाह सप्तमस्येति।

३८। प्राप्तमिति अर्थादिति शेष:, तथाहि द्रव्यमित्यादिविभागवाक्यतया परस्परासङ्कीर्णव्याप्यधर्म्मकथनस्यैव विभागरूपतया द्रव्यादीनामभावत्वे अभावत्व विभाजकमेव नस्यादिति विभागव्याघातेन पारिशेष्यात् षण्णां भावत्वं प्राप्तमित्यर्थ:। भावत्वञ्च समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्वम्।

३९। षोड़शपदार्थानामेतत् सप्तपदार्थान्तर्भावे मणिकृत्सम्मतिमपि प्रमाणयति अतएवेति, षोड़शपदार्थानामवान्तर्भावादेवेत्यर्थ:, अन्यथा नैयायिकशिरोमणेर्मणिकृत: षोड़शपदार्थ भिन्नतयातिरिक्तत्वाशङ्कनस्यैव युक्ततया सप्तपदार्थभिन्नतया तदाशङ्कनं सर्व्वथैवायुक्तं स्यादिति भाव:।

४०। शक्तिसादृश्ययोरतिरिक्त पदार्थत्ववादिप्रभाकरमतं निरसितुमुपन्यस्यति नन्वित्यादिना।

४१। अतिरिक्तपदार्थत्वं व्यवस्थापयति तथाहीत्यादिना। मण्यादीत्यादिना मन्त्रौषध्यादिपरिग्रह:।

४२। ननु वह्नौ यदि दाहानुकूला शक्तिस्तदा मण्यादिसत्त्वे कुतो न दाह इत्याशङ्कयाह तत्रेति शक्तिसिद्धावित्यर्थ:, नाश्यत इत्यस्य कल्प्यत इत्यनेनान्वय:, तथाच वह्निनिष्ठशक्ति-

मणिसत्त्वे उत्तेजकेन ४३ मण्याद्यपसारणेन च जन्यत इति कल्प्यते। एवं ४४ सादृश्यमप्यतिरिक्तः पदार्थः, ४५ तद्धि ४६ न षट्पदार्थेष्वन्तर्भवति सामान्येऽपि सत्त्वात् यथा गोत्वं नित्यं तथा अश्वत्वमपीति सादृश्यप्रतीतेः। नाप्यभावे सत्त्वेन ४७ प्रतीयमानत्वादिति चेन्न ४८ मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण

---

त्वावच्छिन्नं प्रति मणित्वेन नाशकत्वस्वीकारेण मण्यादिसत्त्वदशायां शक्तेरभावादेव न दाहोत्पत्तिरिति भावः।

४३। ननु मण्यादेर्यदि शक्तिनाशकत्वं तदा सत्युत्तेजकविशिष्टे मण्यादौ मण्याद्यपसारणे वा पुनर्दाहो नस्यादित्यत आह उत्तेजकेनेति. सूर्य्यकान्तमण्यादिनेत्यर्थ, मण्याद्यपसारणेन चेत्यत्र चकारो वाकारार्थे। जन्यत इति दाहानुकूला शक्तिरित्यनुषङ्गेणान्वयः।

अत्र दाहं प्रति मण्यभावत्वेन हेतुत्वकल्पनात् वह्न्यतिरिक्तशक्तिकल्पनमन्तरेणापि मणिसमवधानकाले दाहापत्तिवारणसम्भवेऽपि मण्यभावत्वेन रूपेण स्वतन्त्रहेतुताकल्पने गौरवाद्विलक्षणशक्तिमत्तया वह्नेः कारणत्वकल्पनस्यैवौचित्यमिति प्राभाकराभिमानो मन्तव्यः। शक्तिसिद्धावपि "कथं तस्या अतिरिक्तत्व"मिति तु नाशङ्कनीयम् उक्तसप्तपदार्थेष्वनन्तर्भावात्, तदनन्तर्भावसाधकानुमानप्रयोगश्च—शक्तिर्न द्रव्यगुणकर्मान्यतमरूपा गुणादिवृत्तित्वात्, नापि सामान्याद्यन्यतमरूपा उत्पत्तिमत्त्वे सति विनाशित्वादिति।

४४। एवं शक्तिं प्रसाध्य सादृश्यस्याप्यतिरिक्तपदार्थत्वं स्थापयति एवमित्यादिना।

४५। अत्र षड्भावानन्तर्भूतत्वे सति अभावानन्तर्भूतत्वादिति हेतुः पूरणीयः।

४६। अत्र षड्भावानन्तर्भूतत्वं दर्शयति तद्धीत्यादिना। तथाचायं प्रयोगः—सादृश्यं षड्भावानन्तर्भूतं सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वादिति, अत्र सामान्यत्वे व्यभिचारवारणाय सत्यन्तं, गुणादौ व्यभिचारवारणाय विशेष्यम्, प्रमेयत्वादौ व्यभिचारवारणाय व्यतिरेकित्वेनापि हेतुर्विशेषणीय इति ध्येयम्।

४७। सत्त्वेन भावत्वेन, प्रतीयमाणत्वात प्रमीयमानत्वात्। यद्यप्यतिरिक्ताभावमनङ्गीकुर्व्वतः प्रभाकरस्य मते अभावान्तर्भावचिन्ता न सम्भवति तथापि परमतमभ्युपेत्येदं निराकरणमिति भावः।

४८। मणिसमवधानकालीनवह्निना दाहोत्पत्तिवारणाय प्रभाकरेण साधितां शक्तिं दूषयति मण्याद्यभावेति। दाहादिकमित्यादिना वह्नेः संग्रहः, मणिसत्त्वे वह्नेरप्यनुत्पत्तेः,

मण्यभावादेरेव ४९ वा हेतुता कल्प्यते, अनेनैव ५० सामञ्जस्ये अनन्तशक्ति तत्प्रागभावध्वंस कल्पनानौचित्यात्, न चोत्तेजके ५१ सति मणिप्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यम् उत्तेजकाभाव-विशिष्टमणिसामान्याभावस्य हेतुत्वात् ५२ । सादृश्यमपि न पदार्थान्तरं किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वं ५३ यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति ॥२॥

---

तथाच मणिसत्तायां मण्यभावरूपविशेषणाभावाद्विशिष्टाभावसत्त्वेन न दाहवह्नी सम्भवत:, विशेषणाभावस्य विशेष्याभावस्य विशेष्यविशेषणोभयाभावस्य च विशिष्टाभावप्रयोजकत्वादिति ध्येयं ।

४९ । मण्यभावविशिष्टवह्नित्वेन वह्निविशिष्टमण्यभावत्वेन वा कारणत्वमित्यत्र विशेष्य-विशेषणभावे विनिगमनाविरहेण गुरुतरकार्य्यकारणभावद्वयापत्तिरित्यत आह मण्यभावादेरिति । तथाच मणेरेव कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वान्न तत् सत्त्वे दाहापत्तिरिति ।

५० । ननु वह्निमण्यभावयोर्द्वयोर्हेतुत्वापेक्षयातिरिक्तशक्तेरेकस्या एव हेतुता युक्ता लाघवादित्यत आह अनेनैवेति ।

५१ । उत्तेजकत्वञ्च—प्रतिबन्धकसमानकालीनकार्य्यजनकत्वं, कारणीभूताभावप्रतियोगितावच्छेदकीभूताभावप्रतियोगित्वमिति यावत् । तथाच यादृश मणिविशेषसत्त्वे प्रतिबन्धक-मणिसत्त्वेऽपि दाह: स एवात्रोत्तेजक इति भाव: ।

५२ । तथाच केवलं मणिर्न प्रतिबन्धक: किन्तु उत्तेजकाभावविशिष्ट:, तदभावश्च उत्तेजकसमवहितमणिसद्भावेऽपि विशेषणाभावप्रयुक्त एव तिष्ठतीति न तत्र दाहापत्तिरिति ध्येयम् ।

५३ । "अथ गगनं गगनाकारं सागर: सागरोपम: । रामरावणयोर्युद्धं राम रावणयोरिव"त्यादौ तद्भिन्नत्वाभावादिदं लक्षणमव्याप्तमिति चेन्न तद्वृत्तिधर्म्ममात्रस्यैव तत्र विवक्षितत्वात् युगभेदप्रयुक्ततत्तद्युगविशिष्टगगनभेदविवक्षया भेदसत्त्वाद्वा अव्याप्तिविरहात् । अतएव

क्षित्यप्तेजोमरुद्व्योम कालदिग्देहिनो मनः ।
द्रव्याण्यथ गुणा रूपं रसो गन्धस्ततः परम् ॥३॥
स्पर्शः संख्या परिमितिः पृथक्त्वञ्च ततः परम् ।
संयोगश्च विभागश्च परत्वञ्चापरत्वकम् ॥४॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥५॥

द्रव्याणि विभजते—क्षित्यविति, क्षितिः पृथिवी, १ आपोजलानि तेजो वह्निः, मरुद्वायुः, व्योम आकाशः, कालः समयः, दिगाशा, देही आत्मा, मनः, एतानि नव द्रव्याणि इत्यर्थः । ननु द्रव्यत्वजातौ किं मानम् ? नहि तत्र प्रत्यक्षं प्रमाणं घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति २

---

युगभेद विवक्षायामतोपमालङ्कारः अन्यथा अनन्वयालङ्कार इत्यालङ्कारिकाः, तथाच "उपमानोपमेयत्वमेकस्यैवेत्यनन्वय" इति तल्लक्षणम् ।

नव्यास्तु साहश्याधिकरणत्व प्रतियोगित्वादीनां सप्तातिरिक्तत्वमेव, न चैवं पदार्थ विभाग व्याघात इति वाच्यं तस्य साक्षात् परम्परया वा तत्त्वज्ञानोपयोगि पदार्थमात्र निरूपण परत्वादित्याहुः ।

१ । क्षित्यादिशब्दानां क्षयादिलक्षण यौगिकार्थाशङ्कानिरासाय प्रकृतोपयोगिनोऽर्थान् दर्शयति क्षितिः पृथिवीत्यादिना ।

२ । तथाच घृतादिषु पण्डितानां शास्त्रकारीयवाक्यजन्य द्रव्यत्वभानसम्भवेपि पामराणां शास्त्रज्ञानाभावेन तदसम्भवात् सकलद्रव्यसाधारणद्रव्यत्वजातिसिद्धिर्न भविष्यतीति भावः । अयमभिसन्धिः मनुष्यत्वादि दृष्टा अनुगताकृतिव्यञ्जानामेव जातित्वं मन्यमानानां पामराणां

चेन्न कार्य्यसमवायिकारणतावच्छेदकतया, ३ संयोगस्य ४ विभागस्य ५ वा समवायिकारणतावच्छेदकतया च तत्सिद्धेरिति ६।

---

द्रवत्वजातिसिद्धिर्नैव सम्भवति नवद्रव्येष्वनुगताकृतेरभावात्। तत्र च नवद्रव्याणामनुगताकृतेः सम्भावना तावद्दूरमास्तां घृताद्येकैकद्रव्याणामपि सर्व्वदा नैकाकृतिः सम्भवति कठिनत्व द्रवत्वयोरनियतत्वादित्यावेदयितुं घटादिकं विहाय घृतजतु पर्य्यन्तानुधावनं कृतमिति मन्तव्यम्॥

३। कार्य्यत्वावच्छिन्न कार्य्यतानिरूपित कारणतावच्छेदकतयेत्यर्थः। अत्र कार्य्यतावच्छेदकसम्बन्धः समवायः कारणतावच्छेदकसम्बन्धस्तादात्म्यं, यत्र समवायेन कार्य्यं तत्र तादात्म्येन द्रव्यमिति नियमात्। कार्य्यतावच्छेदकीभूत कार्य्यत्वस्य सत्त्वविशिष्टप्रागभाव प्रतियोगित्वं मातो द्रव्यनिरूपित कार्य्यत्वाभाववति ध्वंसेऽपि प्रागभाव प्रतियोगित्वस्य सत्त्वे-नातिप्रसक्त्या द्रव्यनिरूपित कार्य्यतावच्छेदकत्वानुपपत्तिः तत्र सत्त्वस्याभावेन तद्विशिष्ट-स्याप्यभावादिति मन्तव्यम्। तथाच कार्य्यत्वावच्छिन्न कार्य्यतानिरूपितकारणता किञ्चि-द्धर्मावच्छिन्ना कारणतात्वादिति तत्साधकानुमानलाभः। एवमग्रेऽप्यनुमानप्रयोगः स्वयमूह-नीय इति।

४। कार्य्यत्वस्य कार्य्यतावच्छेदकत्वे गौरवात् कालिकसम्बन्धेन घटत्वादिकमादाय विनिगमनाविरहाच्चोक्त कार्य्यकारणभावे मानाभाव इत्यत आह संयोगस्येति।

५। विभुद्वय संयोगाङ्गीकर्त्तृमते तत्संयोगस्य नित्यतया संयोगत्व मप्यतिप्रसक्त मतस्तन्मत साधारण्येनाह विभागस्येति।

६। जातिरूपद्रव्यत्वसिद्धेरित्यर्थः, क्वचित्तथैव पाठः। तथाहि दर्शितानुमानेन तत्तत् कारणतावच्छेदक किञ्चिद्धर्म्मसिद्धिः स च धर्म्मोद्रव्यत्वं तस्य च वक्ष्यमाणबाधकाभावाज्जातित्व-मिति। अत्र यद्यपि गुणत्वेनान्यथासिद्धिः सम्भवति तथापि साक्षात्सम्बन्धधर्म्मबाधे सत्ये

ननु ७ दशमं द्रव्यं तमः कुतो नोक्तं तद्धि प्रत्यक्षेण गृह्यते तस्य च रूपवत्त्वात् कर्म्मवत्त्वाच्च द्रव्यत्वं, तच्च गन्धशून्यत्वात् न पृथिवी, नील रूपवत्त्वाच्च न जलादिकं, ८ तत्प्रत्यक्षे ९ चालोकनिरपेक्षं चक्षुः कारणम् इति चेन्न, आवश्यकतेजोऽभावेनोपपत्तौ १० द्रव्यान्तरकल्पनाया अन्याय्यत्वात्। रूपवत्ताप्रतीतिस्तु भ्रमरूपा, कर्म्मवत्त्वप्रतीतिरपि

---

वानुमितेः परम्परासम्बन्ध धर्मीविषयत्वमिति मन्तव्यम्। इदमुपलक्षणं द्रव्यवति द्रव्यान्तरानुत्पत्त्या समवायेन द्रव्यस्य प्रतिबन्धकत्वं कल्पनीयमिति तत्प्रतिबन्धकतावच्छेदकतयापि द्रव्यत्व जाति सिद्धिरिति।

७। ननु दशमद्रव्यस्य तमसः सत्त्वान्नवद्रव्याणीत्ययुक्तमित्यभिप्रायेण मीमांसकः शङ्कते नन्विति। प्रत्यक्षेण चक्षुरिन्द्रियेणेत्यर्थः।

८। तथाचोक्तं—तमस्तमालवर्णाभं चलतीति प्रतीयते।

रूपत्त्वात् क्रियावत्त्वाद् द्रव्यन्तु दशमन्तमः॥

अन्यच्च—तमः खलु चलं नीलं परापर विभागवत्।

प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥

९। ननु तमसो द्रव्यत्वे आलोक निरपेक्षेण चक्षुरिन्द्रियेण ग्रहो न स्यात् द्रव्यग्रहे हि आलोकसापेक्ष चक्षुरिन्द्रियस्य हेतुत्वादित्यत आह तत्प्रत्यक्षे चेति—तमः प्रत्यक्षेत्यर्थः। तमोभिन्न द्रव्य चाक्षुषत्वावच्छिन्नं प्रत्येव संयोगसम्बन्धेनालोकत्वेन कारणत्वावधारणादिति भावः।

१०। अन्धकाराभाव एव तेजः किं नस्यादिति तु न सम्यक् उष्णस्पर्श भास्वररूपवत्त्व बुद्धेरनुपपत्तेरिति सूचनायावश्यकपदम्। उपपत्तौ तमोव्यवहारोपपत्तौ।

उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा।
प्रसारणञ्च गमनं कर्माण्येतानि पञ्च च ॥६॥
भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च।
तिर्य्यग्गमनमप्यत्र गमनादेव लभ्यते * ॥७॥

आलोकापसारणौपाधिको भ्रान्तिरेव ११ तमसोऽतिरिक्तत्वेऽनन्तावयवादिकल्पनागौरवञ्च स्यात्। स्वर्णस्य १२ यथा तेजस्यन्तर्भावस्तथा वक्ष्यते।

गुणान् विभजति। अथ गुणा इति। एते गुणाश्चतुर्विंशति-

---

११। ननुप्रतीतेर्भ्रान्तित्वं तत्रैव स्वीक्रियते यत्रोत्तरकाले बाधज्ञानं, प्रकृते चोत्तरकाले तमो न चलतीति बाधज्ञानाभावात् कथं प्रतीतेर्भ्रान्तित्वमित्यतो दूषणान्तरमाह तमस इति। एतेन तेजस एवान्धकाराभावरूपत्वमङ्गीकृत्य तत्र रूपवत्त्वादिप्रतीतिर्भ्रान्तिरिति च कथं नाङ्गीक्रियतामित्यपि निरस्तमिति मन्तव्यम्। अवयवादीत्यादिना उत्पत्ति परिग्रहः।

१२। ननु तमसोऽनतिरिक्तत्वेपि सुवर्णस्यातिरिक्तस्य द्रव्यस्य सत्त्वान्नवत्वव्याघातस्तदवस्थ एवेत्याह सुवर्णस्येति। वक्ष्यत इति तेजोनिरूपणावसरे इति शेषः।

---

* अथैवमुत्क्षेपणादीनामपि गमनादेव लाभसम्भवादुत्क्षेपणत्वादिभिरपि विभागोऽनुचित इति चेन्न स्वतन्त्रेच्छस्य मुनेर्नियोगे पर्य्यनुयोगानर्हत्वादिति केचित्। वस्तुतस्तु लोष्टमुत्क्षिपति चैव इत्यादि प्रयोग दर्शनात् लोष्टादिनिष्ठ गत्यनुकूलचेतन व्यापार एव उत्क्षेपणादिपदार्थः, गमनं पुनरुत्तरदेश-संयोगानुकूलव्यापारमात्रमित्यतोगमनेनोत्क्षेपणादीनामलाभात् पृथगुपादानमिति मन्तव्यम्।

सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥८॥

संख्यकाः कणादेन कण्ठतः १३ च शब्देन च दर्शिताः। तत्र गुणत्वादिकजातिसिद्धिरग्रे १४ वक्ष्यते ॥३॥ ॥४॥ ॥५॥

कर्माणि विभजते। उत्क्षेपणमिति, कर्म्मत्वजातिस्तु प्रत्यक्षसिद्धा २५ एवमुत्क्षेपणत्वादिकमपि। नन्वत्र भ्रमणादिकमपि पञ्चकर्माधिकतया कुतो नोक्तमत आह भ्रमणमित्यादि ॥६॥ ॥७॥

सामान्यं निरूपयति—सामान्यमिति, तल्लक्षणन्तु नित्यत्वे सति अनेकसमवेतत्वम्, अनेकसमवेतत्वं संयोगादीनामप्यस्त्यत उक्तं नित्यत्वे सतीति,नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तम् अनेकेति,नित्यत्वे सति अनेकवृत्तित्वमत्यन्ताभावेऽप्यस्त्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तम् एकमात्रव्यक्तिवृत्तिस्तु न जातिः तथाचोक्तम्—

---

१३। कण्ठत इति—"रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणा" इति सूत्रे सप्तदश कण्ठेनोक्ताः, सूत्रस्थ च शब्देन गुरुत्वद्रवत्वस्नेहसंस्कारधर्म्माधर्म्मशब्दाः समुच्चिताः, ते च सर्व्वे एकसंख्यकतया चतुर्व्विंशतिगुणा इति व्यवहृताः। संख्या चात्र विषयतया अपेक्षाबुद्धिरूपैव गुणे गुणानङ्गीकारादिति मन्तव्यम्।

१४। अग्रे—गुणनिरूपणप्रस्तावे, वक्ष्यत इति—द्रव्यकर्म्मभिन्न सामान्यवति या कारणता सा किञ्चिद्धर्म्मावच्छिन्ना कारणतात्वादित्यनुमानं गुणत्वजातौ प्रमाणमिति भावः।

१५। चलनाकारानुगतप्रत्ययवेद्येत्यर्थः।

परभिन्ना च या जातिः सैवापरतयोच्यते।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥९॥

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिवाधकसंग्रहः॥ १

एकव्यक्तिकत्वादाकाशत्वं न जातिः, तुल्यव्यक्तिकत्वात् घटत्वं कलसत्वं न जातिद्वयं, सङ्कीर्णत्वात् भूतत्वं भूर्त्तत्वं न जातिः,

---

१। व्यक्तेरित्यादि—व्यक्तेः—स्वाश्रयव्यक्तेः, अभेदः ऐक्यं आकाशत्वादेर्जातित्वे वाधकं। तुल्यत्वं स्वभिन्नजाति समनियतत्वं. तथाच समनियतत्वान्न घटत्वं कलसत्वञ्च जातिद्वयम्। परस्परात्यन्ताभावसमानाधिकरणयो रेकत्र समावेशः सङ्करः, सच भूतत्वादेर्जातित्वे वाधकः तथाहि—भूतत्वं विहाय मनसि वर्त्तमानस्य मूर्त्तत्वस्य मूर्त्तत्वं विहाय गगणे वर्त्तमानस्य भूतत्वस्य पृथिव्यादिचतुष्टये सत्त्वेन निरुक्त साङ्कर्य्यसत्त्वान्न भूतत्वादीनां जातित्वमिति भावः। साङ्कर्य्यस्य जातिवाधकत्वे किं मानमिति चेत् "स्वसामानाधिकरण्य स्वाभावसामानाधिकरण्योभय सम्बन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगित्वाभाव" इति नियमस्य भङ्गप्रसङ्ग एवेति। तादृशनियमे मानाभावान्न साङ्कर्य्यं जातिवाधकमिति नव्याः। अप्रामाणिकानन्त पदार्थकल्पनाया अविश्रान्तिरनवस्था, सा च जातेर्जातिमत्त्वे वाधिका, तथाहि—घटत्व पटत्वादि निखिलजातिषु अनुगतस्य जातित्वस्य जातित्वाङ्गीकारे तत्रापि जातित्वमभ्युपेयं तस्य च निखिलजातिवृत्तित्वात्तत्रापि पुनर्जातित्वमेवं तत्र तत्रेत्यनवस्थेति भावः। यद्यपि निखिलजातिष्वेकवैजात्याङ्गीकारेपि तद्वैजात्ये न वैजात्यन्तरं कल्पनीयं तस्यैकव्यक्तिवृत्तित्वादिति नानवस्था तथापि निखिलजातिष्वेक वैजात्यं तद्वैजात्य तदाश्रितजातिषु पुनर्व्वैजात्यमेवमग्रे अग्रेपीत्यनवस्था वदवस्थैवेति ध्येयं। रूपहानिरिति—रूपस्य—स्वतोव्यावर्त्तकत्वरूपलक्षणस्य, हानिः—भङ्गः, तथाहि—सामान्याश्रयस्य सामान्यरूपेणैव भेदसाधकत्वनिश्चयात् विशेषेजातिस्वीकारे तथैव व्यावर्त्तकत्वस्य वाच्यतया विशेषस्य स्वेनरूपेण व्यावर्त्तकता नैव सम्भवतीति भवति विशेषस्य

व्यापकत्वात् परापि स्याद्व्याप्यत्वादपरापि च।
अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तितः ॥१०॥

अनवस्थाभयात् सामान्यत्वं न जातिः, विशेषस्य व्यावृत्तस्वभावस्य रूप हानिः स्यात् अतो विशेषत्वं न जातिः, समवायसम्बन्धाभावात् समवायाभावत्वयो र्न जातित्वं ॥ २ ॥

द्रव्यादीति। परत्वम् अधिकदेशवृत्तित्वम्, अपरत्वम् अल्पदेशवृत्तित्वम्। सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वम्, एतद्‌बोधनायैव द्रव्यादित्रिकवृत्तिरित्युक्तम्, तदपेक्षया ३ चान्यासां जातीनामपरत्वम्। परभिन्ना सत्ताभिन्ना, व्यापकत्वादिति—पृथिवी-

---

जातिसत्त्वे तादृश लक्षणव्याघात इति भावः। असम्बन्ध इति—प्रतियोगित्वानुयोगित्वान्यतर-सम्बन्धेन समवायाभावः। नचाभावत्वादेर्जातित्वाङ्गीकारे उक्त लक्षणानुसारात् समवायेनैव तत्सत्त्वमङ्गीकार्य्यं तथाचोक्तान्यतरसम्बन्धेन समवायाभावो नाभावादावुभयवादिसिद्ध इति कथं तेन हेतुना अभावादौ जातिसत्त्वाभावः सिध्यतीति वाच्यं समवायपदेन जात्यतिरिक्त प्रतियोगिकत्व विशिष्ट समवायस्य विवक्षितत्वात्। तथाचाभावादौ निरुक्तसम्बन्धेन समवाया भावस्योभयवादि सिद्धत्वाभावेपि निरुक्तविशिष्टसमवायाभावस्य सर्व्ववादिसिद्धत्वान्नासङ्गतिः। अथवा निरुक्तान्यतरघटकानुयोगितापदं सत्तावन्निष्ठोभयवादि सिद्धं यत् समवायानुयोगित्वं तत् परमतः समवायपदस्य यथाश्रुतार्थपरत्वेपि न क्षतिरितितत्त्वं, एवञ्च—जात्यतिरिक्त प्रतियोगि-कत्व विशिष्टसमवायस्य प्रतियोगितया अनुयोगितया च असत्त्वेन जातेर्जातिमत्त्वेपि निरुक्त सम्बन्धस्यैव बाधकत्वसम्भवादनवस्थाया जातिबाधकत्वेनोक्तिर्व्यर्थेत्यपि निरस्तमित्यवधेयं।

२। एकव्यक्तिकत्वादित्यादि समवायाभावत्वयोर्नजातित्वमित्यन्त पाठस्तु बहुष्वेव पुस्तकेषु नास्ति दिनकरीपर्य्यालोचनेन च नैष मौलिक इत्येव प्रतिभाति तथापि छात्राणां सुखबोधाय न परिहृत इति मन्तव्यम्।

३। तदपेक्षया—सत्तापेक्षयेत्यर्थः। सत्ताजातिश्च द्रव्यं सत् गुणः सन्नित्याद्यनुगतप्रतीत्या

**घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।**
**तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः ॥११॥**

त्वाद्यपेक्षया व्यापकत्वादधिकदेशवृत्तित्वात् द्रव्यत्वादेः परत्वं, सत्तापेक्षया व्याप्यत्वात् अल्पदेशवृत्तित्वाच्च द्रव्यत्वस्यापरत्वं तथाच धर्मद्वयसमावेशादुभयमविरुद्धम् ॥

विशेषं निरूपयति—अन्त्य इति, अन्ते अवसाने वर्त्तत इत्यन्त्यः, यदपेक्षया विशेषो नास्तीत्यर्थः। घटादीनां द्व्यणुकपर्य्यन्तानां तत्तदवयवभेदात् परस्परं भेदः। परमाणूनां परस्परभेदको विशेष एव, स तु स्वत एव व्यावृत्तः ४ तेन तत्र ५ विशेषान्तरापेक्षा नास्तीति भावः ॥८।९।१०॥

समवायं दर्शयति—घटादीनामिति, अवयवावयविनो ६ जाति-

---

ध्वंसकारणतावच्छेदकतया च सिध्यति, यत्र प्रागभाववृत्तिप्रतियोगिता भिन्न प्रतियोगिता सम्बन्धेन ध्वंसोत्पत्तिस्तत्रैव तादात्म्यसम्बन्धेन सदिति सामानाधिकरण्यप्रत्यासत्त्या कार्य्यकारणभावादिति ।

४। अन्ते—व्यावर्त्तकानामवसाने वर्त्तत इति व्युत्पत्त्या मूलस्यान्त्य पदेनैव यस्य व्यावर्त्तकान्तरं नास्ति तत्त्वमित्यर्थलाभात् स्वतोव्यावृत्तत्वरूपान्त्यत्वमेव विशेषस्य लक्षणम्, नित्यद्रव्यवृत्तिरिति तु विशेषाणां स्थानकथनं नतु लक्षणे प्रविष्टं प्रयोजन विरहात्, स्वतोव्यावृत्तत्वञ्च—स्वभिन्नलिङ्गजन्य स्वविशेष्यक स्वसजातीयेतरभेदानुमित्य विषयत्वं, साजात्यञ्च—पदार्थविभाजकरूपेणेति न काचिदनुपपत्तिरिति ध्येयं।

५। तत्र—विशेषव्यावृत्तौ। नवीनास्तु विशेषे अतिरिक्ते मानाभावः, यथैव विशेषाणां स्ववृत्तिधर्मं विना व्यावृत्तत्वं तथैव नित्यद्रव्याणामपीत्याहुः ।

६। मूलस्थघटपदकपालपदयोरवयव्यवयवपरत्वमभिसन्धायाह अवयवावयविनोरिति ।

व्यक्तयोर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च ७ यः सम्बन्धः स समवायः। समवायत्वं ८ नित्यसम्बन्धत्वं, तत्र प्रमाणन्तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवत् इत्यनुमानं, एतेन संयोगादिबाधात् समवायसिद्धिः। न च स्वरूपसम्बन्धेन सिद्धसाधनम् ९ अर्थान्तरं वा १० अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवात् लाघवादेकसमवायसिद्धिः। न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः तत्र रूपसमवायसत्त्वेऽपि रूपाभावात् ११। न चैवम्

---

७। मूलस्थचकारेण नित्य द्रव्येषु विशेषस्य सम्बन्धः समुच्चीयत इत्याह नित्यद्रव्य विशेषयोरिति।

८। समवायस्य लक्षणमाह—नित्यसम्बन्धत्वमिति। सम्बन्धश्चात्र सम्बन्धिभिन्नो ग्राह्यः, तथाच—सम्बन्धप्रतियोग्यनुयोगिभिन्नत्वे सति नित्यत्वे च सति सम्बन्धत्वमिति समवाय लक्षणं पर्य्यवसितं, तेन नित्यभावादिरूपस्वरूपसम्बन्धे प्रतियोग्यनुयोगित्वात्मक सम्बन्धे च नातिव्याप्तिरिति। अयुतसिद्धानामाधार्य्याधारभूतानामिह प्रत्ययहेतुर्यः सम्बन्धः स समवाय इति वैशेषिकभाष्यसम्मतं लक्षणं, तत्रायुतसिद्धत्वञ्च—परस्परपरिहारेण पृथगाश्रयाश्रयित्वं युतसिद्धत्वं तन्नास्ति येषां तत्त्वमित्यनुसन्धेयम्।

९। अयुतसिद्धयोः स्वरूपसम्बन्ध इति वदतः परस्येति शेषः।

१०। समवायसाधने प्रवृत्तानां नैयायिकानामिति शेषः। अर्थान्तरशब्दस्य स्वानभिमतार्थ सिद्धिरित्यर्थः।

११। नच रूपसमवायसत्त्वे तेन सम्बन्धेन कथं तत्र रूपाभावः तत् सम्बन्धसत्तायास्तेन सम्बन्धेन सम्बन्धिसत्तानियामकत्वादिति वाच्यं रूपनिरूपितत्वविशिष्ट समवायस्यैव रूपसम्बन्धतया

अभावस्य वैशिष्ट्य सम्बन्धान्तरं सिध्येदिति वाच्यं तस्य १२ नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात् घटाभावस्य तत्र सत्त्वात्, तस्य १३ नित्यत्वात्, अन्यथा देशान्तरेऽपि तत्प्रतीति नं स्यात् १४ वैशिष्ट्यस्य च तत्र सत्त्वात्, १५ मम तु १६ मते घटे पाकरक्तता-दशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धि:। वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवम्। इत्यञ्च तत्तत्कालीनं १७ तत्तद्भूतलादिकं तत्तदभावानां सम्बन्ध: ॥१३॥

---

वायौ तदभावात्। नच विशिष्टस्यानतिरिक्तत्वेन विशिष्ट समवायोपि वायौ वर्त्तते इति वाच्यं विशिष्टस्यानतिरिक्तत्वमते रूपनिरूपितत्वविशिष्ट समवायनिरूपिताधिकरणताया एव रूपसम्बन्ध-तया वायौ तस्या अभावादिति ध्येयम्।

१२। वैशिष्ट्यस्य।

१३। घटाभावस्य।

१४। अन्यथा—घटाभावस्यानित्यत्वे, देशान्तरेपि—घटशून्य देशेपीत्यर्थ:। नस्यादिति—घटसामान्याभावस्यैकत्वादिति भाव:।

१५। वैशिष्ट्यस्येति—वैशिष्ट्यस्य नित्यत्वाभ्युपगमपक्षे इत्यादि:। तत्र—घटानयनेन घटवति। न च घटवति न घटाभावबुद्धि: घटवत्त्वज्ञानस्य प्रतिबन्धकस्य सत्त्वादिति वाच्यं घटवत्ताज्ञानविरहदशायां जायमानाया घटाभावबुद्धे: प्रमात्वप्रसङ्गादित्यत्र तात्पर्यात्।

१६। ननु सिद्धान्तिनोपि मते पाकेन रक्ते घटे श्यामरूपसमवायस्य सत्त्वात् श्यामरूप-वत्ताधीप्रसङ्ग इत्यत आह ममत्विति।

१७। तत्तत्कालीनं—घटाभाववद्भूतलमिति ज्ञानकालीनं, तत्तद्भूतलादिकं—यत्र यत्र भूतले घटाभावबुद्धिस्तत्तद्भूतलादिकं, तत्तदभावानां—यस्य यस्याभावस्य बुद्धिस्तस्य तस्येत्यर्थ:।

**अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।**
**प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥**
**एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ॥१२॥**

अभावं विभजते—अभावस्त्विति, अभावत्वं द्रव्यादिषट्कान्योऽन्याभाववत्त्वम् । [१८] संसर्गेति संसर्गाभावान्योन्याभावभेदादित्यर्थः [१९] अन्योन्याभावस्यैकविधत्वात् तद्विभागाभावात् संसर्गाभावं विभजते—प्रागभाव इति । संसर्गाभावत्वम् अन्योन्याभावभिन्नाभावत्वम् । अन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं । विनाश्यभावत्वं प्रागभात्वं, [२०] जन्याभावत्वं ध्वंसत्वं, नित्यसंसर्गाभावत्वम्

---

तथाच—न स्वरूपमात्रं सम्बन्धः किन्तु ईदृशः स्वरूपविशेषः, एवञ्च—घटशून्यतादशायामिव घटवत्वदशायामपि न भूतले घटाभाव प्रसङ्ग इत्यवधेयम् ।

१८। अत्रान्योन्याभावप्रतियोगितावच्छेदकं न द्रव्यत्वादिकमननुगमात्, नापि तद्गता षट्त्व संख्या तदवच्छिन्न प्रतियोगिताकभेदस्य उभयादिभेदवत् केवलान्वयितया द्रव्यादावतिव्याप्त्यापत्तेः किन्तु भावत्वमेव, तथाच भावभिन्नत्वमेवाभावलक्षणं पर्य्यवसितमिति ध्येयम् ।

१९। द्वन्द्वात्परं श्रूयमाणस्याभावपदस्य प्रत्येकं सम्बन्धात् संसर्गाभावान्योन्याभाव भेदादिति मूलार्थः सङ्गच्छत इति बोध्यं ।

२०। ननु प्रागभावसत्त्वे किं मानमिति चेत् अवोत्पन्नस्य पुनरुत्पादभिया तत्सिद्धिरिति प्राञ्चः । तथाच अयं घटः स्वोत्पत्तिक्षणावृत्तिकारणजन्यः द्वितीयक्षणानुत्पन्नत्वादित्येवंरूपानुमानबलादितरेषां वाधेन प्रागभावसिद्धिः प्रागभावस्य सामग्रीनाश्यतया प्रतियोगिक्षणावृत्तित्वादिति भावः ।

अत्यन्ताभावत्वम्। यत्र २१ तु भूतलादौ घटादिकमपसारितं पुनरानीतञ्च तत्र घटकालस्य सम्बन्धाघटकतया अत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः। तत्र उत्पादविनाशशाली चतुर्थोऽयमभाव २२ इति केचित्। अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचीनमतं, श्यामघटे २३ रक्तो नास्तीति रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसञ्चावगाहते न तु तदत्यन्ताभावम्। नव्यास्तु तत्र २४ विरोधे मानाभावात् ध्वंसादिकालावच्छेदे-

---

२१। नन्वत्यन्ताभावस्य नित्यतायां घटानयनानन्तरमपि भूतले घटोनास्तीति प्रतीत्यापत्तिरत आह यत्रेति। तथाच—सम्बन्धाभावादेव घटानयनानन्तरं न घटात्यन्ताभावबुद्धिरिति भावः।

२२। समयविशेषे प्रतीयमानतया सामयिकाभाव इत्यर्थः। कालविशेषविशिष्ट स्वरूपस्य सम्बन्धतोपगमादेव घटवति घटो नास्तीत्यभाव प्रतीत्यभावोपपत्तौ चतुर्थ संसर्गाभावे मानाभाव इत्यस्वरसः केचिदित्यनेन सूचितः।

२३। श्यामघट इति—रक्तरूपप्रागभावाधिकरण इति शेषः, रक्तघट इति श्यामरूप ध्वंसाधिकरण इतिशेषः तावतैव प्रागभावध्वंसाधिकरणतया नास्तीति प्रतीतिविषयात्यन्ताभावः कथमित्यापत्तेः सम्भवादित्यवधेयम्। अवगाहत इति—विषयीकरोतीत्यर्थः।

२४। तत्रेति—ध्वंसप्रागावयोरित्यर्थः, अत्यन्ताभावेन सहेति शेषः। तयाच—नव्यमते दर्शित स्थले अत्यन्ताभावावगाहित्वमेवेष्टमिति भावः। युक्तञ्चैतत् कथमन्यथा अन्तराश्यामी रक्तं रूपं नास्तीत्याकारकः प्रत्ययस्तस्य सामान्याभावावगाहित्वात्, नचेदृश प्रत्ययो रक्तिम ध्वंसाद्यवगाही पूर्व्वापर रक्तिमध्वंसप्रागभाववति इदानीं रक्तेऽपि तादृशाकार प्रत्ययप्रसङ्गादिति ध्येयम्।

सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥१३॥
द्रव्यादयः पञ्च भावा अनेके समवायिनः।
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥१४

नाप्यत्यन्ताभावो वर्त्तत इति प्राहुः। नन्वस्तु २५ अभावानामधिकरणात्मकत्वं लाघवादिति चेन्न अनन्ताधिकरणात्मकत्वकल्पनामपेक्ष्यातिरिक्तकल्पनाया एव लघीयस्त्वात्, एवञ्च २६ आधाराधेयभावोऽप्युपपद्यते। एवञ्च २७ तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते, अन्यथा २८ तत्तदधिकरणानां तत्तदिन्द्रियाणामग्राह्यत्वादप्रत्यक्षत्वं स्यात्। एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमत्यन्ताभावस्येति प्रत्युक्तम् अप्रत्यक्षत्वापत्तेः॥ १२॥

---

२५। नन्वभावस्तु त्रिधेतिविभागोऽनुपपन्नः अभाव एवमानाभावादित्यभिप्रायेण प्राभाकरः शङ्कते नन्विति।

२६। अभावस्याधिकरणात्मकत्वे अभीष्टे आधाराधेयभावानुपपत्तिरूपोदोषः सोऽप्यस्मिन् मते नेत्याह एवञ्चेति—अधिकरणापेक्षया अतिरिक्तत्वे च इत्यर्थः।

२७। नन्वभावाधिकरणकाभावस्या धिकरणात्मकत्वे, यथाधाराधेयभावोपपत्ति स्तथा सर्व्वाप्यस्त्वित्यतो दूषणान्तरमाह एवञ्चेति।

२८। अन्यथा—अभावस्याधिकरणात्मकत्वे, तथाहि—येनेन्द्रियेण यो गृह्यते तदभावोपि तेनैवेन्द्रियेण गृह्यत इति नियमात्। जलवृत्ति गन्धाभावस्यप्रत्यक्षं नस्यात् जलस्य घ्राणेन्द्रियाग्राह्यत्वादिति भावः। अत्र च गन्धाभावस्य जलादिरूपत्वे जलत्वादिनैव तेषां न घ्राणेन्द्रियग्राह्यता गन्धाभावत्वेन तु तेषामपि तथात्वमिष्टमेवेति प्राभाकराणामभिप्राय इति मन्तव्यम्।

इदानीं २९ पदार्थानां साधर्म्यं वैधर्म्यञ्च वक्तुं प्रक्रमते समानामित्यादि। समानो धर्मो येषां ते सधर्माणः तेषां भावः साधर्म्यं समानो धर्म्म इति फलितार्थः। एवं विरुद्धो धर्म्मो येषां ते विधर्म्माणः तेषां भावः वैधर्म्यं विरुद्धो धर्म्म इति फलितार्थः। ज्ञेयत्वं ज्ञानविषयता सा च सर्वत्रैवास्ति ईश्वरादिज्ञानविषयतायाः केवलान्वयित्वात् ३० एवम् अभिधेयत्वप्रमेयत्वादिकं बोध्यम् ३१॥१३॥

द्रव्येति। द्रव्यगुणकर्म्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वञ्च। यद्यप्यनेकत्वम् अभावेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यं ३२ तथाच अनेकभाववृत्तिपदार्थविभा-

---

२९। परस्परधर्म्मतापन्नानां सप्तपदार्थानामिव परस्परभेदकत्वं ज्ञापयितुमाह इदानीमिति—पदार्थनिरूपणानन्तरमित्यर्थः।

३०। विषयभेदेन विषयताया भेदेपि ज्ञानविषयतात्वेन केवलान्वयित्व मस्त्येवेति भावः।

३१। अभिधेयत्वं अभिधाविषयत्वं, अभिधा च—सङ्केतग्राह्योऽधिकः पदार्थ इति मीमांसकाः, सङ्केतभिन्नायामभिधायायां मानाभावात् सङ्केत एवाभिधेति नैयायिकाः। प्रमेयत्वादिकमित्यादिना अस्तित्व परिग्रहः, अस्तित्वञ्च—सम्बन्धित्वं।

३२। एषञ्च मूले द्रव्यादयः पञ्चेत्युद्देश्यपदं, भावा अनेके इति विधेयपदमिति बोध्यं। अतएव भाष्ये पञ्चानामित्युक्तं नतु पञ्चभावानामिति।

जकोपाधिमत्त्वं २३ फलितार्थः तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः। समवायित्वं समवायसम्बन्धेन सम्बन्धित्वं न तु समवायवत्त्वं सामान्यादावभावात् तथाच समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं फलितार्थः तेन नित्यद्रव्येषु नाव्याप्तिः। सत्तावन्त इति—द्रव्यगुणकर्म्मणां २४ सत्त्वावत्त्वमित्यर्थः। गुणादिरिति—यद्यपि गुणक्रियाशून्यत्वमात्रलक्षणे घटादावतिव्याप्तं, २५ क्रियाशून्यत्वञ्च गगनादावतिव्याप्तं, तथापि गुणवदवृत्तिधर्म्मवत्त्वं कर्म्मवदवृत्ति-

---

२३। अत्र च अनेकभाववृत्तित्वं—स्वप्रतियोगिवृत्तित्व स्वसमानाधिकरणोभयसम्बन्धेन भेदविशिष्टत्वे सति भाववृत्तित्वं, तेन गुणादौ संख्यारूपस्यानेकत्वस्याभावेपि एकभिन्नत्वादिरूपस्यानेकत्वस्यातिप्रसङ्गाद्यवारकत्वेपि च सति न क्षतिः। अत्र च अभावत्ववारणाय भाववृत्तित्वनिवेशः समवायत्ववारणाय सत्यन्त निवेशः, सत्यन्ते उभयसम्बन्धनिवेशोपि तद्वारणायैवेति ध्येयम्। भावत्वरूपतादृशधर्म्ममादाय समवायिऽति व्याप्तिवारणाय (मुक्तावल्यां) पदार्थविभाजकोपाधीति, पदार्थविभाजकत्वञ्च—पदार्थवृत्तित्वे सति भावपदार्थवृत्ति भेदप्रतियोगितावच्छेदकत्वे सति पदार्थवृत्तिभेदप्रतियोगितावच्छेदकविशिष्टान्यत्वं, वैशिष्ट्यञ्च—स्वसामानाधिकरण्य स्वसमानाधिकरण भेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन। एवमेव द्रव्यादिविभाजकत्व लक्षणमपि स्वयमूयनीयम्।

२४। उद्देश्यवाचकपदस्य चरममुपादानमयुक्तमिति योजनया तदर्थं प्रदर्शयति द्रव्यगुणकर्म्मणामिति।

२५। तद्गत गुणादिकं प्रति तस्य कारणत्वात् कारणस्य च पूर्व्वक्षणवृत्तित्वनियतत्वात् उत्पन्नं द्रव्यं क्षणं गुणक्रियाशून्यं तिष्ठतीति नियमादित्यर्थः।

**सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः।**

**पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥१५॥**

पदार्थविभाजकोपाधिमत्त्वं ३६ तदर्थः, नहि घटत्वादिकं द्रव्यत्वं वा गुणवदवृत्ति कर्म्मवदवृत्ति वा किन्तु गुणवत्त्वादिकं तथा। आकाशत्वादिकन्तु ३७ न पदार्थविभाजकोपाधिः ॥१४॥

सामान्येति। सामान्यानधिकरणत्वं ३८ सामान्यादीनामित्यर्थः। पारिमाण्डल्येति—पारिमाण्डल्यम्—अणुपरिमाणं, कारणत्वं तद्भिन्नानामित्यर्थः। अणुपरिमाणं ३९ तु न कस्यापि कारणं, तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत्, तच्च न सम्भवति, परिमाणस्य ४० स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमान्मह-

---

३६। अत्र गुणादिमत्त्वं अवृत्तित्वञ्च—समवाय स्वरूपान्यतरसम्बन्धेन वक्तव्यं नातः सम्बन्धान्तरमादाय दोष इत्यवधेयम्।

३७। कर्म्मवदवृत्त्याकाशत्वादिरूपोपाधिमत्याकाशेऽति व्याप्तिवारकतया पदार्थविभाजकपदं सार्थकयति आकाशत्वादिकन्त्विति।

३८। एतेन जात्यादीनामप्येकार्थसमवायेन सामान्यवत्त्वेऽपि न क्षतिः एकार्थसमवायस्याधिकरणत्वनियामकत्वाभावादिति दर्शितं।

३९। परमाणुद्व्यणुक परिमाण साधारणमेवाणुपरिमाणत्वं बोध्यं।

४०। साजात्यमत्र परिमाणविभाजकरूपेण, परिमाणविभाजकञ्च—अणुत्वमहत्त्वत्वादिकं उत्कृष्टत्वाणीयस्तरं महती महत्तरमित्यादि।

दारब्धस्य महत्तरत्ववत् अणुजन्यस्याणुतरत्वप्रसङ्गात् ४१ । एवं ४२ परममहत्परिमानम् अतीन्द्रियसामान्यं विशेषश्चेति बोध्यम् । इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वं, ४३ ज्ञायमानसामान्यं न प्रत्यासत्तिः, ज्ञायमानं लिङ्गं नानुमितिकरणम् इत्यभिप्रायेण ४४ ।

---

४१ । अथाणुतरत्वस्यालीकत्वात् कथमापत्तिरिति चेन्न अणुपरिमाणं यदि कारणं स्यात्तदा स्वावधिकोत्कृष्टत्व स्वजन्यत्वैतदुभयसम्बन्धावच्छिन्नाधेयतासम्बन्धेन परिमाणवत् स्यादित्यापत्तिपरतायामित्येतदग्रन्थ तात्पर्य्यात् । एवञ्च स्वत्वस्य परिचायकतया न कुत्राप्यप्रसिद्धिरित्यवधेयम् ।

४२ । एवं—न कारणमित्यर्थः, बोध्यमित्यनेनान्वयः । ऐन्द्रियिकयोर्म्महत्त्व सामान्ययोः स्वविषय लौकिकप्रत्यक्षे हेतुत्वात् महत्त्वे परमत्त्वं सामान्ये चातीन्द्रियत्वं विशेषणम् ।

४३ । योगिप्रत्यक्षे विषयस्य कारणत्वसत्त्वे तु पारिमाण्डल्यस्यापि विषयविधया कारणत्वापत्त्या पारिमाण्डल्यभिन्नानां कारणत्वमित्युक्तिर्न सङ्गच्छत इति भावः । योगिप्रत्यक्षे विषयस्य कारणत्वाभावे का युक्तिरिति चेत् योगिप्रत्यक्षे विषयस्य कारणत्वे तेषामतीतानागतविषयकप्रत्यक्षं नस्यादिति । तस्मात् लौकिकप्रत्यक्ष एव विषयस्य कारणत्वं योगजधर्म्मस्त्वलौकिक सन्निकर्ष एवेति ध्येयम् ।

४४ । ज्ञायमानसामान्यस्य प्रत्यासत्तित्वे ज्ञायमानहेतो रणुमिति कारणत्वेपि च पारिमाण्डल्यस्य सामान्यलक्षणा जन्यज्ञाने अनुमितौ च कारणत्वापत्त्या पारिमाण्डल्यभिन्नानामिति मूलप्रसङ्गतं स्यादिति भावः ।

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्त्तिता। *
कारणत्वं भवेत् तस्य त्रैविध्यं परिकीर्त्तितम् ॥१६॥
समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम्।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥१७॥

आत्ममानसप्रत्यक्षे आत्म महत्त्वस्य कारणत्वात् ४५ परममहत्त्वपरिमाणस्याकाशादेर्बोध्यं। तस्यापि न कारणत्वमित्याचार्य्याणामाशय

---

४५। विषयतया द्रव्यलौकिकप्रत्यक्षे समवायेन महत्त्वस्य हेतुत्वादिति भावः। यद्यपि स्वप्रत्यक्षे इत्येव वक्तुमुचितं तथापि टीकाकृन्मते आत्मैकत्व महत्त्वयोरयोग्यत्वात् प्रत्यक्षं न सम्भवतीत्यात्ममानसेत्युक्तम्।

---

* नियत पूर्ववर्त्तिता च कार्य्याव्यवहित प्राक्क्षणावच्छेदेन कार्य्यसमानाधिकरणात्यन्ताभाव प्रतियोगितानवच्छेदकधर्मवत्त्वं। अभावश्च कारणतावच्छेदकसम्बन्धावच्छिन्न प्रतियोगिताकः कारणतावच्छेदक तदितरोभयधर्मानवच्छिन्न प्रतियोगिताकश्च ग्राह्यः नातः सम्बन्धान्तरावच्छिन्न प्रतियोगिताकाभाव विशिष्टाभावादिकमादाय दोषः। अथैवमपि वृक्षपक्षिणोः संयोगे क्रियायाः कारणत्वं नस्यात् संयोगाधिकरण वृक्षवृत्त्यभाव प्रतियोगितावच्छेदकत्वस्य क्रियात्वे सत्त्वात्, कार्य्याधिकरणे यत्किञ्चित्त्व निवेशेपि तस्याननुगततया वृक्षवृत्त्यभावमादाय तद्दोष तादवस्थ्यादिति चेन्न कार्य्याधिकरणविशिष्ट धर्मवत्त्वस्य विवक्षितत्वात्। कार्य्याधिकरणवैशिष्ट्यञ्च—धर्मे, कार्य्याव्यवहित प्राक्क्षणावच्छेदेन स्ववृत्त्यभाव प्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताक प्रतियोगिताक भेदवत्त्व सम्बन्धेन। एवञ्च—क्रियात्वस्य वृक्षवृत्त्यभाव प्रतियोगितावच्छेदकत्वेपि निरुक्तसम्बन्धेन पक्षिरूपकार्य्याधिकरण वैशिष्ट्यानपायान्न दोष इत्यवधेयम्।

यत्समवेतं † कार्य्यं भवति
ज्ञेयन्तु समवायिजनकं तत् ।
तत्रासन्नं जनकं द्वितीय-
माभ्यां परं तृतीयं स्यात् ॥१८॥

इत्यन्ये, तन्न ज्ञानातिरिक्तं प्रत्येवा कारणताया आचार्य्यै-रुक्तत्वात् ४६ ॥१५॥

ननु कारणत्वं किम्? अत आह अन्यथेति—तस्य—कारण-त्वस्य। तत्र समवायिकारणे, आसन्नं प्रत्यासन्नं कारणं द्वितीय-

---

४६। "कारणत्वञ्च—ज्ञातृधर्म्मेतर भावकार्य्यापेक्षया" इत्याचार्य्यग्रन्थ.। ज्ञातृधर्म्माः ज्ञानादयः तदतिरिक्त भावकार्य्यं प्रति कारणत्वं पारिमाण्डल्यभिन्नानां साधर्म्म्यमिति तदर्थः। एवञ्च—पारिमाण्डल्यादीत्यादिपदेन परममहत्त्वं गृह्णतामाचार्य्याणामयमाशयो यत् पारि-माण्डल्यस्य परममहत्त्वादीनाञ्च ज्ञानातिरिक्तं प्रति न कारणत्वं नतु कारणत्व सामान्याभाव स्तदनुमत इति भावः।

---

अथानियतपूर्व्ववर्त्तिनां सर्व्वेषामेवान्यथासिद्धतया अन्यथासिद्धिशून्यत्वदलेनैव तद्वारणसम्भवात् किं नियतपूर्व्ववर्त्तित्वदलेनेति चेन्न कारणभिन्नानां निखिलवस्तूनामेवान्यथासिद्धतया तावद् भेदकूटनिवेशे महागौरवमसर्व्वज्ञदुर्ज्ञेयत्वञ्च स्यादिति तन्निवेशात्, तन्निवेशे चानियतपूर्व्व वर्त्तिनां सर्व्वेषामेव नियतपूर्व्ववर्त्तित्वदलेनैव वारणसम्भवान्नियतपूर्व्ववर्त्ति कतिपयान्यथासिद्ध-व्यक्तीनां भेदकूटमादायैव लक्षणसमन्वयसम्भवेन महालाघवमित्यादिकमवधेयम् ॥

† यत् समवेतमिति—यद्धर्म्मावच्छिन्नं स्वकारणतावच्छेदक यद्धर्म्मावच्छिन्ने समवायसम्बन्धे नोत्पद्यते तद्धर्म्मावच्छिन्नं प्रति तद्धर्म्मावच्छिन्न समवायिकारणमित्यर्थः नातो घटत्वावच्छिन्नं प्रति कपालादेर्द्रव्यत्वादिनापि कारणत्वापत्तिर्नवा तद्घटत्वावच्छिन्नं प्रत्यपि कपालत्वाद्यवच्छिन्नस्य कारणत्वापत्तिः। घटत्वावच्छिन्नं प्रति हि स्वकारणतावच्छेदक कपालत्वाद्यवच्छिन्नं समवायिकारणमिति ॥

**असमवायिकारणमित्यर्थः। अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात्, १ एवं वेगादीनामभिघाताद्यसमवायिकारणत्वं स्यात्, २ एवं ज्ञानादीनामपीच्छाद्यसमवायिकारणत्वं स्यात्, ३ तथापि ४ पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं ५ देयं, तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं**

---

१। तुरीतन्तुसंयोगस्य पटं प्रति कुतो नासमवायिकारणत्वमिति चेत् द्व्यणुक नाशान्यथानुपपत्त्या असमवायिकारणनाशस्य द्रव्यनाशकत्वनियमात् तुरीतन्तु संयोगनाशे द्रव्यनाशापत्तिरिति। न च द्रव्यनाशासमवायिकारणनाशयोरसमानाधिकरणयोः कथं कार्य्यकारणभाव इति वाच्यं प्रतियोगितासम्बन्धेन द्रव्यनाशत्वावच्छिन्नं प्रति स्वप्रतियोगिजन्यत्व स्वप्रतियोगिसमवायि समवेतत्व कालिकविशेषणत्व एतत्त्रितयसम्बन्धेन नाशत्वेन हेतुताया वाच्यत्वात्। तत्र च प्रथमसम्बन्धनिवेशान्न कपालपवनसंयोगनाशाद् घटनाशापत्तिः, दण्डनाशाद्घटनाशापत्तिवारणाय द्वितीयसम्बन्धनिवेशः, भाविनाशमादायाति प्रसङ्गवारणाय तृतीयसम्बन्ध निवेश इति ध्येयम्।

२। आदिद्वयेन स्पर्शनोदनयोः परिग्रहः। अथ द्रव्यनाशं प्रत्येवासमवायिकारणनाशस्य हेतुतया वेगादीनामभिघाताद्यसमवायिकारणत्वेपि तन्नाशे अभिघातादि नाशापत्तेरयोगात्तत्वेष्टापत्तिरेव सम्भवतीति चेन्न असमवायिकारणनाशमन्तरा क्षणत्रयं कार्य्यस्थितेरनिष्टतया तदापत्तेरेव इष्टापत्तौ बाधकत्वात्।

३। अत्रादि पदद्वयेनेच्छाप्रवृत्त्योः परिग्रहः।

४। तन्तुसमवेतत्वे सति तुरीतन्तु संयोगाद्यन्यत्वे सति पटकारणत्वं पटासमवायिकारणत्वमिति विशिष्यैव लक्षणं कर्त्तव्यमित्याह तथापीति।

भवत्येव ६। एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति तत्तत्कार्य्यासमवायिकारणलक्षणे ७ तत्तद् भिन्नत्वं ८ देयम्। आत्मविशेषगुणानान्तु कुत्राप्यसमवायिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव। अत्र समवायिकारणे प्रत्यासन्नं द्विविधं कार्य्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च, आद्यं यथा—घटादिकं प्रति कपालसंयोगादिकसमवायिकारणम्, तत्र कार्य्येण घटेन सह कारणस्य कपालसंयोगस्य एकस्मिन् कपाले प्रत्यासत्तिरस्ति। द्वितीयं यथा—घटरूपं प्रति कपालरूपसमवायिकारणं, तत्र स्वगतरूपं प्रति समवायिकारणं घटः, तेन सह कपालरूपस्य एकस्मिन् कपाले प्रत्यासत्तिरस्ति। तथा च क्वचित् समवायसम्बन्धेन, क्वचित् स्वसमवायिसमवायसम्बन्धेनेति फलितोऽर्थः। इत्यञ्च कार्य्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्य्यवसन्नम्।

---

५। अत्र तुरीतन्तु संयोगत्वावच्छिन्न प्रतियोगिताकभेदः पटासमवायिकारणलक्षण घटकतया ग्रन्थ कर्त्तुर्नाभिप्रेतः अपितु तन्तुभिन्नसमवेतत्वावच्छिन्न प्रतियोगिताक भेद एव। अन्यथा हस्ततन्तु संयोगादिभेदानां पृथग्निवेशापत्त्या भेदकूट निवेशने गौरवात्। एतेन तन्तुमात्रसमवेतत्व निवेशेनैवोपपत्तौ तुरीतन्तु संयोगान्यत्व निवेशनमनुचितमित्यपि परास्तं मात्रपदस्याश्मदुक्तार्थकत्वादित्यवधेयम्।

६। एतेन सामान्यलक्षणे तुरीतन्तु संयोगादिभिन्नत्वं दातुमशक्यमिति सूचितम्।

७। अभिघाताद्यसमवायिकारणलक्षणे।

८। वेगादि भिन्नत्वं।

येन सह पूर्वभावः कारणमादाय वा यस्य।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम्॥ १९॥
जनकं प्रति पूर्ववर्त्तितामपरिज्ञाय न यस्य गृह्यते।
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः २०

आभ्यां समवायिकारणासमवायिकारणाभ्यां परं[१] भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः॥ १६॥ १७॥ १८॥

---

इदानीमन्यथासिद्धत्वमेव कियतांपदार्थानान्तदाह येनेत्यादिना। यत् कार्य्यं प्रति कारणस्य पूर्ववर्त्तिता येन रूपेण गृह्यते तत् कार्य्यं

---

१। यद्यपि असत्समवायिकारणस्यघटध्वंसादेः कारणे घटादौ आभ्यांपरमिति निमित्तकारणलक्षणमव्याप्तं तथापि लक्ष्यभेदेन लक्षणस्य नानात्वात् तत्तन्निमित्तकारणलक्षणे तत्तद्भिन्नत्वं न देयमित्यदोषः। वस्तुतस्तु समवायिकारणत्वासमवायिकारणत्वभिन्नकारणत्वमेव निमित्तकारणत्वं वक्तव्यं, एवञ्च तुरीपटसंयोगं प्रति असमवायिकारणस्य तुरीतन्तुसंयोगस्य पटं प्रति निमित्तकारणत्वसम्पादनाय तत्कार्य्यसमवायिकारणासमवायिकारणभिन्नत्वे सति तत्कार्य्यकारणत्वं तत्कार्य्यंप्रति निमित्तकारणत्वमिति विशिष्य कार्य्यकारणभावोऽपि न वक्तव्यः, तुरीतन्तुसंयोगे तुरीपटसंयोगासमवायिकारणत्वसत्त्वेऽपि तत्रत्यनिमित्तकारणत्वे तद्भेदस्यानपायेन सामान्यतः समवायिकारणत्वासमवायिकारणत्वभिन्नकारणत्वमेव निमित्तकारणत्व मित्यस्यैव वक्तुं शक्यत्वात्। तथाच घटध्वंसादेरसमवायिकारण विरहेऽपि च न क्षतिः। समवायिकारणत्वं समवायसम्बन्धावच्छिन्न कार्य्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं। असमवायिकारणत्वञ्च तादृशकार्य्यतानिरूपितसमवाय स्वसमवायिसमवायान्यतरसम्बन्धावच्छिन्नकारणत्वमित्यवधेयम्।

५

**एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।**
**घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥**

प्रति तद्रूपमन्यथासिद्धमिति भावः, यथा[१] घटंप्रति दण्डत्वमिति। द्वितीयमन्यथासिद्धमाह कारणमिति, यस्य स्वातंत्र्येणान्वयव्य[२]तिरेकौ न स्तः किन्तु स्वकारणमादायैव[३] अन्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धं यथा दण्डरूपम्[४] । तृतीयमाह अन्यं प्रतीति,

१। तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववर्त्तित्वग्रहविशेष्यतावच्छेदकत्वे सति तद्धर्मावच्छिन्नं प्रति स्वातन्त्र्येणान्वयव्यतिरेकशून्यत्वं तद्धर्मावच्छिन्नं प्रति अन्यथासिद्धत्वमिति प्रथमस्य पर्यवसितार्थः । अत्र सत्यन्तेन द्वितीयान्यथासिद्ध दण्डरूपादि व्युदासः । कपालसंयोगो घटपूर्ववर्तीत्यादिग्रहे कपालस्यापि तादृशविशेष्यतावच्छेदकत्वात्तद्वारणं विशेष्यदलेन ।

२। स्वाधिकरणे कार्य्यसत्त्वमन्वयः । स्वानधिकरणे कार्य्यासत्त्वं व्यतिरेकः । अन्वयव्यतिरेकयोः स्वातन्त्र्यञ्च — स्वभिन्नप्रकृत कार्य्यकारणान्वयव्यतिरेकाप्रयुक्तत्वं । दण्डत्वदण्डरूपान्वयव्यतिरेकौतु स्वभिन्नदण्डरूपकारणान्वयव्यतिरेक प्रयुक्तावेव, स्वाश्रयाश्रयत्वसम्बन्धेन दण्डत्वादि सत्त्वस्य दण्डसत्त्वाधीनत्वादित्यवधेयम् ।

३। कारणत्वञ्चात्र पृथगन्वयव्यतिरेकशालित्वं, अन्यथा अन्यथासिद्धत्वशरीरे कारणस्य कारणत्वेन प्रवेशे कारणत्वस्य च अन्यथासिद्धत्व घटितत्वेनात्माश्रयापत्तेः ।

४। यत् स्वातन्त्र्येण तत्कार्य्यनिरूपितान्वयव्यतिरेक शून्यत्वे सति तत्कार्य्यकारणावच्छिन्न स्वनिष्ठतत्कार्य्यनिरूपितनियतपूर्ववर्त्तित्वग्रहविशेष्यताकं तस्य तत्कार्य्यं प्रत्यन्यथासिद्धत्वमिति द्वितीयस्य पर्यवसितार्थः । अत्र कपालेऽतिव्याप्तिवारणाय सत्यन्तं, दण्डत्वादिवारणाय विशेष्यं । अत्र यद्यपि इतरान्वयव्यतिरेकप्रयुक्ता-

अन्यंप्रति[5] पूर्ववर्त्तित्वं गृहीत्वैव यस्य यत्कार्य्यं प्रति पूर्ववर्तित्वं गृह्यते तस्य तत्कार्य्यंप्रत्यन्यथासिद्धत्वं, यथा घटादिकं प्रत्याकाशस्य तस्यहि घटादिकं प्रति आकाशत्वेन कारणत्वं स्यात् आकाशत्वं च शब्दसमवायिकारणत्वम्, एवञ्च तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथा सिद्धम्। ननु शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरिति चेत ? पञ्चमीति गृहाण। अथाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदक मिति चेत् ? कत्वादिकं विशेषपदार्थो[6] वेति। चतुर्थमन्यथासिद्धमाह जनकं प्रतीति, यत्कार्य्यजनकं प्रति पूर्ववर्त्तित्वं

---

न्वयव्यतिरेकशालित्वमित्युक्तौ प्रथमद्वितीयान्यथासिद्ध्योः संग्रहः सम्भवति तथापि भेदेनान्यथासिद्धिद्वयप्रदर्शनं शिष्यबुद्धिवैशद्यार्थं मित्यवधेयम्।

५। फलाननुगुणमन्यंप्रतीत्यर्थः। तेन न कुलालजनके चतुर्थान्यथासिद्धयाश्रयेऽतिव्याप्तिः। ननु स्वर्गं प्रति पूर्व्ववर्त्तित्वं गृहीत्वैव गृहीत तत्कारणत्वान्यथानुपपत्त्या यागव्यापारत्वेनापूर्व्वं कल्पना दपूर्व्वं प्रति यागस्यान्यथासिद्धिः कथं नस्यादितिचेन्न अन्यंप्रति पूर्व्ववर्त्ति त्वघटितरूपेण यस्य यज्जनकत्वं तस्य तेनरूपेण तंप्रत्यन्यथासिद्धत्व मित्यत्रैव तात्पर्य्यात्। तथाच यागस्य स्वर्गपूर्व्ववर्त्तित्वघटितस्वर्गजनकत्वेनापूर्व्वं प्रत्यन्यथासिद्धत्वेऽपि यागत्वेन हेतुत्वे नान्यथासिद्धत्वं। अतएव "शब्दाश्रयत्वेन हेतुत्वे (तृतीयान्यथासिद्धयसम्भवात्) कान्यथासिद्धिरिति" वक्ष्यमाणशङ्काग्रन्थोऽपि सङ्गच्छतइति ध्येयम्।

६। विनिगमना विरहेण वहूनां वर्णानां कारणतावच्छेदकत्वे गौरवाद्वर्णाना मसार्व्वकालिकत्वाच्चाह विशेषपदार्थो वेति।

७। अत्रापि अन्यंप्रतीत्याद्यभिधानेनैव तृतीय चतुर्थान्यथासिद्धयोः

**तृतीयन्तु भवेद् व्योम कुलालजनकोऽपरः ।**
**पञ्चमोरासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २२ ॥**

गृहीत्वैव यस्य यत्कार्य्यंप्रतिपूर्व्ववर्त्तित्वं गृह्यते तस्य तत् कार्य्यं प्रत्यन्यथासिद्धत्वं, यथा कुलालपितुर्घटंप्रति । तस्य कुलाल पितृत्वेन घटंप्रति जनकत्वेऽन्यथासिद्धिः, कुलालत्वेन जनकत्वे त्विष्टापत्तिः कुलालमातस्य घटं प्रति जनकत्वात् । पञ्चममन्यथासिद्धमाह अतिरिक्तमिति, अवश्यक्लृप्तनियतपूर्व्ववर्त्तिन एव कार्य्यसम्भवे तद्भिन्न मन्यथासिद्धमित्यर्थः । अतएव प्रत्यक्षे महत्वंकारणम् अनेक द्रव्यत्वमन्यथासिद्धं । तत्रहिमहत्त्वमवश्यंक्लृप्तं तेनानेकद्रव्यत्वमन्यथासिद्धम् । नच वैपरीत्ये किं विनिगमक मिति वाच्यं महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् ॥ २१ ॥

रासभादिरिति । यद्यपि यत्किञ्चिद्घटव्यक्तिं प्रति रासभस्य

---

संग्रह सम्भवेऽपि फलाननुगुणत्व तदनुगुणत्वयोर्विशेषणयोरुपादानेन तयोर्भेदेनाभिधानं शिष्यबुद्धि वैशद्यार्थं मिति मन्तव्यम् ।

८ । अत्र नियतपूर्व्ववर्त्तिनि भवश्य क्लृप्तत्वं लघुत्वमेव । लघुत्वञ्च-शरीरकृतमुपस्थितिकृतंसम्बन्धकृतञ्च । तत्र प्रथमं अनेकद्रव्यत्वापेक्षया महत्त्वे । द्वितीयं गन्धंप्रति रूपप्रागभावापेक्षया गन्धप्रागभावे, गन्धात्मकप्रतियोगिज्ञानत्वेन शीघ्रं तदुपस्थितेः । तृतीयं दण्डत्वदण्डरूपापेक्षया दण्डे, तत्र स्वाश्रयदण्डसंयोगघटित परम्परया गुरुत्वात् ।

९ । अत्रानेकद्रव्यत्वं नानेकद्रव्यसमवेतत्वं तस्य द्व्यणुकेऽपि सत्त्वेन तत्प्रत्यक्षत्वापत्तेः । नापि समवेत समवेतत्वं आत्मनि तस्याभावेनात्मप्रत्यक्षानुपपत्तेः । किन्तु अणुभिन्न द्रव्यत्व मितिबोध्यम् ।

**समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ।**
**गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥ २३**

नियतपूर्ववर्त्तित्वमस्ति तथापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि सम्भवे रासभोऽन्यथासिद्ध इति भावः । एतेष्विति । एतेषु पञ्चसु अन्यथासिद्धेषु मध्ये पञ्चमेऽन्यथासिद्ध आवश्यकः तेनैव परेषां[10] चरितार्थत्वात् । तथाहि दण्डादिभिरवश्यक्लृप्त नियतपूर्ववर्त्तिभिरेव कार्य्यसम्भवे दण्डत्वादिकमन्यथासिद्धम् । न च वैपरीत्ये किं विनिगमकमिति वाच्यम् ? दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः सम्बन्धत्वकल्पने गौरवात् । एवमन्येषामप्यनेनैव चरितार्थत्वं सम्भवति ॥ २२ ॥

गुणकर्मेति । असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं न तु गुणकर्मणोःसाधर्म्यम् इत्यत्र तात्पर्य्यम् । अथवा[1] असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं[2] तदर्थः । तेन ज्ञानादीनामसमवायिकारणत्व विरहेऽपि न क्षतिः ॥ २३ ॥

---

१० । परेषां—दण्डत्व दण्डरूपाकाश कुलाल पितॄणाम् । तेन—पञ्चमान्यथासिद्धेन । चरितार्थत्वं—संग्रहः ।

१ । साधर्म्यप्रकरणे वैधर्म्यकथनमयुक्तमत आह अथवेति ।

२ । सत्ताभिन्नद्रव्यत्वरूपजातिमतिद्रव्येऽतिव्याप्तिवारणाय वृत्यन्तं । तत्रैव सत्ताजातिमादायातिव्याप्तिवारणाय सत्ताभिन्नेति । द्रव्यगुणान्यतरत्वरूपधर्म्ममादाय च तत्रैवातिव्याप्तिवारणाय जातीति । वृत्तित्वं जातिमत्त्वञ्च समवायेनविवक्षितं तेन गुणादौ कालिकेन द्रव्यत्वस्य वृत्तित्वेऽपि द्रव्यस्य कालिकेन गुणादिमत्त्वेऽपि च द्रव्ये नातिव्याप्तिः ।

अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते* ।
क्षित्यादीनां नवानान्तु द्रव्यत्वगुणयोगिता ॥ २४ ॥
क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥

अन्यत्रेति । नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः । आश्रितत्वन्तु समवायादिसम्बन्धेन[३] वृत्तिमत्त्वं विशेषणतया नित्यानामपि कालादौ वृत्तेः । इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते—क्षित्यादीनामिति ॥ २४ ॥

क्षितिर्जलमिति, पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्त्तत्वं कर्म्मवत्त्वं[४] वेगवत्त्वञ्च साधर्म्यम् । न च यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति[५] वाच्यं परत्वादिसमानाधिकरणद्रव्य-

---

३ । सर्व्वाधारतानियामक कालिकसम्बन्धातिरिक्त सम्बन्धेनेत्यर्थः । तथाच गगनादिकं सर्व्वदैवास्तीति व्यवहारसत्वेऽपि न क्षतिः कालिकेनैव तदुपपत्तेः । नच संयोगेन परमाणोरपि वृत्ते राश्रितत्वं परमाणावतिव्याप्तमितिवाच्यं पतनप्रतिबन्धकसंयोगस्यैव वृत्ति नियामकत्वेन गगनादौ गुरुत्वाभावादेव पतनासम्भवेन पतनप्रतिबन्धकत्वाकल्पनात्तत्संयोगस्येव जन्यगुरुत्वस्य प्रकृष्टगुरुत्वस्य वा पतनकारणतया तदभावादेव परमाणोः पतनासम्भवेन पतनप्रतिबन्धकत्वाकल्पनात् परमाणुसंयोगस्यापिवृत्यनियामकत्वात् अन्यथावाय्वादि प्रतिबन्धकाभावदशायां सर्व्वेषामेव परमाणूनामधः पतनापत्ते रिति ध्येयम् ।

४ । मूले क्रिया पदार्थोन धात्वर्थः अपितु कर्म्मैवेति ज्ञापयितु माह कर्म्मवत्त्वमिति ।

५ । अयमस्माद्विप्रकृष्टः अयमस्मात् सन्निकृष्ट इत्यपेक्षाबुद्धी

---

* वेदान्तिनांमते नित्यज्ञानस्याप्यनाश्रितत्वाङ्गीकारात्तन्निरासाय इहेति, न्याय सिद्धान्त इत्यर्थः ।

**कालखात्मदिशां सर्वगतत्वं परमं महत्।**
**क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्ति हि॥२६॥**

त्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। मूर्त्तत्वम् अपकृष्टपरिमाणवत्त्वम्, तच्च तषामेव, गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात्। पूर्ववत् कर्म्मवत्त्वम् कर्म्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं, वेगवत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वञ्च बोध्यम्॥२५॥

कालेति। कालाकाशात्मदिशां सर्वगतत्वं सर्वमूर्त्तसंयोगित्वं परममहत्त्वञ्च। परममहत्त्वत्वं जातिविशेषः अपकर्षानाश्रयपरिमाणत्वं वा। क्षित्यादीति, पृथिव्यप्तेजोवाय्वाकाशानां भूत-

---

दैशिकपरत्वापरत्वयोः, अयमस्माद्बहुकालसम्बद्धः अयमस्मादल्पकालसम्बद्ध इत्यपेक्षाबुद्धी च कालिकपरत्वापरत्वयोर्हेतू तासामपेक्षाबुद्धीनामनुत्पादादित्यर्थः।

६। आत्मन्यतिव्याप्तिवारणायसमानाधिकरणान्तं तत्रैव सत्तादिकमादायातिव्याप्ति वारणाय द्रव्यत्वव्याप्येति। द्रव्यत्वव्याप्यत्वञ्चात्र द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमेव लाघवात् नात द्रव्यत्वव्याप्यं द्रव्यत्वमादायापि तथैवातिव्याप्तिः। नचैवं गुणत्वादेरपि तथात्वात्तदादायातिव्याप्ति रित्यपि शङ्कनीयं परत्वादिसामानाधिकरण्य विरहादेव गुणत्वादे र्व्युदाससम्भवादिति ध्येयम्।

७। अविभुवृत्ति गुणवत्त्वमित्यर्थः, तेन परमाणौ नाव्याप्तिः। क्रियाजनकतावच्छेदकं मूर्त्तत्वं जातिरित्यपि केचित्।

८। सर्व्वमूर्त्तकर्म्मक गतिमत्त्वरूपस्य सर्व्वगतत्वस्य क्रियारहित कालादावसम्भवादर्थान्तर माह—सर्व्वमूर्त्तसंयोगित्व मिति।

९। अहंमहानिति प्रतीति विषयस्य परममहत्त्वत्वस्य गगनपरिमाणादिसाधारणस्य जातित्वसम्भवेऽपि आत्मपरिमाणमयोग्यमिति टीकाकृन्मतमनुसृत्याह अपकर्षानाश्रयेति। तादृशमहत्परिमाणत्वं

त्वम्, तच्च वहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्[१०]। अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यं, तेन[११] ज्ञातोघट इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात्[१२] तद्वति आत्मनि नातिप्रसङ्गः, न[१३] वा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः तस्यापि स्वरूपयोग्यत्वात्। महत्त्वलक्षणकारणान्तरासन्निधानाच्च[१४] न प्रत्यक्षम्। अथवा[१५] आत्मावृत्तिविशेषगुणवत्त्वं तत्त्वम्। चत्वारीति, पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वम्॥ २६॥

---

तदर्थः तेन परमाणुपरिमाणस्यापकर्षानाश्रयत्वेऽपि परमाणौ नातिव्याप्तिः॥

१०। आत्मन्यतिव्याप्तिवारणाय वहिः पदं, मनोभिन्नत्वमेव वहिष्ट्वम्। वहिरिन्द्रियग्राह्यजातीय संयोगादिमति कालादावतिव्याप्ति वारणाय विशेषेति। आवश्यकञ्च ग्राह्यजातीयत्वपर्यन्तविवक्षणं अन्यथा परमाणुरूपादेरप्रत्यक्षतया तत्राव्याप्तिप्रसङ्गात्॥

११। लौकिकत्वनिवेशस्य फलमाह तेनेति। यदंशे लौकिकः सन्निकर्षः तन्निष्ठविषयता लौकिकविषयतेत्युच्यते तथाच ज्ञातो घट इतिज्ञाने प्रकारीभूतज्ञानांशे या विषयता सा न लौकिकी चक्षुरादेस्तत्र लौकिकसन्निकर्षाभावात्।

१२। ज्ञानलक्षणाचसन्निकर्षजन्यज्ञान मुपनीतभान मित्युच्यते। ज्ञातो घट इत्यत्र ज्ञानांशे ज्ञान लक्षणा रूपोऽलौकिकएव सन्निकर्षः।

१३। स्वरूपयोग्यतानिवेशस्य फलमाह नवेति। तस्यापि—परमाणुरूपस्यापि, स्वरूपयोग्यत्वात्—वहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषय जातिमत्त्वात्।

१४। ननु परमाणुरूपादेर्योग्यत्वे कुतो न तस्य प्रत्यक्षमत आह महत्त्वेति। लौकिकविषयतया द्रव्यसमवेतप्रत्यक्षे सामानाधिकरण्यसम्बन्धेन कारणस्य महत्त्वस्य परमाणुरूपादावभावान्न तल्लौकिक प्रत्यक्षमिति भावः।

१५। लाघवादाह अथवेति। तत्त्वं—भूतत्वं। तत्रच कल्पे दैशिक परत्वापरत्वमादाय मनस्यतिव्याप्तिवारणाय विशेषेति।

**द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम्,**
**अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७ ॥**

द्रव्यारम्भ इति पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वं । नच द्रव्यानारम्भके घटादावव्याप्तिः, द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य[1] विवक्षितत्वात् । आकाशशरीरिणामिति, आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वम् साधर्म्यमित्यर्थः । आकाशस्य विशेषगुणः शब्दः सचाव्याप्यवृत्तिः,[2] यदा किञ्चिदवच्छेदेन शब्द उत्पद्यते तदान्यावच्छेदेन तदभावस्यापि सत्त्वात् । क्षणिकत्वञ्च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । योग्यविभुविशेषगुणादीनां स्वोत्तरवर्त्तिगुणनाश्यत्वात्[3] प्रथमशब्दस्या द्वितीयशब्देननाशः एवंज्ञानादीनामपि, ज्ञानादिकं हि यदा । आत्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावोऽस्त्येव । एवं ज्ञानादिकमपि क्षणाद्वयवस्थायि ।[4] इत्थञ्चाव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणव-

---

१ । सत्तादिकमादाय गगने अतिव्याप्तिवारणाय द्रव्यत्व व्याप्येति ।

२ । अव्याप्यवृत्तित्वन्तु—स्वाधिकरणवृत्त्यभावप्रतियोगित्वं अभावश्च विशिष्टाभावाद्यनात्मको ग्राह्यः ॥

३ । स्वपदं नाश्यत्वाभिमतपरं । यत्र प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुण नाशस्तत्र सामानाधिकरण्य स्वाव्यवहितपूर्व्वत्व एतदुभयसमवन्धेन योग्यविभुविशेषगुण इति तत्तत्सम्बन्धेन कार्य्यकारणभावः । कार्य्यतावच्छेदकेप्रायश्चित्तादिजन्यादृष्टनाशे व्यभिचारवारणाय योग्यत्वं, रूपादिनाशे व्यतिरेकव्यभिचारवारणाय विभ्विति, संयोगादिनाशे तादृशव्यभिचारवारणाय विशेषेति । कारणतावच्छेदकेयोग्यत्वविशेषत्वयोरुपादानान्न द्वितीयक्षणोत्पन्नादृष्टसंयोगादिना तृतीयक्षणे अपेक्षाबुद्धिनाशः ।

४ । क्षणिकपदस्य वैयर्थ्यांल्लक्षणद्वयाभिप्रायेणार्थमाह इत्थञ्चेति ।

त्वञ्चार्थः । पृथिव्यादौ रूपादिविशेषगुणोऽस्तीत्यतोऽव्याप्यवृत्तीत्युक्तम्, पृथिव्यादावव्याप्यवृत्तिसंयोगादिरस्तीत्यतो विशेषगुणेत्युक्तम् । नच रूपादीनामपि कदाचित् तृतीयक्षणे नाशसम्भवात् क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यं चतुर्थक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थत्वात् अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति क्षणचतुष्टयन्तु किमपि ज्ञानादिकं न तिष्ठति । रूपत्वादिकन्तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्त्ततइति तद्व्युदासः । ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वात् ज्ञानत्वस्यचतद्वृत्तित्वात् जन्येत्युक्तम् । यद्याकाशजीवात्मनोः साधर्म्यम् तदा जन्येति न देयं, द्वेषत्वादिकमादाय लक्षणसमन्वयात् । परममहत्त्वस्य तादृशगुण-

---

अत्राव्याप्यवृत्तित्वं दैशिकंग्राह्यं तेन रूपादीनामपि कालिकाव्याप्यवृत्तित्वसत्त्वेऽपि न क्षतिः । नचाव्याप्यवृत्तिविशेषगुणवत्त्वमीश्वरेऽव्याप्तं तद्गुणानां व्याप्यवृत्तित्वादितिवाच्यं अव्याप्यवृत्तिपदेन अव्याप्यवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ।

५ । चतुर्थक्षणवृत्तीनि यानि जन्यानि घटादीनि तदवृत्ति या जातिर्ज्ञानत्वादिस्तद्वद्विशेषगुणवत्त्वमित्यर्थः । ज्ञानत्वादेरपि जन्यवृत्तित्वादसम्भववारणाय वृत्त्यन्तम् । वृत्तित्वञ्च समवायेन विवक्षितं तेन जन्यमात्र कालिकेन ज्ञानत्वादेर्वृत्तित्वेऽपि न क्षतिः ।

६ । प्रथमोपस्थितत्वेन लघुत्रिक्षणवृत्तित्वमपहायचतुःक्षणवृत्तित्वप्रवेशप्रयोजनमाह अपेक्षाबुद्धिरिति । तथाच त्रिक्षणवृत्तित्वस्य प्रवेशे ज्ञानत्वस्य संग्रहो नस्यादिति भावः ।

७ । मूलस्थ शरीरिपदस्य यथाश्रुतार्थकत्वाभिप्रायेणाह यद्याकाशजीवात्मनोरिति ।

८ । ननु जन्यत्वानिवेशे ज्ञानत्वेच्छात्वप्रयत्नत्वादिजातीनां चतुःक्ष-

**रूपद्रवत्वप्रत्यक्षयोगि स्यात् प्रथमत्रिकम् ।**
**गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥**

त्वात् चतुर्थक्षणे द्वित्वादीनामपि नाशाभ्युपगमात् द्वित्वादीनामपि तथात्वात् तद्वारणाय त्रिशेषेति। त्रिक्षणवृत्तित्वं[10] वा वाच्यम् इच्छात्वादिकमादायात्मनि लक्षणसमन्वयात् ॥ २७ ॥

रूपेति पृथिव्यप्तेजसां रूपवत्त्वं द्रवत्ववत्त्वं प्रत्यक्षविषयत्वञ्चेत्यर्थः न च चक्षुरादीनां भर्जनकपालस्थ वह्नेरूष्मणश्च रूपवत्वे किं मानमिति वाच्यम् ? तत्रापि तेजस्त्वेन रूपानुमानात्। एवं वायूनीतपृथीवीजल-तेजोभागानामपि पृथिवीत्वादिना रूपानुमानं बोध्यम्। न च घटादौ द्रुतसुवर्णादिभिन्ने तेजसि द्रवत्ववत्त्वमव्याप्तमिति वाच्यं द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्, घृततैलप्रभृतिषु पृथीवीषु जलेषु, द्रुतसुवर्णादौ तेजसि च द्रवत्वसत्त्वात् तत्र च पृथीवीत्वादिमत्त्वात् तदादाय सर्वत्र लक्षणसमन्वयः। न च प्रत्यक्ष-

---

णवृत्त्यवृत्तित्वाभावात् कथंलक्षणसमन्वय इत्यत आह द्वेषत्वादिकमिति आदिना शब्दत्वपरिग्रहः।

९। तादृश गुणत्वात्—चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्गुणत्वा-दित्यर्थः। परममहत्त्वत्वस्यापकर्षानाश्रयपरिमाणत्वरूपस्योक्तत्वात् जन्यपदानुपादाने चतुःक्षणवृत्तिवृत्तित्वाच्च परममहत्त्वत्वमादाय कालादावतिव्याप्ति र्न सम्भवतीत्यतआह चतुर्थक्षणे द्वित्वादीना-मिति।

१०। ननु त्रिक्षणवृत्तित्वोपादाने अपेक्षाबुद्ध्यात्मकत्रिक्षणवृत्तिवृ-त्तित्वेन ज्ञानत्वस्यासंग्रहेऽपि इच्छात्वादिकमादायैवात्मनि लक्षणसम-न्वयसम्भवात् लाघवेन चतुःक्षणवृत्तित्वमपहाय त्रिक्षणवृत्तित्वमेव वक्तुमुचितमिति तत्र सम्मतिमाह त्रिक्षणवृत्तित्वंवेति।

**आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ।**
**यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥**

विषयत्वे परमाण्वादावव्याप्तम् अतिव्याप्तञ्च[११] रूपादाविति वाच्यं चाक्षुषलौकिक[१२]प्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्, आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति। गुरुणी इति गुरुत्ववत्त्वं[१३] रसवत्त्वञ्च पृथिवीजलयोरित्यर्थः। न च घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवादिभागानाञ्च रसादिमत्त्वे किं मानमिति वाच्यम् ? तत्रापि पृथिवीत्वादिना तदनुमानात् । द्वयोरिति, पृथ्वीतेजसोरित्यर्थः। न च नैमित्तिकद्रवत्ववत्त्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यं नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ २८ ॥

आत्मान इति पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः। यदुक्तमिति ज्ञेयत्वादिकं विहाय इति[१४] बोध्यं तत् तु न कस्यापि वैधर्म्यं केवलान्वयित्वात् ॥ २९ ॥

---

११। परमाण्वादेरपि योगिप्रत्यक्षविषयत्वात्तत्राव्याप्त्यसम्भवादाह अतिव्याप्तञ्चेति।

१२। घटो वायुमानिति वाय्वंशे उपनीतभानात्मकघटविशेष्यकचाक्षुषविषय वायुवृत्तिद्रव्यत्वव्याप्यवायुत्वजातिमति वायावतिव्याप्तिवारणाय लौकिकेति।

१३। इदमुपलक्षणं पतनवत्त्वमपि पृथिवीजलयोः साधर्म्यं बोध्यम्। पतनत्वञ्च गुरुत्वासमवायिकारणककर्मत्वं। उल्कापतनीति प्रयोगस्तु लाक्षणिकः। वस्तुतस्तु गुरुत्वासमवायिकारणक कर्मवृत्तिपतनत्वं जातिविशेषएव गुरुत्वजन्यतावच्छेदकतयैव तत्सिद्धेः। न च परमाणूनांसर्वदा पतनापत्त्या प्रकृष्टगुरुत्वस्यैव पतनासमवायिकारणत्वेनाङ्गीकरणीयतया परमाणौतदभावेन पतनासम्भवादव्याप्तिरितिवाच्यं पतनवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ।

१४। ननुमूले "यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्यत"दिति

स्पर्शादयोऽष्टौ* वेगाख्यःसंस्कारो मरुतो गुणाः ।
अष्टौ स्पर्शादयो रूपं द्रवो वेगश्च तेजसि ॥ ३० ॥
स्पर्शादयोऽष्टौ वेगश्च गुरुत्वञ्च द्रवत्वकम् ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥ ३२ ॥
धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश ।
संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥ ३३ ॥
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे† ।

---

सामान्यतोऽभिधानमयुक्तं सप्तपदार्थानां साधर्म्यं ज्ञेयत्वादौ तदितराप्रसिद्ध्या तदितरवैधर्म्यत्वाभावादित्याशङ्कामपनेतुं पूरयति- ज्ञेयत्वादिकं विहायेति ।

* । वायो र्नवैकादश तेजसोगुणाजलक्षितिप्राणभृतां चतुर्दश ।
दिक्कालयोःपञ्च षड़ेवचाम्बरे महेश्वरेऽष्टौमनस स्तथैवच ।

इति प्राचीनश्लोकमनुसृत्य वाय्वादीनां गुणानाह स्पर्शादयोऽष्टावि- त्यादिना श्लोक पञ्चकेन ।

† । अत्र नव्याः—ईश्वरस्य परिमाणवत्त्वे प्रमाणाभावः, नच द्रव्य- त्वेन तदनुमानमिति वाच्यं अप्रयोजकत्वात् ईश्वरे द्रव्यत्वसत्त्वे माना- भावाच्च । अतएव तत्र संयोगविभागयोः सत्त्वेऽपि मानाभावः । गुणे गुणाभावात् रूपं घटात् पृथगिति प्रतीत्यन्यथानुपपत्त्या पृथक् पदस्य भिन्नार्थकताध्रौव्येन घटः पटात् पृथगित्यादावपि तद्विषयकतैयवोप पत्तौ पृथक्त्वस्य गुणत्वमेव निरस्तम् । मानन्दं ब्रम्हणोविद्वान्न बिभेति कदाचन एकोह वै नारायण इत्यादि श्रुत्या सुखं संख्या चेश्वरे वर्तते । तथाच संख्याबुद्धीच्छाप्रयत्नसुखानीति पञ्चेवेश्वरस्य गुणा इत्याहुः ॥

परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥
तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता ।
षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५ ॥

ते च संख्यादयः पञ्च खे आकाशे ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

( इति साधर्म्यवैधर्म्य प्रकरणम् )*

साधर्म्यवैधर्म्ये निरूप्य सम्प्रति प्रत्येकं पृथिव्यादिकं निरूपयति तत्र क्षितिरित्यादिना । गन्धहेतुरिति[1] गन्धसमवायिकारणमित्यर्थः । यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितं तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय[2] कारणत्वमुपन्यस्तम् । तथाहि—पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिध्यति, अन्यथा[3] गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः । नच पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति

* । यद्यपि मूलपुस्तकेष्वेवं प्रकरणविभागो न दृश्यते तथापि मुक्तावलिप्रकाशकारादिभिर्विभागकरणादत्र वेष्टनचिन्हयोरन्तरा पुष्पिकेयं निवेशितेति विज्ञेयं ।

१ । सामान्यतो गन्धहेतुत्वस्य कालेऽपि सत्त्वाद्व्याचष्टे गन्धसमवायिकारणमिति ।

२ । यद्यपि पृथिवीत्वस्य प्रत्यक्षतया न प्रमाणान्तरापेक्षा तथापि अयोग्यसाधारण्येन प्रत्यक्षासम्भवात् तत्साधारण्येन पृथिवीत्व सिद्ध्यार्थं तदुपन्यासः । तथाच परमाणौ पृथिवीत्वजातेरप्रत्यक्षत्वेऽपि तत्रापि गन्धोत्पत्त्या गन्धरूपकार्यहेतुकानुमानेनव तत्कारणतावच्छेदक पृथिवीत्वजातिसिद्धिरितिभावः ।

३ । अन्यथा-- गन्धत्वावच्छिन्नं प्रति हेतुत्वानङ्गीकारे, आकस्मिकत्वापत्तेः—नियतकारणानियम्यत्वापत्तेः । तथाच कदाचिज्जलादावपि गन्धोत्पादप्रसङ्ग इति भावः ।

वाच्यं तत्रापि गन्धसत्त्वात्,[४] अनुपलब्धिस्तु[५] अनुत्कटत्वेनाप्युपपद्यते, कथमन्यथा[६] तद्भस्मनि गन्ध उपलभ्यते ?। भस्मनो हि पाषाणध्वंसजन्यत्वात् पाषाणोपादानोपादेयत्वं सिध्यति, यद् द्रव्यं यद्द्रव्यध्वं-

४। गन्धसत्वात्—गन्धानुमानात्; पृथिवीत्वेनेति शेषः।

५। ननु पाषाणादौ गन्धसत्वे कथंनोपलभ्यत इत्याशङ्कायामाह अनुपलब्धिस्त्विति। अनुत्कटत्वेन—अनुद्भूतत्वेन।

६। ननु पाषाणस्य पृथिवीत्व एव मानाभावात् कथं तेन गन्धानुमानमित्याशङ्कायां तत्र पृथिवीत्वसाधनाय भूमिकामारचयति कथमन्यथेत्यादिना। नच पाषाणादौ पृथिवीत्वसत्त्व एव मानाभावे तस्यालक्ष्यत्वादेव तत्र गन्धवत्त्वलक्षणाव्याप्त्यसम्भवात् व्यर्थस्तत्र गन्धवत्त्व साधनाय पृथिवीत्वसाधनप्रयास इति वाच्यं वस्तुगतिमनुरुध्यैव, व्यवस्थापनीयत्वात्। अन्यथा—पाषाणादौ पृथिवीत्वानङ्गीकारे, तद्भस्मनि—पाषाणभस्मनि।

७। भस्मनः पाषाणोपादानोपादेयत्वसाधिकां सामान्यमुखीं व्याप्तिं प्रदर्शयति यद्द्रव्यमिति। अत्रच घटोपादानानुपादेये घटध्वंस प्रत्यक्षे घटध्वंसजन्यरूपध्वंसप्रत्यक्षे वा व्यभिचारवारणाय प्रथमं द्रव्य पदं। मिथ्याज्ञानध्वंसजन्यकायव्यूहे दण्डप्रागभावध्वंसजन्य घटे वा व्यभिचारवारणाय द्वितीयंद्रव्यपदं। नच मिथ्याज्ञानध्वंसस्य तादृश कायव्यूहहेतुतायां किंमानमिति वाच्यं झटिति प्रारब्धक्षयार्थमेव सौभरिप्रभृतीनां युगपदनेकशरीरपरिग्रहस्य पुराणेषु श्रूयमानतया तत्त्वज्ञानरहितानां युगपदनेकशरीरपरिग्रहस्याननुभविकतया च तादृश कायसमूहे मिथ्याज्ञानध्वंसस्यापि हेतुत्वेनावश्यमङ्गीकरणीयत्वात्। प्रतिबन्धकद्रव्यात्यन्ताभावजन्ये द्रव्ये (मण्यभावादिजन्ये वह्न्यादावित्यर्थः) व्यभिचारवारणायाभावमपहाय ध्वंसपर्य्यन्तानुधावनं। ध्वंस जन्यत्वञ्चादृष्टाद्वारा विवक्षितं तेन शालग्रामशिलाचक्रध्वंसजन्ये नारकीयशरीरे न व्यभिचारः।

सजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः, दृष्टश्चैतत्[८] खण्डपटे महापटध्वंसजन्ये। इत्थञ्च पाषाणपरमाणोः पृथिवीत्वात् तज्जन्यस्य पाषाणस्यापि पृथिवीत्वं तथाच तस्यापि गन्धवत्त्वे बाधकाभावः। नानारूपेति, शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्त्तते न तु जलादौ तत्र शुक्लस्यैव सत्त्वात्। पृथिव्यान्तु एकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसम्भवात्। नच यत्र नानारूपं नोत्पन्नं तत्राव्याप्तिः, रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य[९] रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य[१०] वा वाच्यत्वात्। वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वात् न्यायनये घटादावपि तत्सत्त्वाल्लक्षणसमन्वयः। षड्विध इति, मधुरकटुकषायादिभेदेन यः षड्विधो रसः स पृथिव्यामेव। जले च मधुर एव रसः। अत्रापि[११] पूर्ववद्रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणार्थोऽवसेयः। गन्धस्त्विति, द्विविध इति वस्तुस्थितिमात्रं न

८। व्याप्तिबोधार्थं दृष्टान्तमाह दृष्टश्चैतदिति।

९। द्रव्यत्वव्याप्यजलत्वादिमति जलादावतिव्याप्तिवारणाय वृत्तयन्तं। रूपद्वयवद्वृत्तिसत्तारूपजातिमति गुणादावतिव्याप्तिवारणाय द्रव्यत्व व्याप्येति। निरुक्तविशेषणाक्रान्तजलपृथिव्यन्यतरत्वमादाय जलादावतिव्याप्तिवारणाय जातीति।

१०। रूपनिष्ठ द्वित्वंन संख्यारूपं गुणेगुणानङ्गीकारा दपितु रूपद्वयविषयकापेक्षाबुद्धिविषयत्वरूपमेव, तथाच तद्घटिततया पूर्व्वकल्पस्य गौरवेण तदघटितंलक्षणमाह रूपनाशवद्वृत्तीति। नाशत्वञ्चाखण्डोपाधिरूपमेवेति नात्रगौरवमितिभावः। प्रतिपदव्यावृत्तिः पूर्व्ववद्बोध्या।

११। यत्र नाना रसा नोत्पन्ना स्तत्राव्याप्तिमाशङ्क्याह अत्रापीति।

स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः ।
नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६
अनित्या तु तदन्या स्यात् सैवावयवयोगिनी ।
सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥

तु द्विविधगन्धवत्त्वं लक्षणं द्विविधस्य व्यर्थत्वात् । द्वैविध्यञ्च सौर-भासौरभभेदेन बोध्यम् ॥ ३५ ॥

स्पर्श इति, तस्याः पृथिव्याः, अनुष्णाशीतस्पर्शवत्त्वं वायोरपि वर्त्तत इत्युक्तम् पाकज इति । इत्यञ्च पृथिव्याः स्पर्शोऽनुष्णाशी-तइतिज्ञापनार्थं तदुक्तम् । वस्तुतस्तु पाकजस्पर्शवत्त्वमात्रं लक्षणम् अधिकस्य वैयर्थ्यात् । यद्यपि पाकजस्पर्शः पटादौ[1] नास्ति तथापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः[2] । नित्येति, सा पृथिवी द्विविधा नित्या अनित्या च इत्यर्थः । अणुलक्षणा परमा-णुरूपा[3] पृथिवी नित्या ॥ ३६ ॥

तदन्या परमाणुभिन्ना पृथिवी द्व्यणुकादिः सर्वोऽप्यनित्य इत्यर्थः ।

---

१ । वैशेषिकमते पाकजस्पर्शस्य परमाणुष्वेव विद्यमानतया आदिना अवयविमात्रपरिग्रहः ।

२ । अत्र स्पर्शसमानाधिकरण जलत्वादिकमादाय जलादावतिव्या-प्तिवारणाय पाकजेति । पाकजद्रवत्वसमानाधिकरण तेजस्त्वमादाय तेजस्यतिव्याप्तिवारणाय स्पर्शेति । शेषं पूर्ववत् । ननु पृथिवीत्व-मपि पृथिवीलक्षणं सम्भवतीति तत्कथं परित्यक्तमिति चेन्न पृथिवी-त्वस्य लक्ष्यतावच्छेदकत्वा लक्षणत्वासम्भवेन तत्परित्यागात् तस्य लक्षणान्तरत्वे क्षत्यभावाच्चेति ध्येयम् ।

३ । अणुत्वस्य द्व्यणुकेपि सत्त्वादाह परमाणुरूपेति ।

मैव अनित्था पृथिव्येव अवयवतीत्यर्थः। ननु अवयविनि[४] किं मानं परमाणुपुञ्जैरेवोपपत्तेः[५]। नच परमाणूनामतीन्द्रियत्वात् घटादेः प्रत्यक्षं न स्यादिति वाच्यम् एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वात् यथा एकस्य केशस्य दूरेऽप्रत्यक्षत्वेपि तत्समूहस्य प्रत्यक्षत्वम्[६]। न च एकः स्थूलो महान् घट इति बुद्धेरनुपपत्तिरिति वाच्यम् एको महान् धान्यराशिरितिवदुपपत्तेः[७]। मैवं परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षायोग्यत्वात्[८]। दूरस्थकेशस्तु नातीन्द्रियः[९] सन्निधाने तस्यैव[१०] प्रत्यक्षत्वात्। न च तदानीम् दृश्यपरमाणुपुञ्जस्यो-

---

४। वौद्धः शङ्कते नन्विति।

५। नन्वयं घट इति प्रतीतिरेव तत्र प्रमाणंभविष्यतीत्यत आह परमाणुपुञ्जैरेवेति। नचायं घट इति प्रतीतेः परमाणुपुञ्ज विषयकत्वे मृत्पिण्डेपि तथा प्रतीत्यापत्ति रिति वाच्यं विलक्षण संस्थान विशिष्टत्वेन परमाणु पुञ्जानां विशेषणीयत्वात्।

६। परमाणूना मनेकत्वादणुत्वाच्चेतिभावः।

७। यथाधान्य समूहस्यैकत्वात् संयोगविशेषस्यैव महत्त्वात्मकत्वाच्च एको महानिति प्रतीति स्तथा परमाणुपुञ्जस्यापीतिभावः। समूहपदार्थस्तावद्धान्य निष्ठ संख्याविशेषएव नतु तद्विशिष्टधान्यानि तत्रैकत्वाभावात् प्रत्येक मेकत्व सत्वेपि तत्र राशिपद प्रयोगानुपपत्ति रितिध्येयं।

८। स्वभावतोऽयोग्यानां परमाणूनां परस्परसंयोगमात्रेण योग्यत्वासम्भवात् अन्यथा पिशाचादीना मपि परस्परसंयुक्तानां प्रत्यक्षत्वापत्तेरिति भावः।

९। दृष्टान्त वैषम्यं दर्शयति दूरस्थ केश इति।

१०। तस्य—दूरस्थकेशस्य, एवकारश्च तच्छब्द प्राक्तन सन्निधा-

त्पन्नत्वात्[११] न प्रत्यक्षत्वे विरोध इति वाच्यम् अदृश्यस्य दृश्यानुपादानत्वात् अन्यथा चक्षुरूष्मादिसन्ततेः कदाचिद् दृश्यत्वप्रसङ्गात्। न चातितप्ततैलादौ कथमदृश्यदहनसन्ततेः दृश्यदहनोत्पत्तिरिति वाच्यं तत्र[१२] तदन्तःपातिभिः दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात्। न च अदृश्येन द्व्यणुकेन कथं त्रसरेणोरुत्पत्तिरिति वाच्यम्? यतो न वयं दृश्यत्वमदृश्यत्वं वा कस्यचित् स्वभावा[१३]दाचक्ष्महे परन्तु महत्त्वोद्भूतरूपादिकारणसमुदायवतो दृश्यत्वं तदभावेचादृश्यत्वं। तथा च त्रसरेणोर्महत्त्वात् प्रत्यक्षं न तु द्व्यणुकादेस्तदभावात्। न हि त्वन्मतेऽपीदं सम्भवति परमाणौ महत्त्वाभावात्। इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षत्वादनित्यत्वं, तेषां चावयवावयवधारा-

---

नपदेनान्वेति, एवञ्च सन्निधानत एव तस्य प्रत्यक्षत्वादित्यर्थः। तथाच दूरत्वस्य प्रतिवन्धकत्वादेव तद्दशाया मप्रत्यक्षत्वं नतु स्वाभाविक मप्रत्यक्षत्वं तस्येतिभावः।

११। क्षणभङ्गवादिनां मते परमाणूनामप्युत्पत्ति स्वीकारादितिभावः।

१२। तत्र—तादृशदहनोत्पत्तिस्थले, तदन्तःपातिभिः—अतितप्ततैलान्तःपातिभिः, तथाच तत्र दृश्यदहनावयवाःसन्तोपि तैलान्तःपातितया न दृश्यन्ते, सुतरां दृश्यादेव दृश्योत्पत्तिरिति कुतो व्यभिचारावसर इति भावः।

१३। स्वभावात्—कारण नैरपेक्ष्यात्, तथाच त्वन्मते अतीन्द्रियत्वं प्रत्यक्षत्वञ्च स्वाभाविकमित्यतीन्द्रियस्यैन्द्रियिक पदार्थोत्पादकत्वे चक्षुरादितः कदाचिद्दृश्यत्वमापादितं, मन्मते तु कारणवलात्त्र्यणुकस्य प्रत्यक्षत्वेपि तदभावाद्द्व्यणुकस्यातीन्द्रियत्वसम्भवाद् दृष्टस्य दृश्यरणत्वेपि न क्षतिरिति भावः।

या अनन्तत्वे मेरुसर्षपयोरपि[१४] साम्यप्रसङ्गः। अतः क्वचिद्विश्रामो वाच्यः, यत्र च विश्रामस्तस्यानित्यत्वेऽसमवेतकार्योत्पत्तिप्रसङ्गः[१५] स्यात् अतस्तस्य नित्यत्वं । महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्ति इति तस्य परमाणुत्वसिद्धिः । न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यं, त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात्[१६] घटवदित्यनुमानेन तदवयवसिद्धौ, त्रसरेणोरवयवाः सावयवा महदारम्भकत्वात् कपाल-वदित्यनुमानेन तदवयवसिद्धेः। न चेदमप्रयोजकम् अपकृष्टमहत्त्वं प्रति अनेकद्रव्यवत्त्वस्य[१७] प्रयोजकत्वात्। न चैवं क्रमेण तदवय-

---

१४। अपिशब्दः साम्यप्रसङ्ग इत्युत्तरं सम्बध्यते तेन च द्व्यणुकस्यावयवारब्धत्वे महत्त्वापत्तिः समुच्चीयते। साम्यं—परिमाणतारतम्याभावः, परिमाणोत्कर्षापकर्षप्रयोजिकाया अवयव संख्याया उभयत्र साम्यादितिभावः । नच मेर्ववयवानां सर्षपतुल्यपरिमाणवत्त्वेऽपि सर्षपावयवानां मेर्ववयवतुल्यपरिमाणवत्त्वाभावेन अवयवपरिमाणविशेषाद्विशेष इति वाच्यं मेर्ववयव सर्षपावयवयोरपि अनन्तावयवत्वेन तत्परिमाण तारतम्याभावस्यापादनीयत्वात् । नच मेरुसर्षपयोरवयवगत प्रचयाख्य संयोगविशेषाद्विशेष इति वाच्यं प्रचय विशेषस्यापि संख्याविशेषनियम्यत्वेन संख्याविशेषाभावे तद्विशेषानुपपत्तेरिति-ध्येयम्।

१५। ननु सिद्धान्तिभिरपि ध्वंसस्यासमवेतकार्य्यस्योत्पादाङ्गीकारात्आपत्तिरियमसङ्गतेति चेन्न भावत्वेनापिकार्य्यस्य विशेषणीयत्वात्।

१६। आत्मनि व्यभिचारवारणाय चाक्षुषपदं, घटाभावे व्यभिचारवारणाय च द्रव्यपदं।

१७। अनेक द्रव्यवत्त्वञ्च—स्वसमवेत समवेतत्व सम्बन्धेन बोध्यं

**योनिजादिर्भवेद्देह इन्द्रियं घ्राणलक्षणम् ।**
**विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥**

वधारापि सिध्येदिति वाच्यम् अनवस्थाभयेन तदसिद्धेः । साधारणमिति, सा कार्य्यरूपा पृथिवी त्रिविधा शरीरेन्द्रियविषयभेदादित्यर्थः ॥ ३७ ॥

तत्र देहमुदाहरति योनिजमयोनिजञ्चेत्यर्थः[1]। योनिजमपि जरायुजमण्डजञ्च[2], जरायुजं मानुषादीनाम्[3], अण्डजं सर्पादीनाम्[4]। अयोनिजं स्वेदजोद्भिज्जादिकम्[5]। स्वेदजाः कृमिदंशाद्याः[6], उद्भिज्जास्तरुगुल्माद्याः । नारकिणां शरीरमपि अयोनिजम् । नच मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यम् ? गन्धादिमत्त्वस्यैव[7]

---

केवल समवेतत्व सम्बन्धेन तथात्वोक्तौ च परमाणु साधकानुमानस्या प्रयोजकत्व शङ्काया अनिवृत्तेः ।

१ । योनिजं शुक्रशोणितयोः परस्परमेलन जन्यं; नातः स्वेदजादीनामपि कदाचिद् योनि द्वारा निर्गतत्व सम्भवेपि क्षतिः ।

२ । गर्भ वेष्टन चर्म्म पुटकं जरायुः ।   ३ । आदिना पश्वादीनां परिग्रहः ।

४ । आदिना विहङ्गमादीनां परिग्रहः ।

५ । आदिना देवादि शरीराणां परिग्रहः । तच्छरीराणां धर्म्म विशेष सहितेभ्योऽणुभ्य एवोत्पत्तेःस्वीकारात् । "योनिं विना न शरीर" मित्येवं विधागमे च योनि पदं कारणमात्र परं शरीर पदं वा मनुष्य शरीर परमिति मन्तव्यम् ।

६ । अधर्म्म विशेष सहितेभ्योऽणुभ्य एव तच्छरीराणा मुत्पत्तेः स्वीकारादितभावः ।

७ । आदिना शुक्लेतररूप परिग्रहः ।

प्रमाणत्वात्। नच क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यं तथा सति जलत्वपृथिवीत्वादिना सङ्करप्रसङ्गात्[९]। नच तर्हि जलत्वादिकमेवास्तु न तु पार्थिवत्वमिति वाच्यं क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानात् गन्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः। तेन[१०] पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम्। शरीरत्वन्तु न जातिः पृथिवीत्वादिना साङ्कर्यात्[११] किन्तु चेष्टाश्रयत्वं[१२], वृक्षादीनामपि चेष्टासत्त्वान्नाव्याप्तिः। न च वृक्षादीनां शरीरत्वे

---

८। आदिना व्यूहावकाशयोः ( व्यूहः—सदागतिमत्त्वादिरूप वायवीयत्व साधिका क्रिया, अवकाशः—मुखादावन्नादिगत्यप्रतिबन्धक आकाशीयत्व साधकः, तयो रित्यर्थः ) परिग्रहः। क्लेदः क्षरणं स्वेद इतियावत्। उष्मा—पाकः औष्ण्यमिति यावत्; तच्च शरीरसम्बन्धेन पुष्पादौ रूपादि परावृत्त्या अनुमीयते अनुष्णात्तदनुपपत्तेः।

९। तथाहि—पार्थिवशरीरे यदि जलत्वं पृथिवीत्वञ्च स्यात्तदा परस्परानधिकरणवृत्तित्वविशिष्टयो स्तयोः पार्थिवशरीरावच्छेदेन सामानाधिकरण्यात् साङ्कर्य्यं प्रसङ्गेन जातित्वमेव नस्या दित्यर्थः।

१०। ननु कथं तर्हि शरीरे पाञ्चभौतिकत्वव्यवहार इत्यत आह तेनेति; शरीरस्य पार्थिवत्वसाधनेनेत्यर्थः। एवञ्च शरीरे पाञ्च भौतिकत्व व्यवहारो न पञ्चभूतोपादानकत्वनिबन्धनः किन्तु तज्जन्यत्व निबन्धन एव, तथाच सर्वत्रैव एकस्यो पादानत्वं चतुर्णां निमित्तत्व मिति विवेकः। निविड पाषाणादौ भेकादीना मनुत्पत्त्या अवकाश विधया आकाशस्यापि शरीरनिमित्तत्वमिति सूक्ष्म मीक्षणीयम्।

११। पृथिवीत्वाभाववज्जलीयशरीरवृत्ति शरीरत्वस्य शरीरत्वाभाववद् घटादिवृत्ति पृथिवीत्वस्य च मनुष्यादि शरीरे सामानाधिकरण्येनेत्यर्थः।

१२। चेष्टात्वं जातिविशेषः चेष्टत इति प्रत्यक्ष-सिद्धः।

किं मानमिति वाच्यम् आध्यात्मिकवायुसम्बन्धस्य[१३] प्रमाणत्वात्, तत्रैव किं मानमिति चेत्? भग्नक्षतसंरोहणादिना[१४] तदुन्नयनात्। यदि हस्तादौ शरीरव्यवहारो न भवति तदान्त्यावयवित्वेन[१५] विशेषणीयम्। न च यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरिति वाच्यम् एतादृशे प्रमाणाभावात्। अथ वा[१६] चेष्टावदन्त्यावयविमात्रवृत्तिद्रव्यत्वव्याप्यव्याप्यजातिमत्त्वं[१७] अन्त्यावयविमात्रवृत्ति चेष्टावद्वृत्ति जातिमत्त्वं वा तत्। मानुषत्व चैत्र त्वादि जातिमादाय लक्षणसमन्वयः। न च नृसिंहशरीरे कथं लक्षणसमन्वयः? तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावात्[१८] जलीयतैजसशरीरवृत्तितया देवत्वस्यापि जातित्वाभावादिति वाच्यं कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजा-

---

१३। आध्यात्मिक वायुः प्राणादि रूपः।

१४। आदिना वृद्धि परिग्रहः। वृद्धिश्चावयवोपचयः। तदुन्नयनात्—आध्यात्मिकवायुसम्बन्धानुमानात्।

१५। अन्त्यावयवित्वेन—द्रव्यानारम्भक द्रव्यत्वेन।

१६। मृतशरीरे चेष्टाया अभावेनाव्याप्तेराह अथवेति। घटत्वमादाय घटेऽतिव्याप्तिवारणाय चेष्टावदिति। हस्तादावतिव्याप्तिवारणाय अन्त्यावयवीति। न च हस्तत्वादिकं न जातिः पृथिवीत्वादिना साङ्कर्य्यादिति वाच्यं पृथिवीत्वव्याप्य नाना हस्तत्वाङ्गीकारात्।

१७। पृथिवीत्वादिरूप तादृशजातिमति घटादावतिव्याप्ति रतो लक्षणान्तरमाह अन्त्यावयवीत्यादि। अन्त्यावयविमात्रवृत्तीत्यनेन द्रव्यत्वादिजाति—व्युदासः। चेष्टा च हिताहितप्राप्तिपरिहारार्था क्रिया ग्राह्या न तु स्पन्दनमात्रं तस्य घटादावपि सत्त्वादित्यवधेयम्।

१८। ननु देवत्व जातिमादाय तत्र लक्षण समन्वयो भव दित्याशङ्कायां तस्य जातित्वाभावं दर्शयितुमाह जलीयेत्यादि।

त्या लक्षण समन्वयात् । इन्द्रियमिति, घ्राणेन्द्रियं पार्थिवमित्यर्थः। पार्थिवत्वं कथमिति चेत् ? इत्थं घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये[19] गन्धस्यैव व्यञ्जकत्वात्, कुङ्कुमगन्धादिव्यञ्जकगोघृतवत् । न च दृष्टान्ते स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यं, परकीयरूपाद्यव्यञ्ज-कत्वस्य तदर्थत्वात्[20] । नच नवशरावगन्धव्यञ्जकजलेऽनैकान्तिकत्वमिति वाच्यं,[21] तस्य शक्तुरसाभिव्यञ्जकत्वात् । यद्वा[22] परकीयेति न देयं

---

१९ । रस गन्ध स्पर्शाः आदि पदार्थाः । नवशराव गन्धव्यञ्जक जले मनसि च व्यभिचारवारणाय रूपाद्यव्यञ्जकार्थक एव कारः। घ्राणेन्द्रियस्य गन्धत्वस्यापि व्यञ्जकत्वात् हेत्वप्रसिद्धिवारणाय मध्यान्तम् ।

२० । तदर्थत्वादिति; हेतुवाक्यघटक मध्यान्त समभिव्याहृतैवकारार्थत्वादित्यर्थः । तथाच रूपादौ परकीयेति विशेषण दानस्यैव फलितत्वात् घृतादौ स्वीय रूपादि व्यञ्जकत्वेपि न दृष्टान्त हानिरिति भावः ।

२१ । तस्येति—नवशरावगन्धव्यञ्जकजलस्येत्यर्थः । नच येन नवशरावगन्धव्यञ्जकजलेन सक्तुरसो नाभिव्यञ्जित स्तत्र जलविशेषे व्यभिचार इति वाच्यं परकीय रूपादिविषयक साक्षात्कार स्वरूपायोग्यत्वस्य विवक्षितत्वात्, तथाच तादृशजलेपि रसव्यञ्जकतावच्छेदकजलत्वस्य सत्वात् तादृश साक्षात्कार स्वरूपायोग्यत्वाभावेन न व्यभिचार इति भावः ।

२२ । परकीयेति विशेषणाप्रवेशे लाघवादाह यद्वेति । वस्तुतस्तु रूपाद्यव्यञ्जकत्वे सतीत्यत्र हेतु त्रय एव तात्पर्य्यं वर्णनीयं अन्यथा रसाव्यञ्जकत्वसति गन्ध व्यञ्जकत्वमात्रस्यैव हेतुत्वसम्भवेन इतरांश वैयर्थ्यात् । एवञ्च नव शराव गन्ध व्यञ्जकजले लुप्ताक्षरमसी नीलरूप व्यञ्जकत्वेन प्रथम हेतो र्व्यभिचाराभावेपि तृतीय हेतो र्व्यभिचारो दुष्परिहर एवेत्यस्वरसेनैव यद्वेति कल्पान्तरानुसरणम् । अत्र च

---

वायूपनीतसुरभिभागस्य दृष्टान्तत्वसम्भवात्। नच घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्जकत्वात् तत्र व्यभिचार इति वाच्यं, द्रव्यत्वे सतीति विशेषणात्[२३]। विषय इति, उपभोगसाधनं विषयः। सर्वमेव हि कार्य्यजातम् अदृष्टाधीनं[२४] यत् कार्य्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात् परम्परया वा जनयत्येव[२५]। न हि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति तेन[२६] द्व्यणुकादिब्रह्माण्डं सर्वमेव विषयो भवति। शरीरेन्द्रिययोर्विषयत्वेऽपि[२७] प्रकारान्तरोपन्यासः शिष्यबुद्धिवैशद्यार्थः॥ ३८॥

---

परकीयत्वाघटितत्वेन हेतु त्रयस्यैव नास्ति स्वीय स्पर्शादिव्यञ्जके तत्र व्यभिचार इति चिन्तनीयम्।

२३। विषयत्वं न जातिः सामान्यादौ सत्त्वा दत स्तल्लक्षणमाह उपभोगसाधनमिति।

२४। कार्य्यमात्रं प्रत्यदृष्टस्य हेतुत्वञ्च कदाचित् साक्षात् कदाचिच्च सामग्री—सम्पादकतया एतदर्थमेव साक्षात् परम्परा साधारण जन्यत्वबोधकमधीनपदमुपात्तम्। यददृष्टाधीनमिति यस्य पुरुषस्य अदृष्टाधीनं, तत्—तत्कार्य्यं तदुपभोगं—तस्य पुरुषस्य उपभोग मित्यर्थः।

२५। नन्वेवं साक्षात् परम्परा साधारणोपभोगसाधनत्वमेव विषयत्वं फलितं, तस्य च परमाणावपि सत्त्वेन "द्यणुकादि ब्रह्माण्डान्त" इत्यादि ग्रन्थोऽसङ्गत इति चेन्न जन्यपृथिव्या एव त्रिप्रकारेण विभाग करणात् परमाणोर्विषयता सत्त्वेऽपि तत् परित्यागे क्षतिविरहात्।

२६। तेन—द्व्यणुकादिकार्य्यस्य तत्तत् पुरुषोपभोग साधनत्वेन।

२७। नन्वेवं सर्व्वस्यैव विषयत्वेन शरीरेन्द्रियादि भेदेन पृथिव्यास्त्रैविध्यं न सिध्येदित्याह शरीरेन्द्रिययो रिति।

वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ।
स्नेह स्तत्र द्रवत्वन्तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥

जलं निरूपयति वर्णः शुक्ल इति, स्नेहसमवायिकारणतावच्छेदकतया[1] जलत्वं जातिः सिध्यति। यद्यपि[2] स्नेहत्वं नित्यानित्यवृत्तितया न कार्य्यतावच्छेदकं, तथापि[3] जन्यस्नेहत्वं तथा बोध्यम्। अथ परमाणोर्जलत्वं न स्यात् तत्र जन्यस्नेहाभावात् तस्य[4] च नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भावनियमादिति चेन्न, जन्यस्नेहजनकतावच्छेदकतया जन्यजलत्व[5] जातेः सिद्धौ तदवच्छिन्न[6]जनकतावच्छेद-

---

१। ननु शब्दकारणतायां जात्यवच्छिन्नत्वाभावाद् व्यभिचारित्वेन कारणतावच्छेदकत्वस्य जातित्व-साधकत्वासिद्धौ स्नेहजनकतावच्छेदकतया जलत्वसिद्धावपि कथं तस्य जातित्वमिति चेन्न जलत्वसिद्धौ बाधकाभावाल्लाघवाच्च तस्य जातित्वमिति मन्तव्यम्।

२। नित्यवृत्तिधर्म्मस्य कार्य्यतावच्छेदकत्वाभावेन स्नेहत्वस्य कार्य्यतावच्छेदकत्वं न सम्भवतीति शङ्कते यद्यपीति।

३। परिहरति तथापीति। तथा—कार्य्यतावच्छेदकं।

४। ननु यथाऽरण्यस्थदण्डे फलानुपधायकेऽपि कारणतावच्छेदकतया दण्डत्वादि जातिः तथात्रापि (स्नेहानुपधायक परमाणावपि) भविष्यतीत्याह तस्यचेति। दण्डादेः स्वरूपयोग्यतायान्तु न कापि क्षतिः तस्यानित्यत्वेन फलावश्यम्भावाभावादितिभावः।

५। जन्यजलत्वजातेः—जन्यजलमात्र वृत्ति जातेरित्यर्थः, तेन विशिष्टस्य जातित्वानङ्गीकारेण जन्यत्वविशिष्टजलत्वस्य जातित्वविरहेऽपि न क्षतिः।

६। तदवच्छिन्नेति—जन्यजलत्वावच्छिन्नेत्यर्थः। नचैवं जलान्त्यावयविनि जलत्वं नस्यात् तादृशजले जनकतावच्छेजकजातिस्वीकारे

कतया जलत्वजातिसिद्धेः । शुक्लरूपमेव जलस्येति दर्शयितुमुक्तं वर्णः शुक्ल इति, न तु शुक्लरूपवत्त्वं लक्षणम्, अथवा नैमित्तिकद्रवत्ववद्वृत्ति-रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थः ।

---

तस्यायोग्यतया एवासम्भवादितिवाच्यं जलमात्रस्य जलान्तरसंयोगेन वृहज्जलजननयोग्यतायाः सत्त्वात्, जलान्त्यावयवित्वानुपगमादिति ध्येयम् ।

७ । पृथिव्यादावतिव्याप्तेरिति शेषः । शुक्लरूपवत्त्वस्य लक्षणत्वे पृथिव्यादावतिव्याप्ति मपाकर्त्तुमाह अथवेति । पृथिवीत्वजातिमादाय पृथिव्यादावतिप्रसङ्ग वारणाय मवृत्त्यन्तं । द्रव्यत्वव्याप्य वायुत्वजातिमादाय वायावतिप्रसङ्ग वारणाय रूपवद्वृत्तीति । पटत्वादिकमादाय पटादावतिप्रसङ्गवारणाय साक्षादिति । द्रव्यत्व साक्षाद्व्याप्यत्वञ्चात्र द्रव्यत्वव्याप्यव्याप्यत्वमात्रं नतु द्रवत्व व्याप्यत्वस्यापि तत्रान्तर्भावः रूपवद्वृत्तित्वविशेषणनैव रूपत्वादीनांवारणात्तन्निवेशे प्रयोजनाभावात् । यद्यपि अवश्योपस्थितिकद्रवत्वस्यैव रूपस्थाने प्रवेशोयुक्तस्तेनापि वायुत्वादेर्व्वारणात् एवञ्च द्रवत्ववद्वृत्तित्वाभावादेव पटत्वादीनामपि वारण सम्भवे द्रव्यत्व साक्षाद्व्याप्यत्वमपि न देयमिति लाघवं तथापि मूले वर्णपदस्ये रूपार्थकत्वेन रूप घटित लक्षणस्योक्तत्वात्तदघटित लक्षणपरिस्कारे मूलविरोधःस्यादिति तथा न कृतमिति ध्येयं । जल घटान्यतरत्वमादाय घटादावतिव्याप्ति वारणाय जातीति ।

८ । मूले रूपार्थक वर्णपदस्य शुक्लपदस्य च सत्त्वात् रूपपदाघटितस्येव शुक्लपदाघटितस्यापि लक्षणस्य न मूलानुसारित्वमित्यसन्तोषनिराकरणाय उभय पदघटित मेकं लक्षणमाह अभास्वरेति । पृथिवीत्वमादाय पृथिव्यामति व्याप्तिवारणाय असमानाधिकरणान्तं । जलत्वस्य शुक्लरूप समानाधिकरण्या दसम्भव वारणाय शुक्लेतरेति । तैजसत्व-

तेन स्फटिकादौनातिव्याप्तिः[९]। रसस्पर्शाविति, जलस्य मधुर एव रसः शीत एव स्पर्शः। तिक्तावृत्तिमधुरवद्वृत्ति[१०] द्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थ स्तेन शर्करादौ नाति व्याप्तिः। शीतेतर स्पर्शवदवृत्ति[११] स्पर्शवद्वृत्ति द्रव्यत्वसाक्षाद्व्याप्य जातिमत्त्वं तदर्थः। ननु शुक्लरूपवत्त्वमेवेति कुतः कालिन्दीजलादौ नीलोपलब्धेरिति चेन्न नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावात् जले नीलरूपासम्भवात्। कालिन्दीजले नीलप्रतीतिः स्वाश्रयोपाधिकी,[१२] अतएव

---

मादाय तेजस्यतिव्याप्ति वारणायाभास्वरेति। इतरेषाञ्चव्यावृत्तिः पूर्व्ववद्बोध्या।

९। शुक्लरूपवत्त्वमात्रस्य लक्षणत्वे तत्रातिव्याप्तिः स्यात् एतत् कल्पद्वये च स्फटिकत्वस्य द्रव्यत्वसाक्षाद्व्याप्यत्व विरहात् पृथिवीत्वादीनाञ्च लक्षणाघटकत्वात् नातिव्याप्तिसम्भावनापीति ध्येयम्।

१०। पृथिवीत्वमादाय पृथिव्यामतिव्याप्ति वारणाय तिक्तावृत्तीति। तेजस्त्वादिकमादाय तेज आदावतिव्याप्तिवारणाय मधुरवद्वृत्तीति। शर्करात्वमादायातिव्याप्तिवारणाय साक्षाद्व्याप्येति। जलशर्करोभयत्वमादाय तद्वारणाय जातीति।

११। द्रव्यत्वरूपजातिमादायातिव्याप्तिवारणाय अवृत्त्यन्तं। जलत्वस्यापि स्पर्शवद्वृत्तित्वादसम्भववारणाय स्पर्शवद्वृत्तीति। वस्तुवस्तु शीत स्पर्शवत्त्वस्य जल लक्षणत्वेपि दोषाभावादेतत् पारिभाषिक मस्य दिनकरीव्याख्यानञ्च प्रक्षिप्तमिति प्रतिभाति, तावतैव "शीतस्पर्शवत्त्वस्य जललक्षणत्वे कापि दोषाभावात्तन्निरुक्ति र्न कृतेति मन्तव्य" मिति रौद्रीपाठोपि सङ्गच्छत इत्यनुसन्धेयम्।

१२। आश्रयविशेषसंयोगरूप दोष जन्येत्यर्थः।

वियति विक्षेपे धवलिमोपलब्धिः[१३]। अथ जले माधुर्य्ये किं मानं ? न हि प्रत्यक्षेण कोऽपि रस स्तत्रानुभूयते, न च नारिकेलजलादौ माधुर्य्यमुपलभ्यत एवेति वाच्यं तस्याश्रयोपाधिकत्वात्, अन्यथा जम्बीररसादावम्लुपलब्धेरम्लादिमत्त्वमपि स्यादिति चेन्न हरीतक्यादिभक्षणस्य जलरसव्यञ्जकत्वात् । नच हरीतक्यामेव जलोष्णसंयोगाद्रसान्तरोत्पत्तिरिति वाच्यं कल्पनागौरवात्[१४]। पृथिवीत्वस्या[१५]म्लादिजनकतावच्छेदकत्वाच्च जले नाम्लादिकं, जम्बीरवसादौ[१६] तु

१३ । तदानीमाश्रयविशेषसंयोगरूप निरुक्त दोषाभावादिति भावः ।

१४ । अवयवरसाजन्यस्य पृथिवीरसस्याग्निसंयोग साध्यत्व दर्शनादेतदनुरोधमात्रेण जल संयोगस्यापि पृथिवी रसोत् पादकत्व स्वीकारे अतिरिक्त कार्य्यकारणभावस्य हरितक्यां मधुररसस्य च कल्पने गौरवादिति भावः ।

१५ । नन्वस्तु जले मधुरो रस स्तथापि जम्बीर जलादौ प्रत्यक्षसिद्धस्याम्लरसस्यापि स्वीकारे वाधकाभाव इत्यत माह पृथिवीत्वस्येति ।

१६ । ननु जम्बीरसलिलादावम्लप्रत्यक्षा जलत्वेनाम्लादिरसेऽपि तुल्यवद्धेतुत्वं स्यादित्यत आह जम्बीररसादाविति । तथाच—जम्बीर गताम्लरसस्यैव स्वसमवायिसंयोगेन तद्गतजले प्रतीतिरित्यर्थः । नच जम्बीरगतरसस्य जले भानं जलगतरसस्य वा जम्बीरे भान मित्यत्र विनिगमकं दुर्लभमिति वाच्यं शुष्केऽपि जम्बीरे माम्ल प्रतीते स्तत्राम्लरसस्यावश्यकत्वे तस्यैव तद्गतजले परम्परया प्रतीतेर्युक्तत्वात् । हरितक्यान्तु मधुररसाभावा न्न परम्परया तद्गत माधुर्य्यस्य जले प्रतीतिः सम्भवतीत्यनुसन्धेयम् । वस्तुतस्तु निदाघनिपीत निर्म्मलगङ्गाजलमाधुर्य्यस्य प्रत्यक्षसिद्धस्यापलापासम्भवान्मधुरएवेतियुक्तं, एवञ्च न लाघवगौरव विचारावसरोपीपि तत्त्वम् ।

आश्रयोपाधिकी तथा प्रतीतिः।[१७] एवंजन्यशीतस्पर्शजनकतावच्छेदकं जन्यजलत्वं तदवच्छिन्नजनकतावच्छेदकं जलत्वं बोध्यं घृष्टचन्दनादौ[१८] तु शैत्योपलब्धिश्चन्दनान्तर्वर्त्तिशीततरसलिलस्यैव।[१९] तेजः संयोगाज्जले औष्णप्रतीतिरौपाधिकी स्फुटैव, तत्र पाकासम्भवात्। स्नेहस्त्रेति, घृतादावपि तदन्तर्वर्त्तिजलस्यैव[२०] स्नेहः जलस्य स्नेहसमवायिकारणत्वात्। तेन जल एव स्नेह इति मन्तव्यम्। द्रवत्वमिति, सांसिद्धिकद्रवत्वत्वं जातिविशेषः प्रत्यक्षसिद्धस्तदवच्छिन्नजनकतावच्छेदकमपि[२१] तदेवेति भावः।[२२] तैलादावपि जलस्य द्रवत्वं, स्नेहप्रकर्षेण[२३] च दहनानुकूल्यमिति वक्ष्यति॥ ३९॥

---

१७। जलत्वजातावनुमानान्तरं प्रमाणमाह एवं मिति।

१८। ननु जलत्वाभावेऽपि घृष्टचन्दनादौ शैत्योत्पत्तेर्व्यभिचारेण कथं जन्य जलत्वेन तत्र हेतुत्वमत आह घृष्टेति।

१९। पूर्वं शीत एव स्पर्श इत्युक्तं तत् साधयति तेजः संयोगादिति। तत्र—जले, पाकासम्भवस्तु उपरिष्टादुपपादनीयः।

२०। स्वाश्रय संयोगेन प्रतीयत इति शेषः।

२१। तदवच्छिन्नजनकतावच्छेदकं—सांसिद्धिकद्रवत्वत्वावच्छिन्नजनकतावच्छेदकं, तदेव—जन्यजलत्वमेव। यथैवंरीत्या परमाणु व्यावृत्त माद्यक्षणिक मेकं जलत्वं परमाणु साधारणं द्वितीय मिति जलत्वयोर्भेदेऽपि भेदाग्रहः कुत इति चेत् समनियत याप्य व्यक्तिवृत्तित्वादिति।

२२। आदिपदेन क्षीर परिग्रहःनतु घृतस्य तत्र नैमित्तिकद्रवत्वस्य समवायेनैव सत्त्वात्।

२३। ननु तैले जलस्य सत्त्वे तैलस्य दहनानुकूल्यं नस्यात्? जलस्य दहन प्रातिकूल्यादित्यत आह स्नेह प्रकर्षेणेति। अपकृष्टस्नेहस्यैव दहन

नित्यतादि प्रथमवत् किन्तु देहमयोनिजम् ।
इन्द्रियं रसनं सिन्धुर्हिमादिर्विषयो मतः ॥ ४० ॥

प्रथमवदिति, पृथिव्या इवेत्यर्थः । तथाहि—जलं द्विविधं नित्यमनित्यञ्च, परमाणुरूपं नित्यं, द्व्यणुकादिकं सर्वमनित्य मवयवसमवतञ्च। पृथिवीतो यो विशेषस्तमाह किन्त्विति, अयोनिजमिति अयोनिजमेवेत्यर्थः। जलीयं शरीर[24] मयोनिजं वरुणलोके प्रसिद्धम्[25] इन्द्रियमिति, जलीयमित्यर्थः। तथाहि—रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति[26] रसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत्। रसनेन्द्रियसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम्। विषयं दर्शयति सिन्धुर्हिमादिरिति, सिन्धुः समुद्रः हिमं तुषारः आदिपदात्[27] सरित्कासारकरकादिः सर्वो ग्राह्यः। न च हिमकरकयोः कठिनत्वात् पार्थिवत्वमिति वाच्यम् ऊष्मणा विलीनस्य[28] तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात्, यद्द्रव्यं[29] यद्द्रव्यध्वंसजन्यम् इति व्याप्ते जलोपादानोपा-

---

प्रातिकूल्यमितिभावः। वक्ष्यति—स्नेह निरूपणावसरेइति शेषः।

२४। जलीयं शरीरन्तु पार्थिवावयवै रुपष्टब्धं बोध्यं तेन जलमात्रे हस्तपदादि व्यवस्थाया असम्भवेपि न क्षतिः।

२५। ननु तादृश शरीरेमानाभावोऽनुपलम्भा दित्यत आह वरुण लोक इति। तत्र श्रुतिरेव प्रमाण मिति भावः।

२६। रस व्यञ्जक मनसि व्यभिचारवारणाय सत्यन्तं।

२७। कठिनत्वात्—कठिन स्पर्शवत्त्वादित्यर्थः।

२८। विलीनस्य तस्येति सप्तम्यर्थे षष्ठी, क्वचित् विलीनयो रिति पाठः सच स्पष्टार्थकः।

२९। ननु विलीनता नैमित्तिक द्रवत्वमेव, तदुक्त मुष्मनेति तच्च न जलत्वव्यञ्जकं यदिच विलीनत्वस्य नष्टार्थकत्वं तथापि करकादि-

स्पर्श उष्णस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्* ।
नैमित्तिकं द्रवत्वन्तु नित्यतादि च पूर्ववत् ॥ ४१ ॥

द्येयत्वसिद्धेः । अदृष्टविशेषेण[३०] वा द्रवत्वनिरोधात् करकादीनां काठिन्यप्रत्ययस्य भ्रान्तत्वात् ॥ ४० ॥

तेजो निरूपयति । स्पर्शउष्णइत्यादिना । उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः, इत्थञ्च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः, तस्य परमाणुवृत्तित्वं तु जलत्वस्येवा-[१] नुसन्धेयम् । न चोष्णस्पर्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यं तत्रापि उष्णत्वस्य सत्त्वात्, किन्तु तदन्तःपातिजलस्पर्शेनाभिभवाद-

---

विनाशोत्तरं द्रव्यान्तरोत्पादात्तत्रैव द्रवत्त्वजलत्वयोः प्रत्यक्षं न करकायां नष्टत्वा दत आह यद्द्रव्यमिति । तथाच करकानाशोत्पन्न द्रव्यान्तरे जलत्वस्य प्रत्यक्षसिद्धत्वात् यद्द्रव्य यद्द्रव्य ध्वंस जन्यं तत्तदुपादानोपादेयमितिव्याप्त्या करकादिषु जलत्व सिद्धि रितिभावः।

३० । ननु हिम करकयोः पार्थिवत्वाभावे कथं काठिन्यप्रत्यय इत्यत आह अदृष्ट विशेषणेति । तथाच प्रतिबन्धक बलाद्द्रवत्वाग्रहे भ्रान्तिरूपैव काठिन्य प्रतीति रिति भावः ।

* अत्र शुक्लेति स्वरूपकथनं भास्वर रूपमात्रस्य लक्षणत्वेऽतिप्रसङ्गाभावात् । भास्वरत्वञ्च तेजोरूपमात्रवृत्ति शुक्लत्वव्याप्यजाति विशेषः ।

१ । यथाच जन्यजलत्वावच्छिन्न जनकतावच्छेदकतया जलपरमाणौ जलत्वजातिसिद्धि स्तथा जन्य तेजस्त्वावच्छिन्न जनकतावच्छेदकतया तेजः परमाणावपि तेजस्त्व जाति सिद्धि रित्यर्थः । इदमुपलक्षणं समवायेन विलक्षण नीलोत्पत्तित्वावच्छिन्नं प्रति समवायेन

ग्रहः । एवं रत्नकिरणादौ पार्थिवस्पर्शेनाभिभवाच्चक्षुरादौ चानुद्भूतत्वादग्रहः । रूपमित्यादि, वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवात् शुक्लत्वाग्रहः । ननु तद्रूपाग्रहे धर्मिणोऽपि[२] चाक्षुषत्वं न स्यादिति[३] चेन्न अन्यदीयरूपेणापि धर्मिणोग्रहसम्भवात् शङ्खस्येव पित्तपीतिम्ना । वह्नेस्तु शुक्लं रूपं नाभिभूतं[४] किन्तु तदीयं शुक्लत्वमभिभूतमित्यन्ये । नैमित्तिकमिति, सुवर्णादिरूपे तेजसि[५] तत्सत्त्वात् । न च नैमित्तिकद्रवत्त्वं दहनादावव्याप्तं घृतादावतिव्याप्तञ्चेति वाच्यं पृथिव्यवृत्ति[६]नैमित्तिकद्रवत्ववद्वृत्तिजातिमत्त्वस्य विवक्षितत्वात् । पूर्ववदिति जलस्येवेत्यर्थः । तथाहि—तत् द्विविधं नित्यमनित्यञ्च, नित्यं परमाणुरूपं, तदन्यदनित्यम् अवयवि, तच्च त्रिधा शरीरेन्द्रियविषयभेदात्, शरीरमयोनिजमेवेत्यर्थः, तच्च सूर्यलोकादौप्रसिद्धम्॥४?

---

विलक्षण नीलोत्पत्तित्वावच्छिन्नं प्रति समवायेन तेजःसंयोगत्वेन हेतुत्वा त्तेजस्त्वजाति सिद्धि रित्यपि द्रष्टव्यम् ।

२ । वैश्वानरादेश्चाक्षुषत्व तद्गत संख्यादिगुणानामपि योग्य व्यक्तिमात्र वृत्तित्वाभावेन चाक्षुषत्वं नस्यादित्यपिना सूचितम् ।

३ । रूपाविषयक द्रव्यप्रत्यक्षस्याभावादितिशेषः । अन्यदीयरूपेण—पाकज पार्थिवरूपेणत्यर्थः ।

४ । मतान्तरमाह शुक्लं नाभिभूतमिति । तथाच न निरुक्त हेतुना धर्म्मिणो ग्रहासम्भव इत्याशयः ।

५ । असम्भवमपाकर्त्तुमाह तत्सत्त्वादिति ।

६ । नैमित्तिकद्रवत्ववद् घृतादिवृत्ति पृथिवीत्व जातिमादाय पृथिव्यामतिव्याप्तिवारणाय पृथिव्यवृत्तीति । पृथिव्यवृत्ति जलत्वादि जातिमादाय जलादावतिव्याप्तिवारणाय नैमित्तिक द्रवत्ववद्वृत्तीति । वायु तेजोऽन्यतरत्वादिकमादाय वाय्वादावतिव्याप्तिवारणाय जातीति ।

**इन्द्रियं नयनं वह्निस्वर्णादिविषयो मतः ।**
**अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः ॥४२॥**

अत्र यो विशेषस्तमाह इन्द्रियमिति, ननु चक्षुषस्तैजसत्वे किमान मिति चेत्, चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत् । प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्र दृष्टान्तेऽव्याप्तिवारणायाद्यं परकीयेति, घटादेः स्वीयरूपव्यञ्जकत्वाद् व्यभिचारवारणाय द्वितीयं परकीयेति । अथवा प्रभाया दृष्टान्तत्वसम्भवादाद्यं परकीयं न देयं । चक्षुःसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम् । विषयं दर्शयति वह्नीति, ननु सुवर्णस्य तैजसत्वे किं मानमिति चेन्न, सुवर्णं तैजसम् असति

---

अत्र क्वचित् पुस्तके द्रव्यत्व साक्षाद्व्याप्यत्व विशेषणमपि दृश्यते व्यावृत्त्यभावेन च तत् अस्पाताधातमिव प्रतिभातीत्यनुसन्धेयम् ।

७ । गन्धव्यञ्जकत्वादि घटित हेत्वन्तर व्यावर्त्यादिपदेन गन्धादि परिग्रहः । परकीयरूपव्यञ्जके मनसि व्यभिचारवारणाय सत्यन्तं । चक्षुषः परकीय रूपादि व्यञ्जकत्वादसिद्धि वारणाय रूपपदं । गगणादौ व्यभिचारवारणाय विशेष्यदलम् ।

८ । परकीयत्वा प्रवेशेन लाघवादाह अथवेति । आद्यमित्युपलक्षणं आद्यस्यानुपादाने द्वितीयमपि परकीय मनुपादेयमेव, घटादौ दर्शित व्यभिचारस्य सत्यन्तदलेनैव वारण सम्भवादिति ध्येयम् ।

९ । सुवर्णं पार्थिवं नैमित्तिक द्रवत्ववत्त्वादित्यनुमानस्य पार्थिवत्वसाधकस्यैव सत्त्वादिति शङ्कार्थः ।

१० । अत्र च अत्यन्तानल संयोगे सति अनुच्छिद्यमान द्रव्यत्वाधिकरणत्वस्यैव पक्षतावच्छेदकत्वं बोध्यं नातस्तैजससुवर्णस्यानुमानात् पर्वमप्रसिद्ध्या धर्मशास्त्रानुसारेण सुवर्णपद प्रतिपाद्यत्वस्य च पीत

प्रतिबन्धके[11] अत्यन्तानलसंयोगेऽ[12]प्यनुच्छिद्यमानद्रवत्वात्[13], यन्नैवं तन्नैवं, यथा पृथिवी। न चाप्रयोजकं पृथिवीद्रवत्वस्य जन्यजल-द्रवत्वस्य चाग्निसंयोगनाश्यत्वात्[14]। ननु पीतिमगुरुत्वाश्रयस्य-पार्थिवस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति चेन्न, जलमध्यस्थ-

---

द्रव्यान्तरेऽपि सत्त्वेन पक्षाप्रसिद्ध्यादि दोषः। नन्वेवं पक्षतावच्छेदक हेत्वोरभेद इति वाच्यं अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया तत् प्रयुक्तस्य सामानाधिकरण्येन सिद्धसाधनस्याऽदोषत्वादित्यवधेयम्।

११। जलमध्यस्थघृतादौ व्यभिचारवारणायेति प्रतिबन्धक इति।

१२। अग्निसंयोगनाश्यद्रवत्ववति घृतादौ व्यभिचारवारणाय अत्यन्तानल संयोगेऽपीति। सामानाधिकरण्यं समानकालीनत्वञ्चात्र सप्तम्यर्थः, तथा च तादृश द्रवत्वस्य स्वसमानाधिकरणात्यन्ताग्निसंयोगासमानकालीनत्वान्न व्यभिचारः।

१३। अनुच्छिद्यमान द्रवत्वादित्यस्य अनुच्छिद्यमान द्रवत्वाधिकरणत्वादित्यर्थः नतु उच्छिद्यमानद्रवत्वानधिकरणत्वादिति गगनादौ व्यभिचारात्। समवायेन तादृश द्रवत्वस्य हेतुत्व प्रदर्शनायैव अधिकरणत्वपर्य्यन्तानुसरणं अन्यथा अनुच्छिद्यमान द्रवत्वस्यापि स्वसमवायिसंयोग रूप परम्परया गगनादिसामानाधिकरण्येन व्यभिचारतादवस्थ्यादिति ध्येयम्।

१४। तथा च सुवर्णवृत्तिद्रवत्वं यदि तैजसं न स्यात् तदा अग्निसंयोगनाश्यं स्यादित्यनुकूलतर्क एव प्रयोजकः। एतच्चोपलक्षणं "अग्नेरपत्यं प्रथमं हिरण्यं" इत्याद्यागमानुसारेण सुवर्णं यदि तैजसं न स्यात्तदा तदागमप्रतिपाद्याग्न्यपत्यत्वं न स्यादित्यनुकूलतर्कोऽप्यनुसन्धेयः।

मसीक्षोदवत्[१५] तस्याद्रुतत्वात् । अपरे तु[१६] पीतिमाश्रयस्य अत्यन्ताग्निसंयोगेऽपि पूर्व्वरूपापरावृत्तिदर्शनात् तत्प्रतिबन्धकं[१७] विजातीयं द्रव द्रव्यं कल्प्यते, तथाहि अत्यन्ताग्निसंयोगिपीतिमगुरुत्वाश्रयः[१८] विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात् जलमध्यस्थपीतपटवत् । तस्य[१९]

१५ । क्षोद इचूर्ण—तस्य—पीतिमगुरुत्वाश्रयस्य ।

१६ । प्रकारान्तरेण सुवर्णस्य तैजसत्वं साधयतां मत मुपन्यस्यति अपरेत्वित्यादिना ।

१७ । तत् प्रतिबन्धकं—रूप परावृत्ति प्रतिबन्धकं ।

१८ । अत्र च यत् किञ्चित् पीतघटादौ साध्यस्योभयवादिसिद्धतया सामानाधिकरण्येन साध्यतायां सिद्धसाधनापत्त्या अवच्छेदावच्छेदेनैव साध्यसिद्धे रुद्देश्यता, अग्निसंयोगशून्य पीतपार्थिवे विजातीयद्रवद्रव्यसंयोगरूप साध्यस्य हेतोश्च स्वसामानाधिकरणाग्नि संयोग कालीन पूर्व्वरूप विजातीय रूपानाधारत्वस्यासत्त्वेन बाधासिद्ध्योर्व्वारणाय अग्नि संयोगीति । अग्नि संयोगस्य तैजस सुवर्णेऽपि सत्त्वात्तत्र च वक्ष्यमाण पृथिवीत्व घटित हेतोरसत्त्वेन भागासिद्धिवारणाय पीतिमेति । अत्र च पीतिम गुरुत्वयोरन्यतरनिवेश एव ग्रन्थकर्त्तुस्तात् पर्य्यं एक निवेशे अपरप्रवेशस्य निष्प्रयोजनकत्वादित्यवधेयम् ।

साध्ये विजातीयपद मुद्देश्यसिद्ध्यर्थं । अग्निसंयोग रहितपूर्व्वरूपविजातीयरूपानाधारे घटे व्यभिचारवारणाय हेतौ सत्यन्तं । अथा कथञ्चिदग्निसंयुक्ते घटे तद्वारणायात्यन्तेति । अत्र हेतौ पृथिवीत्वमपि देयं तेन जलपरमाणौ न व्यभिचारः । नचाप्रयोजकमिदं विरोधि द्रवद्रव्यसम्बन्धं विना पार्थिवाग्नि संयोगस्य पूर्व्वरूप विजातीयरूप जनकत्वादिति ध्येयम् ।

१९ । तस्य—द्रव द्रव्यस्य । पृथिव्याः पक्षीकृत पीतिमावत्या

तिर्य्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ।
पूर्ववन्नित्यताद्युक्तं* देहव्यापि त्वगिन्द्रियम्†॥ ४३ ॥

च पृथिवीजलभिन्नस्य तेजस्त्वनियमात्[२०] ॥ ४२ ॥

वायुं निरूपयति अपाकज इति । अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादुक्तम् अपाकज इति, अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तम् अनुष्णाशीत[१] इति, एतेन[२] वायवीयो विजातीयः स्पर्शो दर्शितः तज्जनकतावच्छेदकं वायुत्वमिति[३] भावः । एष वायुः स्पर्शादिलिङ्गकः । वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते विजातीयस्पर्शेन, विज-

---

विजातीयत्वाभावात् जलस्य च तत्रासम्भवात् पृथिवी जलभिन्नत्व मिति भावः ।

२० । वाय्वादौ रूपाभावादिति भावः ।

१ । यद्यपि अपाकजानुष्णाशीतस्पर्शवत्त्वं पटादावतिव्याप्तं तथापि अपाकजानुष्णाशीतस्पर्शवद् भिन्नावृत्ति द्रव्यत्व साक्षाद्व्याप्यजातिमत्त्वं पाकजस्पर्शवदवृत्ति अनुष्णाशीतस्पर्शवद्वृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थो बोध्यः । तथाच—पृथिवीत्वादीनां निरुक्तावृत्तित्व विरहात् पटत्वादीनां द्रव्यत्वसाक्षाद्व्याप्यत्व विरहात् जलत्वादीना मनुष्णाशीतस्पर्शवद्वृत्तित्व विरहाच्च नातिव्याप्तिः ।

२ । एतेन—स्पर्शस्यानुष्णाशीतत्वादि कथनेन ।

* । पूर्ववत्—जलवत् । उक्तं—बोध्य मित्यर्थः अन्यथा वायोर्नित्यत्वादीना मनभिधाना दसङ्गत्यापत्तेः ।

† । अत्र त्वगिन्द्रियमित्यस्य त्वचिस्थितमिन्द्रिय मित्यर्थः, तेन देह सहजावरणं त्वगित्युच्यते तच्च पार्थिवं प्रत्यक्षसिद्धञ्चेति नेन्द्रियं वायवीयञ्च भवितु महतीति निरस्तं ।

३ । तथाच विजातीयस्पर्श जनकतावच्छेदकतया वायुत्व जाति-

क्षणशब्देन, तृणादीनां धृत्या, शाखादीनां कम्पेन च वायोरनुमानात्[४], यथा च वायोर्न प्रत्यक्षं तथाग्रे[५] वक्ष्यते । पूर्ववदिति—वायुर्द्विविधः नित्योऽनित्यश्च, परमाणुरूपो नित्य स्तदन्योऽनित्यः अवयव समवेतश्च सोऽपि त्रिविधः शरीरेन्द्रियविषयभेदात्, तत्र शरीरमयोनिजं पिशाचादीनां, परन्तु[६] जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भा-

---

सिद्धिरित्यर्थः । इदमुपलक्षणं शब्दविशेषस्य वह्नित्वावच्छिन्नस्य वा निमित्त कारणतावच्छेदकतया वायुत्व जातिसिद्धिरित्यपि द्रष्टव्यम् ।

४ । अनुमितिप्रकारस्तु—योऽयं रूपवद्द्रव्यासमवेतस्पर्शः स किञ्चिदाश्रितः स्पर्शत्वात् पृथिवीसमवेत स्पर्शवत्, पृथिव्यादिस्पर्शे सिद्धसाधन वारणाय असमवेतान्तं । एव मसति रूपवद्द्रव्याभिघाते योऽयं पर्णादिषु शब्दसन्तानः स स्पर्शवद्वेगवद्द्रव्य संयोगजन्यः अविभज्यमानावयव द्रव्यसम्बन्धि शब्दसन्तानत्वात् दण्डाभिहत भेरीशब्द सन्तानवत्, पृथिव्याद्यभिघातजन्मनि, व्यभिचारवारणाय असतीत्यादि पक्ष विशेषणं, विभागजन्मनि शब्दे व्यभिचारवारणाय हेता अविभज्यमानेति । एवं नभसि तृण तूल स्तनयित्नु विमानादीनां धृतिः स्पर्शवद्—वेगवद्द्रव्य संयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्य धृतित्वात् नौका धृतिवत्, जलादिगततृणादौ सिद्धसाधन वारणाय नभसीति, प्रयत्नवदात्मसंयोगहेतुक धृत्यादौ व्यभिचारवारणायास्मदादीति धृतिश्च गुरुणो द्रव्यस्यापतनम् । एवं रूपवद्द्रव्याभिघातमन्तरेण तृणे कर्म्म स्पर्शवद्वेगवद्द्रव्याभिघातजन्यं विजातीय कर्म्मत्वात् नदीपूराहत काशादिकर्म्मवदिति । अत्र च स्पर्शशब्द धृतिकम्पैरनुमीयत इति स्पर्शादिशब्दो भावप्रधान निर्द्देशः तेनोक्तानुमानेषु स्पर्शत्वादीनां हेतुत्वेऽपि न सन्दर्भविरोध इत्यव धेयम् ।

५ । आत्मनिरूपणावसर इत्यर्थः ।

६ । ननु वायोस्तालवादि वाग् व्यापाराभावा करचरणाद्यभावेना-

दुपभोगक्षमत्वं, जलादीनां प्राधान्याज्जलीयत्वादिकमिति[७] । अत्र
यो विशेषस्तमाह देहव्यापीति, शरीरव्यापकं[८] स्पर्शग्राहकमिन्द्रियं[९]

---

हरण विहरणाद्यभावाच्च कथं भोगायतनत्व मित्याशङ्क्य जलीय तैजस
शरीरयोरपि आक्षेपस्य तुल्यत्वात् प्रकरण लाघव मभिप्रेत्य साधारण्येन
समाधानमाह परन्तु जलीयेत्यादि ।

७ । ननु कथं तर्हि जलीयत्वादिव्यपदेश इत्यत आह जलानां प्राधा-
न्यादिति ।

८ । नच नखलोमकेशादीनां त्वगिन्द्रियानाधारत्वा दसम्भव इति
वाच्यं तेषां शरीर संयुक्त द्रव्यत्वेन शरीरत्वाभावात् । तथाहि
द्रव्यद्वयस्यैव संयोगसम्भवाल्लोमादीनां न शरीरत्व सम्भव इति भावः ।
यद्यप्येवमपि सुषुप्तिकाले ज्ञानवारणानुरोधेन पुरीतति देहावयव
विशेषे त्वगिन्द्रियाभावाङ्गीकारस्यावश्यकत्वात् त्वगिन्द्रियस्य देह व्याप-
कत्वं दुर्घटमेव तथापि यावद्देहावयववृत्तित्वमेव देहव्यापकत्वमिह
विवक्षितं तच्च पुरीतति त्वगिन्द्रियाभावेपि स्वप्नजनक मध्यस्थनाडी
भाग विशेषस्यैव पुरीतत्त्वाङ्गीकारेणाक्षतमेव पुरीतत् प्रदेशस्य नाड्य-
वयवत्वेन शरीरावयवत्वाभावादिति विभावनीयम् । परन्तु मध्यान्त
र्नभोभाग एव पुरीतत् एवञ्च गगण त्वगभावादेव तत्र मनसोऽवस्थान
दशायां ज्ञानानुत्पादः , एतदभिप्रायेणैव—

रे रे मानस पालितं प्रतिजनुर्देहान्तरत्वं सदा
तस्मात् कृष्ण पदाम्बुजे क्षणमपि प्रस्थीयतां रेमनः ।
इत्थं प्रार्थितमानसो निजगृहप्रध्वंस शङ्काकुलं
मिथ्या मध्य वियद्गतं नच गतं तत् पादपङ्केरुहं ॥

इति प्राचीन पद्यमपि सङ्गच्छत इति प्राहुः ।

९ । त्वगिन्द्रियस्य लक्षणमाह स्पर्शेत्यादि । तत्र कार्य्यमात्र कारण
कालादौ त्वक् संयोगादौ वा अतिव्याप्तिवारणायेन्द्रियपद, चक्षुरादा-
वतिव्याप्तिवारणाय स्पर्श ग्राहकेति ।

प्राणादिस्तु महावायुपर्य्यन्तो विषयो मतः ।
आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥४४॥

त्वक्, तच्च वायवीयं रूपादिषु मध्ये स्पर्शस्यैव[10] व्यञ्जकत्वात्, अङ्गसङ्गिसलिलशैत्यव्यञ्जकव्यजनवातवत् ॥ ४३ ॥

विषयं दर्शयति प्राणादिरिति । यद्यपि अनित्यो वायुश्चतुर्विधः तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे[11], तथापि संक्षेपादत्र त्रैविध्यमुक्तं, प्राणस्त्वक एव हृदादिनानास्थानवशान्[12]मुखनिर्गमादिनानाक्रियावशाच्च[13] नाना संज्ञां लभत[14] इति ।

आकाशं निरूपयति—आकाशस्येति । आकाशकालदिशामेकैक[1]

---

१० । पक्षेस्पर्शत्वव्यञ्जकत्वा दसिद्धिवारणाय रूपादिषु मध्य इति, तथाच तत् सहितैवकारेण रूपाद्यव्यञ्जकत्वस्यैव लाभात् स्पर्शत्वव्यञ्जकत्वेऽपि त्वगिन्द्रियस्य न स्वरूपासिद्धिरिति भावः । मनसि व्यभिचारवारणाय एवकारः । त्वगिन्द्रिय सन्निकर्षे व्यभिचारवारणाय द्रव्यत्वेसतीत्यपि विशेषणं देयमिति ध्येयम् ।

११ । आकरे— प्रशस्तपाद भाष्यादौ ।

१२ । "हृदि प्राणो गुदेऽपानः समानो नाभि संस्थितः । उदानः कण्ठ देशस्थो व्यानः सर्व्व शरीरगः ।" इति स्थानभेदा दित्यर्थः ।

१३ । मुखनासिकाभ्यां निष्क्रमणप्रवेशनात् प्राणः, मलादीना मधो नयनादपान, आहा । रेषु पाकाद्यर्थं वह्नेः समुन्नयनात् समानः, उर्द्ध नयनादुदानः, नाडीमुखेषु विततनाद् व्यानः इति क्रियाया भेदादित्यर्थः ।

१४ । तथाच संज्ञा भेदेऽपि न संज्ञि भेद इत्यर्थः ।

१ । कालत्व दिक्त्वयो र्जातित्व निराकरणस्य कालदिङ् निरूपणावसर एव वक्तव्यस्योचित्येऽपि 'न जाति' रित्यस्य वारत्रय लेखने ग्रन्थगौरवं स्यादिति लाघव मभिप्रेत्य युगपत् सर्व्वेषां जातित्वं निराकरोति

व्यक्तित्वात्[१] आकाशत्वादिकं न जातिः, किन्तु आकाशत्वं शब्दाश्रयत्वम्[२] वैशेषिक इति कथनन्तु विशेषगुणान्तरव्यवच्छेदाय[३]। एतेन प्रमाणमपि[४] दर्शितं[५] तथाहि[६]-शब्दो गुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रिय[७]-ग्राह्य[८]जातिमत्त्वात्[९], स्पर्शवत्। शब्दो द्रव्यसमवेतः गुणत्वात् संयोगवत्, इत्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे शब्दो न स्पर्शवद्विशेषगुणः[१०] अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुण-

---

आकाश इत्यादिना ।

२ । एकैकव्यक्तित्वात्—अनेकसमवतत्वाभावादित्यर्थः अन्यथा एकव्यक्तित्वस्य जात्यभावहेतुत्वे हेतुसाध्ययोर्वैयधिकरण्यमेव स्यादिति चिन्तनीयम् ।

३ । इत्थञ्च शब्द इति मूलं सावधारणं, शब्द एव विशेषगुण इत्यर्थः ।

४ । शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादित्यनुमानमाकाशे प्रमाणमिति भावः ।

५ । दर्शितं—सूचितं, तेन शब्द एव विशेषगुण इत्यस्याकाशे प्रमाणप्रदर्शनरूपत्वासम्भवेऽपि न क्षतिः ।

६ । दर्शितानुमाने (४) स्वरूपासिद्धिं परिहर्त्तुमाह तथाहीत्यादि रूपवदित्यन्तं । तथाहि—शब्दो द्रव्यसमवेतः गुणत्वादित्यनुमानेन द्रव्याश्रितत्वरूपविशेष्यासिद्धेः शिष्टेन तु अनुमानत्रयेण विशेषणासिद्धेः परिहारो बोध्यः । "शब्दो गुण" इति प्रथमानुमानन्तु विशेष्यासिद्धिपरिहारकानुमाने स्वरूपासिद्धिवारकमित्यवधेयम् ।

७ । घटादौ व्यभिचारवारणायायोग्यान्तं ।

८ । आत्मनि व्यभिचारवारणाय बहिरिन्द्रियग्राह्येति ।

९ । रसत्वादौ व्यभिचारवारणाय जातिमदिति ।

१० । स्पर्शवतो द्रव्यस्य पृथिव्यादिचतुष्टयस्य विशेषगुण इत्यर्थः ।

एकप्रत्यक्षत्वात्, सुखवत्। पाकजरूपादौ[११] व्यभिचारवारणाय त्यन्तं, पटरूपादौ व्यभिचारवारणाय अकारणगुणपूर्वकेति[१२], जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति। शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वात्[१३]. नात्मविशेषगुणः बहि रिन्द्रिययोग्यत्वात्[१४] रूपवत्[१५]। इत्थञ्च शब्दाधिकरणं नवम द्रव्यं गगननामकं सिध्यतीति[१६]। न च वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ[१७] कारणगुणपूर्वकः

---

११। अकारणगुणपूर्वकत्वरूपहेतुसत्त्वं प्रतिपादयितुमाह पाकजेति।

१२। अनित्यानां पार्थिवरूपादीनां केषाञ्चिदग्निसंयोगासमवायिकारणकत्वात् केषाञ्चित् कारणगुणपूर्वकत्वात् प्रत्यक्षत्वदलव्यावृत्तिप्रदर्शनेन तेषां ग्रहणम्।

१३। शब्दस्य विशेषगुणत्वे प्रमाणन्तु शब्दो विशेषगुणः लौकिकप्रत्यासत्त्येन्द्रियग्राह्यत्वे सति लौकिकप्रत्यासत्त्या द्वीन्द्रियग्रहणायोग्यत्वे च सति गुणत्वव्याप्यजातिमत्त्वादित्यनुमानम्।

१४। बहिरिन्द्रिययोग्यत्वात्—मनोभिन्नेन्द्रियजन्यप्रत्यक्षविषयत्वादित्यर्थः।

१५। इत्थञ्च—अनेन प्रकारेण पृथिव्याद्यष्टद्रव्यानाश्रितत्वसिद्धौ च।

१६। पूर्वोक्त (४) अनुमानेनेत्यर्थः। नन्वाकाशे प्रत्यक्षमपि किं प्रमाणत्वेन नापन्यस्तमिति चेन्न चाक्षुषत्वप्रयोजकस्य महत्त्वे सत्युद्भूतरूपवत्त्वस्याकाशे असम्भवेन चाक्षुषत्वासम्भवात्। नन्वेवमिह पश्यामि चाक्षुषाधिकरणत्वेन किंभासत इति चेत् आलोक एवेति परिकलनीयम्।

१७। स्पर्शवद्विशेषगुणत्वाभावसाध्यकानुमाने बाधं स्वरूपासिद्धिञ्च शङ्कते नचेत्यादिना।

इन्द्रियन्तु भवेत् श्रोत्रमेकः सन्नप्युपाधितः ।
जन्यानां जनकः* कालो जगताकाश्रयो मतः ॥४५॥

शब्द उत्पद्यतामिति वाच्यम् अयावद्द्रव्यभावित्वेन[१८] वायुविशेषगुणत्वाभावात् ॥ ४४ ॥

तत्र[१९] शरीरस्य विषयस्य चाभावात् इन्द्रियं दर्शयति—इन्द्रियमिति । नन्वाकाशं लाघवादेकं सिद्धं श्रोत्रं तु पुरुषभेदेन भिन्नं कथमाकाशं स्यादत आह एकः सन्नपीत्यादि । आकाश एक एव सन्नपि उपाधेः कर्णशष्कुल्यादेर्भेदाद् भिन्नं[२०] श्रोत्रात्मकं भवतीत्यर्थः ।

कालं निरूपयति—जन्यानामिति, तत्र प्रमाणं दर्शयितुमाह—जगतामिति । तथाहि—"इदानीं घट" इत्यादिप्रतीतिः सूर्यपरि-

१८ । अयावद्द्रव्यभावित्वेनेति—स्वाश्रयद्रव्यं यावद् भवति—तिष्ठतीति यावद्द्रव्यभावि स्वाश्रयद्रव्यनाशजन्यनाशप्रतियोगीति यावत् तादृशं यद्यत्तद् भिन्नत्वेनेत्यर्थः ।

१९ । ननु पृथिव्यादीनामिवाकाशस्य शरीरविषययोरप्रदर्शनान्यूनत्वमित्याशङ्कयाह तत्रेति, आकाश इत्यर्थः ।

२० । चैत्रादिकर्णशष्कुल्यवच्छिन्न आकाशं चैत्रादिश्रोत्रमिति भावः ।

* । जन्यानां जनक इति काललक्षणपरं जगतामाश्रयोमत इत्यस्यैव कालप्रमाण प्रदर्शनपरत्वात् । एवञ्च कालस्य कार्य्यसामान्ये समवायिकारणत्वासम्भवात् असमवायिकारणत्वस्य च द्रव्येऽसत्त्वात जनकपदं निमित्तकारणपरं । नचैवं दिगादीनामपि कार्य्यसामान्ये निमित्तकारणत्वात्तत्रातिव्याप्त्यापत्तिरिति वाच्यं अधिकरणतया कालिकसम्बन्धावच्छिन्नकार्य्यत्वावच्छिन्नकार्य्यतानिरूपितनिमित्तत्वरूपस्यैव पर्य्यवसितकाललक्षणत्वात ।

परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।

दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥

स्पन्दादिकं यदा विषयीकरोति तदा सूर्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः स च संयोगादिर्न सम्भवतीति[1] काल एव तत्सम्बन्धघटकः[2] कल्प्यते । इत्थञ्च[3] तस्याश्रयत्वमपि सम्यक् ॥ ४५ ॥

प्रमाणान्तरं दर्शयति—परापरत्वेति, परत्वापरत्वबुद्धेरसाधारणं[4]

---

१ । इतीत्यनन्तरं "स्वाश्रयतपनसंयोगिसंयोग एव सम्बन्धो वाच्य स्तत्रेति" पूरणीयम् ।

२ । तत्सम्बन्धघटकः—स्वाश्रयतपनसंयोगिसंयोगरूप(१) पूरित सम्बन्धघटकः, तथाच तत्र स्वाश्रयसंयोगिपदेन कालएवालम्बनीय इत्यभिप्रायः । नचाकाशमादायापि तादृशपरम्परासम्बन्धस्य घटयितुं शक्यतयातिरिक्तकालकल्पन मयुक्तमितिवाच्यं तथा सत्यनन्ताना माकाशदिगात्मसंयोगव्यक्तीनामेव संसर्गताया विनिगमनाविरहेण कल्पनोयतया महागौरवापत्तेः । अतिरिक्तकालकल्पने तु तदीयसंयोगमात्र एव तत्कल्पनमिति लाघवं, क्लृप्ताकाशसंयोगमादायाक्लृप्तकालसंयोगस्य विनिगमनाविरहासंभवादिति ध्येयम् ।

३ । इत्थञ्च—अतिरिक्तकालसिद्धौ चेत्यर्थः । कालः सर्व्वंवानिति प्रतीतेरतिरिक्तकालविषयकत्वस्यैवोचितत्वादिति भावः ।

४ । परत्वापरत्वयोरित्यस्यैव वक्तुमुचितत्वेपि तद्बुद्धिपर्य्यन्तानुधावनं कालिकपरत्वापरत्वयोः प्रमाणं दर्शयितुं, तथाहि रामः परः लक्ष्मणः अपर इति विलक्षणप्रतीतिभ्यामेव कालिकपरत्वापरत्वयोः सिद्धिः, तादृशप्रतीतेर्दैशिकतपरत्वापरत्वविषयकत्वासम्भवादित्यवधेयम् ।

निमित्तं काल एव । परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः काल एव कल्प्यत इति भावः । ननु एकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो[५] न स्यादत आह—क्षणादिरिति, कालस्त्वेकोऽपि उपाधिभेदात् क्षणादिव्यवहारविषयः । उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं[६] कर्म्म, पूर्वसंयोगावच्छिन्न[७]विभागो वा, पूर्वसंयोगनाशावच्छिन्न[८] उत्तरसंयोगप्रागभावो वा

५ । समयभेदः—समयभेदव्यवहारः । नस्यादिति एकस्मिन् विरुद्धनानाव्यवहारविषयत्वाभावादिति भावः ।

६ । स्वं क्रिया, तथाच द्वितीयक्षणएव स्वजन्यविभागजननात् तत् प्रागभाव विशिष्टं सत् कर्म्म क्षणमात्रमेव तिष्ठतीति तत्रक्षणोपाधित्वं । घटादिगतैकक्रियानाशोत्तरोत्पन्नक्रियान्तरजन्यविभागप्रागभावविशिष्टस्य प्रथमकर्म्मणः क्षणचतुष्टयावस्थायिनःक्षणत्वापत्तिरतः स्वजन्येति ।

७ । द्वितीयक्षणे क्रियाजन्यविभागोत्पत्त्या तत्प्रागभावासम्भवात् तत्र क्षण व्यवहारोपपादकं लक्षणमाह पूर्व्वसंयोगेति । अत्रच पूर्व्वसंयोगे स्वजन्यविभागनाश्यत्वं विभागेच स्वजन्यत्वं विशेषणं देयं, तथाच स्वजन्यविभागनाश्यपूर्व्वसंयोगविशिष्टस्वजन्यविभागइतिफलितार्थः । प्रथमदलनिवेशात् स्वजन्यविभागस्य यत्किञ्चित् पूर्व्वसंयोगविशिष्टस्य त्रिक्षणवृत्तित्वेपि नातिप्रसङ्गः । स्वजन्यत्वनिवेशाच्च यत्किञ्चिद्विभागस्य स्वजन्यविभागनाश्यपूर्व्वसंयोगविशिष्टस्य त्रिक्षणवृत्तित्वेपि नातिप्रसङ्ग इति ध्येयम् ।

८ । तृतीयक्षणे तदुपपादकमुपाधिमाह पूर्व्वसंयोगनाशेत्यादि । अत्रापि स्वजन्यविभागजन्यपूर्व्वसंयोगनाशावच्छिन्नस्वजन्योत्तरसंयोगप्रागभावइत्यर्थान्न पूर्व्वदिशिप्रसङ्गः ।

उत्तरसंयोगावच्छिन्नं कर्म्म वा । न चोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यं कर्म्मान्तरस्यापि सत्त्वादिति[10]। महाप्रलये क्षणादिव्यवहारो यद्यस्ति[11] तदानायत्या ध्वंसेनोपपादनीयः[12]। दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति ।

दिशं निरूपयति—दूरान्तिकेति, दूरत्वम् अन्तिकत्वञ्च दैशिकं परत्वमपरत्वं बोध्यं, तद्बुद्धेरसाधारणं वीजं[1] दिगेव । दैशिकपर-

---

९। चतुर्थक्षणे तदुपपादकमाह उत्तरसंयोगनाशावच्छिन्नं कर्म्मवेति। अत्रापि उत्तरसंयोगे स्वनाशकत्वं देयं, तेन सर्व्वस्यैव संयोगस्योत्तरसंयोगतया तद्विशिष्टस्य कर्म्मणः क्षणचतुष्टयावस्थायिनः क्षणत्वापत्तिर्निरस्ता ।

सर्व्वमेतत् क्षणलक्षणं "आदौ क्रिया ततस्तया क्रियया पूर्व्वदेशाद्वस्तुनो विभागः ततपरक्षणे पूर्व्वसंयोगनाशः तत्परक्षणे तयैव क्रियया उत्तरसंयोगनाशस्ततः पञ्चमक्षणे तत् क्रियानाशइति नियमम‌ङ्गीकृत्येति मन्तव्यम् ।

१०। तथाच तत्तत्कर्म्मण एव तत्र तत्र पूर्व्ववत् क्षणव्यवहारोपपादकोपाधित्वनिर्व्वाह इति भावः । नचैवं प्रथमेनैव सर्व्वत्र क्षणव्यवहारसम्भवे द्वितीयाद्युपाधिप्रदर्शनमफलमिति वाच्यं सर्व्वत्र क्रियोत्पत्तौ मानाभावेन तत्प्रदर्शनादिति विभावनीयम् ।

११। महाप्रलये क्षणव्यवहारो नास्त्येव उत्पत्तिलक्षणस्य क्षणाघटितस्यैव "स्ववृत्तिध्वंसप्रतियोगिकालावृत्तित्वविशिष्ट स्ववृत्तित्वरूपस्य" तदुत्पत्तौ सम्भवादित्यभिप्रेत्योक्तं यदीति ।

१२। स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंस विशिष्टसमयस्यैव तत्र क्षणव्यवहारविषयत्व मिति भावः ।

१। वीजं प्रयोजकं तथाच परत्वापरत्वबुद्धिं प्रति परत्वापरत्वे निमित्ते तत्र दिक् पिण्ड संयोगः तत्र दिगित्येवं परम्परया दिशस्तद-

उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।
आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्त्तृकम् ॥४७॥

त्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया लाघवादेका दिक् सिध्य-तीति भावः ॥ ४६ ॥

नन्वेकैव दिक् यदि तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्य-तामित्यत आह—उपाधीति । यत्पुरुषस्य[२] उदयगिरिसन्निहिता[३] या दिक् सा तस्य प्राची, एवमुदयगिरिव्यवहिता यादिक् सा प्रतीची । एवं यत्पुरुषस्य सुमेरुसन्निहिता या दिक् सोदीची तद्व्यवहिता त्ववाची । "सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित" इति नियमात् ।

---

बुद्धौ निमित्तत्वं । अत्रापि बुद्धिपर्य्यन्तानुधावनं दैशिकपरत्वाप-रत्वयोः प्रमाणं दर्शयितुं, तादृशपरत्वापरत्वाभ्यां विना तदनुमिते-रसम्भवात् । अयमस्माद्दूरः अयमस्मात् सन्निहित इति विलक्षण प्रतीतिभ्यामेव दैशिकपरत्वापरत्वयोः सिद्धिरिति मन्तव्यम् ।

२ । पुरुषस्येति पदार्थमात्रोपलक्षणं, षष्ठ्यातु पञ्चम्यर्थे अवधित्वं तदर्थः, दिक् मूर्त्तं, तथाच यदपेक्षया उदयगिरिसन्निहितं यन्मूर्त्तं सा तन्मूर्त्तावच्छिन्ना दिक् ततः प्राचीत्यर्थः एवमग्रेऽपि ।

३ । तदपेक्षया उदयगिरिसन्निहितत्वञ्च—तन्निष्ठोदयगिरिसंयुक्त-संयोगापेक्षया अल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वं । इत्थञ्च— मथु-रायाः प्राच्यः प्रयाग इत्यत्र मथुरानिष्ठोदयगिरिसंयुक्तसंयोगपर्य्याप्त-संख्याव्याप्यसंख्यापर्य्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्त्तवृत्तिः प्रयाग इत्यन्वयबोधः । एवं काशीतः प्रतीच्यां प्रयाग इत्यत्र काशीनि-ष्ठोदयगिरिसंयुक्तसंयोगपर्य्याप्तसंख्याव्यापक संख्यापर्य्याप्त्यधिकरणो-दयगिरिसंयुक्तसंयोगवन्मूर्त्तवृत्तिः प्रयाग इत्यन्वयबोधः एवमन्यत्रापि बोधा ऊहनीयाः ।

दार्यितिकृतस्तु दिक्कालयोरीश्वरातिरिक्तत्वमनङ्गीकुर्वन्तः तत्त-

आत्मानं निरूपयति—आत्मेन्द्रियेति, आत्मत्वजातिस्तु सुख-दुःखादिसमवायिकारणतावच्छेदकतया[1] सिध्यति[2]। ईश्वरेऽपि सा जातिरस्त्येव[3] अदृष्टादिरूपकारणाभावाच्च[4] न सुखदुःखाद्युत्पत्तिः, नित्यस्य स्वरूपयोग्यस्य फलावश्यम्भाव इति नियमस्याप्रयोजकत्वात्[5]। परे त्वीश्वरे सा जातिर्नास्त्येव प्रमाणाभावात्, न च दशमद्रव्यत्वापत्तिः

---

तत्कालोपाधिदिगुपाधिविशिष्टादीश्वरादेव प्राचीप्रतीचीत्वादि व्यवहारोपपत्तेरित्याहुः। दिक्कालरूपत्वमीश्वरस्य तत्तज्जीवस्य वेति विनिगमनाविरहेणातिरिक्तयोस्तयोः स्वीकार इति नव्याः।

१। आदिना ज्ञानेच्छाद्वेषधर्म्माधर्म्मभावनानां परिग्रहः।

२। तथाच सुखादिसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानमेवात्मत्वजातौ प्रमाणमिति फलितं। नन्वहं सुखीत्यादि प्रतीत्यात्मत्वेनात्मनो विषयीकरणादात्मत्वस्य प्रत्यक्षत्वसम्भवेन दर्शितानुमानानुधावनमफलमिति चन्न आत्मन्यात्मत्वस्य स्वरूपतः प्रत्यक्षत्व सम्भवेपि अन्यात्मनः प्रत्यक्षाविषयत्वेन सकलात्म प्रत्यक्षत्वासाधारणात्मत्वजातेः प्रत्यक्षत्वासम्भवात्। नच घटत्वादीनामप्यपरया जातित्वग्रह सकलव्यक्ति प्रत्यक्षस्यातन्त्रत्वमिति वाच्यं सकलव्यक्ति ग्रहस्यातन्त्रत्वेपि अनेकसमवेतत्वघटितजातित्वग्रहे अनेकव्यक्तिग्रहहेतुत्वस्य सर्व्ववादिसिद्धत्वादित्यवधेयम्।

३। "आत्मा वा अरे द्रष्टव्य" इत्यादि श्रुतावात्मपदव्यवहारादिति भावः।

४। नन्वेवमीश्वरेपि सुखाद्युत्पत्तिः कथं न भवतीत्याह अदृष्टादीति, आदिना शरीरपरिग्रहः। नन्वीश्वरे अदृष्टं कुतो नोत्पद्यत इति चन्न मिथ्याज्ञानरूपकारणाभावात्, मिथ्याज्ञानस्याहेतुत्वे च मुक्तात्मन्यप्यदृष्टोत्पत्तिप्रसङ्गः।

५। एतन्नियमस्य प्रयोजकत्वस्वीकारे कारणतावच्छेदकरूपत्मत्व-

---

शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।
तथात्वञ्चेदिन्द्रियाणामुपघाते कथं स्मृतिः ? ॥४८॥

ज्ञानवत्त्वेन विभजनादित्याहुः (६)। इन्द्रियादीति—इन्द्रियाणां शरीरस्य च परम्परया (७) चैतन्यसम्पादकः। यद्यप्यात्मनि "अहं जाने अहं सुखी" इत्यादि प्रत्यक्षविषयत्वमस्त्येव तथापि विप्रतिपन्नं प्रति प्रथमत एव शरीरादि-भिन्नस्तत्-प्रतीतिगोचर इति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणान्तरं दर्शयति करणमिति। कुठारादीनां छिदादिकरणानां कर्त्तारमन्तरेण फलानुपधानं दृष्टम्, एवं चक्षुरादीनां ज्ञानकरणानां फलोपधानमपि कर्त्तारमन्तरेण नोपपद्यत इत्यतिरिक्तः कर्त्ता कल्प्यते(८) ॥ ४७ ॥

ननु शरीरस्यैव कर्त्तृत्वमस्तु अत आह—शरीरस्येति ; ननु चैतन्यं ज्ञानादिक(९)मेव मुक्तात्मनां त्वन्मत इव(१०) मृतशरीराणामपि तदभावे का क्षतिः ? प्राणाभावेन(११) ज्ञानाभावस्य सिद्धेरिति चे न

---

स्वरूपयोग्यत्वसत्त्वादीश्वरे सुखाद्युत्पत्त्यापत्तिः पुनरुत्थाप्येत इति तन्निरासः। तथाहि जल-परमाणौ स्नेहानुत्पत्त्या तादृशनियमे मानाभाव इति भावः।

६। वैदस्यात्मपदार्थज्ञानादिमतिलक्षणापत्तिरित्यस्वरस आहुरित्यनेन सूचितः।

७। परम्परया जनकतासम्बन्धेन अवच्छेदकतासम्बन्धेन वा, चैतन्यं ज्ञानवत्त्वं, तथा च जनकतासम्बन्धेनेन्द्रिये अवच्छेदकतासम्बन्धेन च शरीरे ज्ञानस्य सम्पादक आत्मा इत्यर्थः।

८। तथा चायं प्रयोगः ज्ञानकरणं चक्षुरादिकं सकर्त्तृकं (कर्त्तृसहकृतं) करणत्वात् छिदाकरणकुठारादिवदिति।

९। ज्ञानादिकं—समवायावच्छिन्नज्ञानाद्यधिकरणत्वं चैतन्यमित्यर्थः।

१०। कारिकोक्तं व्यभिचारमुद्धर्तुं दृष्टान्तमुपन्यस्यति मुक्तात्मनां त्वन्मत इवेति।

११। ननु तव मते मृतशरीरे चैतन्याभावः किं निबन्धनः मन्मते तु प्राणविशिष्टात्मनो विरह एव तत्र प्रयोजक इत्यत आह प्राणाभावेनेति, तथा च लाघवात् प्राणाभावश्चैतन्यविरहे प्रयोजक इत्याशयः।

शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः, (१२) शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात्। न च पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उपपद्यत (१३) इति वाच्यम्, अनन्तसंस्कारकल्पने गौरवात्। एवं(१४) शरीरस्य चैतन्ये बालकस्य स्तनपानादौ प्रवृत्तिर्न स्यात् इष्टसाधनताज्ञानस्य तद्धेतुत्वात्तदानी(१५)मिष्टसाधनतास्मारकाभावात्। मन्मते तु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः। न च जन्मान्तरानुभूतमन्यदपि स्मर्य्यतामिति वाच्यम्, उद्बोधकाभावात्। अत्र त्वनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते। इत्थञ्च(१६) संस्कारस्यानादितया आत्मनोऽपि अनादित्वसिद्धौ अनादिभावस्य नाशासम्भवात् (१७) नित्यत्वं सिध्यतीति बोध्यं (१८)॥

ननु चक्षुरादीनां ज्ञानादौ करणत्वं(१) कर्त्तृत्वं चास्तु विरोधे(२) साधकाभावादत आह—तथात्वमिति। चैतन्यमित्यर्थः। उपघाते

---

१२। अनुभवाश्रयस्य बाल्यशरीरस्य तदानीमभावादिति भावः।

१३। तथा च स्वप्रयोज्य-संस्कारवत्तासम्बन्धेन बाल्यशरीरसमवेतानुभवस्य स्थविरशरीरे सत्त्वा न्न स्मरणानुपपत्तिरिति भावः।

१४। गौरवस्य फलमुखत्वाद्दूषणान्तरमाह—एवमिति।

१५। तदानीं—स्तन्यपानाव्यवहितपूर्व्वकाले।

१६। आत्मनो नित्यत्वं साधयति इत्थञ्चेति।

१७। नाशं प्रति जन्यभावत्वेन हेतुत्वादात्मनोऽनादित्वेन जन्यभावत्वरूपहेतोरभावेन नाशासम्भवादित्यर्थः।

१८। इति चार्वाकमतखण्डनम्।

१। करणत्वञ्च—व्यापारवत्त्वे सति कारणत्वं, भवति हि चक्षुरादौ चक्षुःसंयोगादिरूपव्यापारवति चाक्षुषज्ञानाव्यवहितपूर्वकालवृत्तित्वम्। क्रियानुकूलज्ञातमत्त्वरूपकर्त्तृत्वञ्च यद्यपि न सम्भवत्यचेतने चक्षुरादौ तथापि पूर्वपक्षिणा अतिरिक्तस्यात्मनः कृत्यादीनामात्मसमवेतत्वस्य चानङ्गीकारेण कृत्याश्रयत्वमपि चक्षुरादीनामस्त्वित्याशयः।

२। नन्वेकस्यैव करणत्वे कर्तृत्वे च कर्तृकरणादिभेदव्यवहारोऽनुपपन्न इत्यत आह

**मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।**

नाशे सति अर्था(३)च्चक्षुरादीनामिव, कथं स्मृति: ? पूर्वं चक्षुषा साक्षात्कृतानां चक्षुषोऽभावे स्मरणं न स्यात् अनुभवितुरभावात्। अन्यदृष्टस्य अन्येन स्मरणासम्भवात्। अनुभवस्मरणयो: सामानाधिकर(४)ण्येन कार्य्यकारणभावादिति भाव: ॥ ४८ ॥

ननु चक्षुरादीनां चैतन्यं मास्तु मनसस्तु नित्यस्य(५) चैतन्यं स्यादत आह—मनोऽपीति। न तथा न चेतनम्। ज्ञानादीति,—मनसोऽणुत्वात् प्रत्यक्षे च महत्त्वस्य हेतुत्वान्मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानु(६)पपत्तेरित्यर्थ:। यथा मनसोऽणुत्वं तथा वक्ष्यते ॥

---

विरोधे मानाभावादिति। तथा च कर्तृत्वकरणत्वलक्षणोपाधिभेदात् कर्तृकरणादिव्यवहारभेदोपपत्तिरित्यर्थ:।

३। मूले "उपोद्घाते कथं स्मृति"रित्युक्तं तत्रोपद्घात: केषामित्याकाङ्क्षायामाह—अर्थादिति। तथा चैकमेव "इन्द्रियाणा"मिति पदमाकाङ्क्षावशादुभयत्र सम्बध्यत इत्याशय:।

४। यद्यपि व्यधिकरणयो: कार्य्यकारणभावविरहात् सामानाधिकरण्येनेत्युक्तिर्विफला तथापि यत्र विषयतासम्बन्धेन स्मृतिस्तत्र विषयतासम्बन्धेनानुभव इतीदृशविषयत्वघटितसामानाधिकरण्येन कार्य्यकारणभावकल्पने चक्षु: कर्तृकानुभवस्य घटे सत्त्वादिन्द्रियान्तरकर्तृकं स्मरणं तत्र नानुपपन्नमित्याशङ्कानिराकरणाय समवायघटितसामानाधिकरण्येन कार्य्यकारणभावलाभाय सामानाधिकरण्येनेत्युक्तम्। विषयत्वघटितसामानाधिकरण्येन कार्य्यकारणभावकल्पने च चैत्रदृष्टस्यापि मैत्रेण स्मरणसम्भव:, तद्वारणाय स्मृत्यनुभवयोस्तत्तत्पुरुषीयत्वनिवेशे च तत्तत्पुरुषभेदेनानन्तकार्य्यकारणभावप्रसङ्गेन महागौरवापत्तिरिति समवायघटितसामानाधिकरण्यप्रत्यासत्त्यैव स्मृत्यनुभवयो: कार्य्यकारणभाव इति भाव:।

५। इन्द्रियचैतन्यपक्षोक्तदोषाणामनवकाशाभावं सूचयितुमाह—नित्यस्येति।

६। तत्प्रत्यक्षेति ज्ञानादिप्रत्यक्षेत्यर्थ:। यद्यपि मानसान्यप्रत्यक्षं प्रत्येव महत्त्वस्य कारणत्वोपगमे नैष दोष: अतएव माध्वादिमते जीवानामणुत्वमेवाङ्गीकृतं तथापि मानसत्वप्रत्यक्षत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुतरकार्य्यकारणभावद्वयापत्त्या गौरवापत्तेर्न तदुपगमसम्भव:। न च सिद्धान्तिनां मते अनन्तजीवानां कल्पनीयतया कारणताद्वयकल्पनेऽपि तदपेक्षया गौरवमिति वाच्यं तद्गौरवस्य फलमुखत्वेनादोषत्वादिति ध्येयम्।

नन्वस्तु विज्ञानमेवात्मा(१) तस्य स्वतः प्रकाशरूपत्वात् चेतनत्वं, ज्ञानसुखादिकन्तु तस्यै(२)वाकारविशेषः। तस्यापि भावत्वादेव क्षणिकत्वम्। पूर्व(३)पूर्वविज्ञानस्योत्तरोत्तरविज्ञाने हेतुत्वात् सुषुप्तावप्यालयविज्ञानधारा निराबाधैव। मृगमद(४)वासनाया वसन इव पूर्वपूर्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चे न तस्य(५) जगद्विषयत्वे सार्वज्ञ्यापत्तेः यत्किञ्चिद्विषयत्वे विनिगमनाभावात् सुषुप्तावपि विषयावभासप्रसङ्गाच्च, ज्ञानस्य सविषयत्वात्। तदानीं निराकारा(६) चित्सन्ततिरनुवर्त्तत इति चे न तस्याः स्वप्रकाशत्वे प्रमाणाभावात्, अन्यथा(७) घटादीनामपि ज्ञानत्वापत्तिः। न चेष्टापत्तिः विज्ञानव्यतिरिक्तवस्तुनोऽभावादिति वाच्यं घटादेरनुभूयमानस्यापलापितुमशक्यत्वात्। आकारविशेष एवायं विज्ञानस्येति चेत् किमयमाकारोऽतिरिच्यते विज्ञानात्तर्हि समायातं विज्ञानव्यतिरिक्तेन, नातिरिच्यते चेत्तर्हि समूहा-

---

१। आत्मनिरूपणस्य प्रस्तुतत्वादात्मेत्युक्तम्, अन्यथा वस्तुमात्रस्यैव तन्मते विज्ञानरूपत्वादसङ्गत्यापत्तेः। अत्र विज्ञानत्वं प्रमेयत्वस्य सत्त्वस्य वा व्यापकं न वेति विप्रतिपत्तिः, तत्र च विधिकोटिर्योगाचारस्य निषेधकोटिर्नैयायिकस्येति बोध्यम्। द्विविधं विज्ञानं प्रवृत्तिविज्ञानमालयविज्ञानञ्चेति, अत्रायं घट इत्यादि प्रवृत्तिविज्ञानम्, अहं जानामीत्यालयविज्ञानं तदेवात्मा। आलीयन्ते कर्मानुभवजनितवासना यस्मिन्निति आलयशब्दस्य व्युत्पत्त्यर्थः।

२। तस्य—विज्ञानस्य।

३। ननु सुषुप्तावात्मा न सिध्येत् पूर्वोत्पन्नविज्ञानस्य क्षणिकत्वेन नाशात् विज्ञानान्तरस्य च तदानीमुत्पादकाभावादत आह पूर्वपूर्वेति।

४। ननु विज्ञानस्य क्षणिकत्वेन तदाश्रितसंस्कारस्यापि क्षणिकत्वात् कालान्तरे स्मरणं न स्यादित्याशङ्कां परिहरति मृगमदेति।

५। तस्य—विज्ञानस्य।

६। निराकारा—निर्विकारा, चित्सन्ततिः—विज्ञानसन्ततिः, स्वप्रकाशत्वे—ज्ञानत्वे। प्रमाणाभावादिति ज्ञानत्वस्य विषयिताव्याप्यत्वादिति भावः।

७। अन्यथा—प्रमाणाभावेऽपि तत्र ज्ञानत्वस्वीकारे।

लम्बने नीलाकारोऽपि पीताकारः स्यात्(८) स्वरूपतो विज्ञानस्याविशेषात्(९)। अपोहरूपो(१०) नीलत्वादिर्विज्ञानधर्म्म इति चेन्न नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात, इतरथा(११) विरोधावधारणस्यैव दुरुपपादत्वात् (१२)। न वा (१३) वासनासंक्रमः सम्भवति मातृपुत्रयोरपि वासनासंक्रमप्रसङ्गात्। न च(१४) उपादानोपादेयभावो नियामक इति वाच्यं वासनायाः संक्रमासम्भवात्। उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति चेन्न तदुत्पादकाभावात्। चितामेवो(१५)त्पादकत्वे तदानन्त्यप्रसङ्गः। क्षणिकविज्ञानेऽतिशयविशेषः(१६)

---

८। तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन नीलाकाराभिन्नविज्ञानाभिन्नस्य पीताकारस्य नीलाकाराभिन्नत्वापातादिति भावः।

९। विज्ञानस्वरूपस्य एकत्वादित्यर्थः।

१०। ननु नीलाकारः पीताकारस्याभिन्न एव भेदप्रतीतिस्तु तद्धर्म्मयोर्नीलत्वपीतत्वयोर्भेदात्। न च तयोरपि विज्ञानस्वरूपत्वादभेदः नीलत्वादेरपारमार्थिकत्वेन पारमार्थिकविज्ञानाभेदस्यासम्भवादित्याशयवान् शङ्कते अपोहरूप इति, अनीलव्यावृत्तिरूप इत्यर्थः।

११। इतरथा—विरुद्धनीलत्वादीनामेकत्र समावेशे।

१२। एकदैकदेशावृत्तित्वस्यैव विरोधपदार्थत्वादिति भावः।

१३। समूहालम्बने चित्राकारस्याप्यभ्युपगमसम्भवान्मुख्यतया वासनासंक्रमं दूषयति न वेति।

१४। ननु उपादानेनानुभूतमुपादेयेन स्मर्य्यत इति नियमाङ्गीकारे न मातापुत्रयोर्वासनासंक्रम इत्याशङ्कायामपि दूषयति न चेति। अत्रोपादानत्वं न समवायिकारणत्वं विभिन्नकालीनयोः क्षणिकज्ञानव्यक्त्योरेकव्यक्तिं प्रत्यपरव्यक्तेरुक्त समवायिकारणत्वासम्भवात्, परन्तु असहकृतकारणत्वम् एवञ्चोत्तरव्यक्तौ पूर्वव्यक्तिमात्रस्यैव कारणत्वाङ्गीकारात् भवत्युत्तरव्यक्तौ पूर्वव्यक्तेरुपादानकारणत्वम्। माता च पुत्रं प्रति नाऽसहकृतं कारणं शुक्रशोणितादेरपि पुत्रकारणत्वादित्यवधेयम्।

१५। चितामेवेति, ज्ञानानामेव संस्कारोत्पादकत्वे तेषामानन्त्यात् संस्कारानन्त्यापत्तिरित्यर्थः।

१६। अतिशयविशेषः—शक्तिविशेषः, उत्तरोत्तरविज्ञानानुकूलतयेति शेषः। तया च

कल्प्यत इति चे न्न मानाभावात् कल्पनागौरवाच्च। एतेन क्षणिकशरीरेष्वेव चैतन्यमपि प्रत्युक्तं गौरवा(१७)दतिशये मानाभावाच्च। वीजादावपि (१८) सहकारिसमवधानादेवोपपत्तेः (१९) कुर्वद्रूपत्वाकल्पना(२०)च्च॥

अस्तु (१) तर्हि क्षणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा "अविनाशी वा अरे अयमात्मा सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि श्रुतेरिति चे न्न, तस्य(२) विषयत्वासम्भवस्य दर्शितत्वात् निर्विषयस्य ज्ञानत्वे मानाभावात् सविषयत्वस्याप्यनुभवात्। अतो ज्ञानभिन्नो नित्य आत्मेति सिद्धम्। सत्यं ज्ञान(३)मिति ब्रह्मपरं जीवेषु नोपयुज्यते।

---

ज्ञानव्यक्तीनां संस्कारजनकत्वे प्रतिज्ञानं भिन्नसंस्कारव्यक्तिकल्पने गौरवेऽपि यादृशज्ञानव्यक्त्युत्तरं स्मरणमनुभवसिद्धं तज्ज्ञाननिष्ठसंस्कारानुकूला काचित् शक्तिः पूर्वज्ञानव्यक्तौ स्वीकरणीया न तु प्रतिज्ञानव्यक्तावतिशयः कल्प्यत इति न संस्कारानन्त्यमित्याशयः।

१७। स एवायमित्यापामरसाधारणप्रत्यभिज्ञानात् क्षणिकानन्तशक्तितत्प्रागभावकल्पने गौरवादित्यर्थः।

१८। ननु क्षेत्रस्थवीजादङ्कुरोत्पत्ति र्न तु कुसूलस्थवीजादतोऽङ्कुरत्वावच्छिन्नं प्रतिकुर्वद्रूपत्वेन हेतुत्वमङ्गीक्रियते कुर्वद्रूपत्वञ्च अङ्कुरजनकतावच्छेदकतया सिद्धो जातिविशेषः, स च फलोपधायकक्षणिकसमर्थवीजमात्रवृत्तिवीजत्वव्याप्यः कल्प्यते, एवमत्रापि कुर्वद्रूपत्वेनैव क्षणिकशरीरेपूत्तरोत्तरशरीरनिष्ठवासनोत्पादकत्वं वाच्यमत आह वीजादाविति।

१९। कस्माच्चिद्वीजादङ्कुर उत्पद्यते कस्माच्चिन्नेति नियमोपपत्तेरित्यर्थः।

२०।. कुसूलस्थवीजादिषु क्षितिजलसंयोगादिरूपसहकार्य्यभावादेवाङ्कुरानुत्पादोपपत्तेः कुर्वद्रूपत्वं तद्रूपेण जनकत्वञ्च न कल्प्यते प्रमाणाभावादिति भावः। इति क्षणिकवादिमतखण्डनम्।

१। वेदान्ती शङ्कते अस्तु तर्हीति।

२। आत्ममात्रस्य नित्यविज्ञानरूपत्वमीश्वरस्य वेति विकल्पाद्ये दूषणमाह तस्येति। दर्शितत्वादिति तस्य जगद्विषयकत्व इत्यादि ग्रन्थे नेति शेषः। तथा च जीवस्य तथात्वासम्भवादात्ममात्रस्य नित्यज्ञानस्वरूपत्वमिति भावः।

३। ननु सत्यं ज्ञानमित्यादि श्रुतिरेव जीवस्य ज्ञानस्वरूपत्वे प्रमाणमित्याह सत्यमिति।

ज्ञाना(४)ज्ञानसुखित्वदु:खित्वादिभिर्जीवानां भेदसिद्धौ सुतरा(५)मीश्वरभेद: अन्यथा(६) बन्धमोक्षानुपपत्ते: (७)। योऽपीश्वराभेदबोधको वेद: सोऽपि तदभेदेन तदीयत्वं प्रतिपादयन् स्तौति, अभेदभावने च यतितव्यमिति वदति। अतएव "सर्वे आत्मान: समर्पिता" इति श्रूयते। मोक्ष(८)दशायामज्ञाननिवृत्तावभेदो जायत इत्यपि न, भेदस्य नित्यत्वे नाशायोगात्, भेदना(१०)शेऽपि व्यक्तिद्वयं स्थास्यत्येव। न च द्वित्वमपि नश्यतीति वाच्यं तत्र(११) निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि सत्यस्वरूपं तदितिवत् द्वित्वाभावेऽपि द्वयात्मकौ ताविति सुवचत्वात्। मिथ्यात्वाभावो(१२)ऽधिकरणात्मकस्तत्र सत्यत्वमिति

---

४। ननु जीवब्रह्मणोरैक्यान्नित्यविज्ञानस्वरूपत्वं विज्ञानस्य निराबाधमित्यतो जीवब्रह्मणोर्भेदं साधयति ज्ञानाज्ञानेति।

५। जीवात्मनां नानात्वसिद्धावीश्वरस्यैकस्यानेकजीवात्मकत्वासम्भव: स्फुट एव एकत्वानेकत्वयोर्विरोधादिति भाव:।

६। नन्वेकस्मिन्नेव ब्रह्मणि जीवोपाधीनामनन्ततया तत्तदन्त:करणावच्छेदेन विलक्षणसुखित्वदु:खित्वाद्यनेकानुभवो न विरुध्यते एकस्मिन्नेव गगने विभिन्नकर्णशष्कुल्यवच्छेदेन विरुद्धशब्दतदभाववदित्याशङ्कायामाह अन्यथेति ईश्वरस्य जीवात्मकत्व इति तदर्थ:।

७। बद्धमुक्तात्मनोरीश्वररूपयोरैक्यात् कश्चिद्बद्ध: (संसारी) कश्चिन्मुक्त: (निवृत्तसंसार:) इति व्यवस्था न स्यादिति भाव:।

८। ननु कथं तर्हि तत्त्वमसीत्यादि तच्छब्दप्रतिपाद्यब्रह्मणि युष्मच्छब्दप्रतिपाद्यजीवस्याभेदबोधको वेद: प्रमाणमित्याह योऽपीति।

९। मोक्षकाले जीवात्मनां ब्रह्मणा सहाभेद उत्पद्यत इति मतं निरस्यति मोक्षेति।

१०। भेदस्यानित्यत्वमभ्युपेत्यापि मोक्षकाले जीवब्रह्मणोर्भेदं व्यवस्थापयति भेदनाशेऽपीति। भेदसत्त्वे व्यक्तिद्वयं निर्विवादमेवेत्यपिना सूचितम्।

११। तव वेदान्तिन:। निर्धर्मक इति तु सत्यत्वाभावेऽपीत्यस्य हेतुतया उक्तम्।

१२। ननु निर्धर्मकत्वं स्वभिन्नधर्मशून्यत्वम् अभावस्याधिकरणात्मकत्वेन मिथ्यात्वाभावरूपस्य सत्यत्वस्य ब्रह्मस्वरूपत्वान्नानुपपन्नमित्यभिप्रायेण शङ्कते मिथ्यात्वाभाव इति।

चेत् एकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमप्युच्यतां, प्रत्येकमेक(१३)-त्वेऽपि पृथिवीजलयो र्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात्। यो(१४)ऽपि तदानीमभेदप्रतिपादक आगमः सोऽपि निर्दुःखत्वादिना साम्यं प्रतिपादयति, सम्पदाधिक्ये, पुरोहितोऽयं राजा संवृत्त इतिवत्। अतएव(१५) "निरञ्जनः परमं साम्यमुपैतीति" श्रूयते। ईश्वरोऽपि(१६)न ज्ञानसुखात्मा किन्तु ज्ञानाद्याश्रयः "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः, "यः सर्वज्ञः" इत्याद्यनुरोधात्। आनन्दम् इत्यस्यापि आनन्दवदित्यर्थः अर्श-आदित्वान्मत्वर्थीयाच्(१७) प्रत्ययात् अन्यथा पुंलिङ्गत्वा(१८)-पत्तेः। आनन्दो(१९)ऽपि दुःखाभावे उपचर्य्यते भाराद्यपगमे सुखी संवृत्तोऽहमितिवत् दुःखाभावेन सुखित्वप्रत्ययात्। अस्तु(२०) वा तस्मिन्नानन्दो न त्वसौ आनन्दः "असुखं"मिति श्रुतेः(२१)। न

---

१३। ननु कथमेकत्वाधिकरणे तदभावरूपद्वित्वमत आह प्रत्येकमिति।

१४। ननु "ब्रह्मविद्ब्रह्मैव भवतीति" श्रुतेर्मोक्षदशायामभेद उत्पद्यत इत्यहमिकायाः का गतिरत आह योऽपीति।

१५। अतएव—"ब्रह्मविद्ब्रह्मैव भवतीति" श्रुतेः साम्यप्रतिपादकत्वादेव।

१६। नात्मसामान्यस्य ज्ञानरूपत्वं किन्तु परमात्मन एवेति द्वितीयपक्षे दूषणमाह ईश्वरोऽपीति।

१७। तदस्यास्तीति अर्थे मतुवादीनामिव "अर्श आदिभ्योऽजि"ति सूत्रेणाच्प्रत्ययस्य विधानम्।

१८। "स्यादानन्दथुरानन्द" इति कोषेणानन्दशब्दस्य नित्यपुंलिङ्गत्वावधारणादिति भावः। न च छान्दसं नपुंसकलिङ्गत्वमिति वाच्यं गत्यन्तराभाव एव छान्दसत्वाभ्युपगमादित्यवधेयम्।

१९। नन्वानन्दवदित्यर्थो न सङ्गच्छते तव मते ईश्वरे आनन्दाभावादत आह आनन्दोऽपीति।

२०। लक्षणाकल्पनमेव तव दोष इत्यत आह अस्तु वेति।

२१। असुखमित्यत्र नञा ब्रह्मणि सुखभेदबोधनादिति भावः।

विद्यते सुखं यस्येति कुतो नास इति चेन्न क्लिष्टकल्पनापत्तेः(२२) प्रकरण(२३)विरोधादानन्दमित्यत्र मत्वर्थीयाच्(२४)प्रत्ययविरोधात् "आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचन" इत्यत्र भेदस्य स्पष्टत्वा-च्चेति संक्षेपः(२५) ॥

एतेन(१)—"प्रकृतिः"(२) कर्त्री पुष्करपलाशवन्निर्लेपः(३) किन्तु चेतनः, कार्य्यका(४)रणयोरभेदात् कार्य्यनाशे सति कार्य्यरूपतया तन्नाशोऽपि न स्या(५)दित्यकारणत्वं तस्य(६)। बुद्धि(७)गतचैतन्याभि-

२२। बहुव्रीहावन्यपदार्थलाभार्थं नञस्तत्र लक्षणापत्तेरित्यर्थः।

२३। ननु नञ्तत्पुरुषेऽपि तत्रासुखपदब्रह्मपदयोरेकधर्मिबोधकत्वलक्षणं सामानाधि-करण्यमनुभवसिद्धम् अन्यथा तयोः समानवचनत्वानुपपत्तेरतस्तन्निर्वाहार्थं तत्रापि नञोऽभावइति लक्षणावश्यकीत्यत आह—प्रकरणेति। अस्थूलमनणु अदीर्घमित्यादौ सर्वत्र नञ्तत्पुरुषदर्शनेन तत्सन्निधौ पठितस्य असुखमिति पदस्य बहुव्रीहिनिष्पन्नत्वे नञ्तत्पुरुषनिष्पन्नपदपरम्परापठि-तत्व-रूपप्रकरणविरोध इत्यनुसन्धेयम्।

२४। क्लीवत्वान्यथानुपपत्त्या आनन्दमित्यत्राच्प्रत्ययस्य कर्त्तव्यतया तत्रानन्दाश्रय एव तदर्थः, एवञ्च न विद्यते सुखं यत्रेति बहुव्रीह्यादरणे सुखाश्रयभिन्नस्यैव बोधात् सुखाश्रयरूपाच्प्रत्य-यान्तार्थेन सह विरोधस्य स्फुटत्वादिति भावः।

२५। इति वेदान्तिमतखण्डनम्।

१। सांख्यमतं दूषयितुमुपन्यस्यति एतेनेति, पूर्वोक्तयुक्त्या आत्मनो ज्ञानवत्त्वसाधनेन वक्ष्यमाणयुक्त्यनुसारेण च इत्यर्थः।

२। प्रकृतिः—मूलप्रकृतिः, कर्तृत्वञ्चात्र कर्तृभूतान्तःकरणप्रकृतित्वम्, अनुकूलकृति-मत्त्वलक्षणकर्तृत्वस्य तन्मते अन्तःकरणधर्मत्वादित्यवधेयम्।

३। यथाच पद्मपत्रमम्भसा लिप्तं न भवति तथा पुरुषः कर्तृत्वाश्रयो न भवतीति भावः। तथाच—पुरुषः कर्तृत्वाभाववान् कारणत्वाभावादित्यनुमानं पुरुषे कर्तृत्वभाव साधकमिति फलितम्।

४। ननु पुरुषे कारणत्वाभाव एव कुत इत्यत आह कार्य्यकारणयोरिति।

५। नस्यादिति—पुरुषस्य घटादिकारणत्वे घटादिकार्य्यस्यापि नाशो न स्यात् कार्य्य-कारणयोरभेदात् पुरुषस्य चाविकारस्य नाशरूप-विकारासम्भवादिति भावः।

६। तस्य—पुरुषस्य।

७। नन्वेतादृशपुरुषसत्त्वे किं मान-मत आह—बुद्धिगतेत्यादि। क्वचित् प्रसिद्धस्यैव चैतन्यस्य बुद्ध्या-वारोपसम्भवात्तदर्थं चैतन्याश्रयतया पुरुषकल्पनमिति भावः।

**धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥४९॥**

मानान्यथानुपपत्त्या तत् कल्पनम् । बुद्धिश्च प्रकृतेः प्रथमः परिणामः (८)। सैव महत्तत्वमन्तःकरणमप्युच्यते। तत्सत्त्वासत्त्वाभ्यां(९) पुरुषस्य संसारापवर्गौ। तस्या एवेन्द्रियप्रणालिकया परिणति-ज्ञानरूपा घटादिना सम्बन्धः। पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात्(११)। ममेदं(१२) कर्त्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया चेतनप्रतिविम्बादतात्त्विको दर्पणस्येव मुखोपरागः। इदमिति विषयोपराग इन्द्रियप्रणालिकया(१३) परिणतिभेदस्तात्त्विको निश्वासाभिहतदर्पणस्येव मलिनिमा। कर्त्तव्यमिति व्यापारांशः(१४)। तेनांशत्रयवती बुद्धिः। तत्परिणामेन ज्ञानेन

---

८। तथाच सांख्यसूत्रं—सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिगण इति।

९। ननु पुरुषस्य कर्तृत्वाभावे तत्र धर्माधर्मयोरुत्पत्त्यभावात्तदधीन-सुखदुःखयोस्तत्रानुत्पत्तौ दुःखध्वंसरूपमोक्षः पुरुषस्य कथमत आह तत्सत्त्वासत्त्वाभ्यामिति बुद्धिसत्त्वासत्त्वाभ्यामित्यर्थः।

१०। इन्द्रियप्रणालिकयेति—इन्द्रियद्वारेत्यर्थः इन्द्रियमार्गेण वहिर्निर्गताया बुद्धेर्घटादिविषयदेशप्राप्तौ तदाकारेण बुद्धेः परिणामो जायते स एव वृत्तिरूपं घटादिज्ञानमिति रीत्या इन्द्रियाणां द्वारता बोध्या।

११। भेदाग्रहादिति बुद्धिपुरुषयोर्भेदाग्रहादित्यर्थः।

१२। इदानीं बुद्धित उपलब्धेर्भेददर्शनार्थं बुद्धेरंशत्रयं दर्शयति ममेदमित्यादिना। पुरुषोपरागः पुरुषसम्बन्धः, दर्पणस्य यथा मुखसम्बन्धः प्रतिविम्बमात्रं न तु तात्त्विकस्तथा बुद्धिपुरुषयोर्भेदाग्रहादेकत्वाभिमानः पुरुषोपराग इत्यर्थः।

१३। इन्द्रियप्रणालिकया—इन्द्रियद्वारा, परिणतिभेदः अयं घट इत्यादि ज्ञानरूपः परिणामः।

१४। पूर्वोक्तपुरुषोपरागविषयोपरागाभ्यां कर्त्तव्यस्य घटादेरवभासत्वेन कर्तव्यत्वाध्यवसायो व्यापारांश इत्यर्थः।

पुरुषस्यातात्त्विक: सम्बन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धि-रुच्यते(१५)। ज्ञानादिवत् सुखदु:खेच्छाद्वेषप्रयत्नधर्माधर्मा अपि बुद्धेरेव। कृतिसामानाधिकरण्येन प्रतीते:। न च बुद्धिश्चेतना परिणामित्वादिति सांख्यमतमपास्तम्। कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्च। चेतनोऽहं करोमीति प्रतीति: बुद्धे: परिणामित्वाच्चैतन्यांशे(१८) भ्रम इति चेत् कृत्यांशे किं नेष्यते(१९)। अन्यथा(२०) बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे तत्पूर्वमसंसारापत्ति:(२१)। अचेतनाया: प्रकृते: कार्यत्वात् बुद्धेरचैतन्यं कार्यकारणयोस्तादात्म्यादिति चेन्न असिद्धे:(२२)।

---

१५। तथाच—ज्ञानेन सह चेतनोऽहमिदं जानामीत्याकारो बुद्धावारोपितो य: सम्बन्धोऽतात्त्विक: स उपलब्धि-र्नतु बुद्धिरेवोपलब्धिरिति भाव:।

१६। कृति: स्वसमानाधिकरणमेवादृष्टं जनयति, तच्चादृष्टं स्वसमानाधिकरणमेव भोगं जनयतीति कृत्यादृष्टभोगानां परम्परया सामानाधिकरण्यप्रमितिवत् चेतनोऽहं करोमीति परम्परया सामानाधिकरण्यप्रमिति-प्रतीतेरित्यर्थ:।

१७। तद्भिन्ने—कर्तृभिन्ने, मानाभावादिति चेतन इत्यादि:। च: पूर्वोक्तदोषसमुच्चायक:।

१८। कर्तृत्वाश्रयो न चेतन: जन्यधर्माश्रयत्वात् घटवदिति बाधकसत्त्वाच्चेतनोऽहं करोमीति प्रतीतिश्चैतन्यांशे भ्रम इत्याशङ्कते चैतन्यांश इति।

१९। बुद्धि: कर्तृत्वाभाववती जन्यत्वादिति बाधकस्य तत्रापि सत्त्वादिति भाव:।

२०। अन्यथा—कर्तृचेतनयोर्भेदाङ्गीकारे।

२१। तथाहि—कर्तृभिन्नस्य चेतनस्य स्वीकारे तत्र सुखदु:खाद्यभावात् संसारमोक्षयोरनुपपत्त्या पूर्वोक्तरीत्या बुद्धिसत्त्वासत्त्वाभ्यामेव संसारापवर्गौ वाच्यौ, तथाच बुद्धेर्नित्यत्वे तु तत्सत्त्वनिबन्धनस्य संसारस्य सर्वदापत्त्या मोक्षाभावप्रसङ्ग एव। बुद्धेरनित्यत्वे तु अजन्यस्य मानाभावेन तत्र जन्यत्वस्य स्वीकरणीयतया तदुत्पत्ते: पूर्वं तत्सत्त्वनिबन्धन: संसारो न स्यादित्यर्थ:। न चेष्टापत्तौ किं बाधकमिति वाच्यं पूर्वमसंसारिणोऽपि संसारस्योपगमे मुक्तस्यापि पुन: संसारित्वापत्त्या कस्यापि मोक्षार्थं प्रवृत्तिर्न स्यादिति। वस्तुतस्तदुत्पत्ते: पूर्वं तदाश्रितादृष्टादेरभावाद्बुद्धेरुत्पत्त्यनुपपत्त्या कदापि संसारो न स्यादित्यवधेयम्।

२२। बुद्धौ प्रकृतिकार्यत्वाभावादिति भाव:।

**प्रवृत्त्यादानुमेयोऽयं* रथगत्येव सारथिः।**
**अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥५०॥**

कर्त्तुर्जन्यत्वे (२३) मानाभावात्। वीतराग(२४)जन्मादर्शनादनादित्वम्। अना(२५)देर्नाशासम्भवान्नित्यत्वम्। तत् किं प्रकृत्यादिकल्पनेन। न च

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते॥"

इत्यनेन(२६) विरोध इति वाच्यम्। प्रकृतेर(२७)दृष्टस्य, गुणैर-

---

२३। ननु कर्त्तृत्वेन जन्यत्वानुमितिः परिशेषात् प्रकृतिजन्यत्वविषयिणी स्यादित्याह कर्त्तुरित्यादि। कर्तृत्वस्य जन्यत्वव्याप्यत्वे अनुकूलतर्काभावादिति भावः।

२४। जन्यत्वविपरीतानादित्वग्राहकतर्कमवतारयति वीतरागजन्मादर्शनादिति। सरागजन्मदर्शनादिति तदर्थः। तथाच—स्तन्यपाने बालस्य प्रवृत्तिर्नेष्टसाधनताज्ञानमन्तरेण सम्भवति, तच्च नानुभवस्वरूपं बाधात्, स्मरणस्य स्वसमानाधिकरणपूर्वानुभवसापेक्षतया पूर्वजन्मसत्त्वे सत्यपि प्रथमप्रवृत्त्यनुरोधेन तत्पूर्वस्य एवं तत्पूर्वपूर्वस्य च जन्मनः सिद्धावनादित्वमात्मनः सिद्धमिति भावः।

२५। अनादेरित्यनन्तरं भावस्येति पूरणीय-मन्यथा प्रागभावस्यानादेरपि नाशदर्शनादसङ्गत्यापत्तेरित्यवधेयम्।

२६। प्रकृति-र्माया तस्या गुणैः सत्त्वरजस्तमोलक्षणैः क्रियमाणानि सर्वशः कर्म्माणि भवन्तीति शेषः। अहङ्कारः अहमिति प्रत्ययः तेन विमूढ आत्मा अन्तःकरणं यस्य तथाविधः पुरुषः (तेषां कर्म्मणां) कर्त्ता अहमिति मन्यते इत्यर्थकेन भगवद्वचनेनात्मनः कर्त्तृत्वाभावबोधनाद्विरोध इत्यर्थः।

२७। भगवद्वाक्यस्य स्वाभिप्रायसमर्थकमर्थं प्रदर्श्य विरोधं परिहरति प्रकृतेरित्यादिना।

---

* अत्रायं प्रयोगः—परकीयशरीरमात्मवत् प्रवृत्तिमत्त्वात्। चेष्टारूपप्रवृत्तेर्हेतुत्वं समवायसम्बन्धेन। साध्यत्वं स्वसमवेतप्रयत्नवत्त्वसम्बन्धेन। प्रयत्नवत्त्वञ्च अवच्छेदकतासम्बन्धेनेति ध्येयम्।

दृष्टजन्यैर्गुणैरिच्छादिभिः, कर्त्ताहं कर्त्ताहमेव, इत्यस्य तदर्थ(२८)-त्वात् "तत्रैवं सति कर्त्तार-मात्मानं केवलन्तु यः" इत्यादि वदता भगवता प्रकटीकृतोऽय-मुपरिष्टादाशय इति संक्षेपः(२९)॥

धर्माधर्माश्रय इति। आत्मेत्यनुषज्यते। शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्मणां देहान्तरेण भोगानुपपत्तेः। विशेषगुणयोगत इति। योग्यविशेषगुणस्य ज्ञानसुखादेः सम्बन्धेनात्मनः प्रत्यक्षं भवति न त्वन्यथा अहं जाने अहङ्करोमि इत्यादिप्रतीतेः(३०)॥४९॥

प्रवृत्तीति। अयमात्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते। प्रवृत्तिरत्र चेष्टा(३१)। ज्ञानेच्छाप्रयत्नादीनां देहे अभावस्योक्त(३२)-प्रायत्वात् चेष्टायाश्च प्रयत्नसाध्यत्वात्। चेष्टया प्रयत्नवानात्माप्यनु-मीयत(३३) इति भावः। तत्र दृष्टान्तमाह—रथेति यद्यपि(३४) रथकर्म चेष्टा न भवति तथापि तेन कर्मणा सारथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्मणा परात्मापीति भावः।

---

२८। तथाच तेन स्वतन्त्रकर्त्तृत्वाभाव एवात्मनि प्रतिपाद्यते न तु कर्तृत्वसामान्याभाव इति भावः।

२९। एवं पुरुषस्यैव कर्तृत्व-मस्तु न च कारणत्वाभावेन कर्तृत्वाभाव एव साधनीय इति वाच्यं स्वरूपासिद्धेः। कार्य्यकारणयोरभेदात् कार्य्यनाशे कार्य्यरूपतया नाशः स्यादित्यकारणत्वं पुरुषस्येत्यपि न सत्कार्य्यकारणयोरभेदस्यैवासिद्धत्वादित्यादिविस्तरभिया नोक्तमित्याशयवानाह संक्षेप इति।

३०। ज्ञानादि-सम्बन्धप्रकारेणैवात्मनः प्रत्यक्षस्यानुभवसिद्धत्वादित्यर्थः।

३१। परकीयप्रवृत्त्यादेरतीन्द्रियत्वेन हेतुज्ञानासम्भवात् स्वरूपासिद्धेराह प्रवृत्तिरत्र चेष्टेति।

३२। शरीरस्य न चैतन्यमित्यनेनोक्तत्वात् इच्छादीनां कण्ठरवेणानुक्तेः प्रायपदम।

३३। शरीरे समवायेन चेष्टयानुमितस्यावच्छेदकतासम्बन्धेन प्रयत्नस्य समवायेनाश्रय आत्मैवेति भावः।

३४। दृष्टान्तासिद्धि-माशङ्क्य निराकरोति यद्यपीति। तथा चोत्तरसंयोगप्रतियोग्य-क्रियावत्त्वस्यैव हेतुत्वमित्याशयः।

**विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता ।**
**अनुभूतिः स्मृतिश्च स्या दनुभूतिश्चतुर्विधा* ॥ ५१ ॥**

अहङ्कारस्येति । अहङ्कारोऽहमिति प्रत्ययः तस्याश्रयो विषयः न शरीरादिरिति । मन इति—मनोभिन्नेन्द्रियजन्य-प्रत्यक्षाविषयो मानसप्रत्यक्षविषयश्चेत्यर्थः, रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् ॥५०॥

विभुरिति । विभुत्वं परममहत्त्वं, तच्च (१) पूर्वोक्तमपि स्पष्टार्थमुक्तम् । बुद्ध्यादीति—बुद्धिसुखदुःखेच्छादिचतुर्दशगुणाः पूर्वोक्ता (२) वेदितव्याः । अत्रैव प्रसङ्गाद्बुद्धेः कतिपयप्रपञ्चं दर्शयति—बुद्धिस्त्विति, द्वैविध्यं व्युत्पादयति—अनुभूतिरिति । अनुभूतिश्चतुर्विधेति, एतासां चतसृणां करणानि "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति" सूत्रोक्तानि वेदितव्यानि ॥ ५१ ॥

---

१। "कालखात्मदिशां सर्वगतत्वं परमं महदित्यनेनात्मनि परममहत्त्वलक्षोक्तेः पौनरुक्त्यमाशङ्क्य परिहरति—तच्चेति ।

२। "बुद्ध्यादिषट्क"मित्यादिना साधर्म्यप्रकरणे उक्ता इत्यर्थः ।

---

* प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः ।
अनुमानञ्च तच्चापि सांख्याः शब्दञ्च ते उभे ॥
न्यायैकदेशिनोऽप्येवं उपमानञ्च केचन ।
अर्थापत्त्या सहैतानि चत्वार्याहुः प्रभाकराः ॥
अभावषष्ठान्येतानि भट्टा वेदान्तिनस्तथा ।
सम्भवैति ह्ययुक्तानि तानि पौराणिका जगुः ॥

एवं विप्रतिपन्नानां चार्वाकादीनां प्रमाणानुसारेणानुभूतिप्रकारभेदेऽपि विप्रतिपत्तयः सन्तीति तदपाकरणार्थमाह—चतुर्विधा इति, चतस्रो विधाः प्रकारा अस्या अनुभूतेर्न न्यूना नापि अधिकाः, अनुमिनोमि उपमिनोमि शाब्दयामीति प्रतीतिसिद्धानामनुमित्यादीनां दुर्वारतया चार्वाकादिमतानामयुक्तत्वात् अर्थापत्त्यादीनान्तु यथायथमनुमित्याद्यावेवान्तर्भावादिति भावः ।

प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे।
घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥

प्रत्यक्षमिति। इन्द्रियजन्यं (३) ज्ञानं प्रत्यक्षम्। यद्यपि मनोरूपेन्द्रियजन्यं सर्व्वमेव ज्ञानं तथापि इन्द्रियत्वेन रूपेण इन्द्रियाणां यत्र ज्ञाने करणत्वं तत्प्रत्यक्षमिति विवक्षितम्। ईश्वरप्रत्यक्षन्तु (४) न लक्ष्यम्, इन्द्रियार्थसन्निकर्षोत्पन्नं (५) ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्ष"मिति सूत्रे तथैवोक्तत्वात् (६)। अथवा (७)

---

३। प्रथमोपस्थितत्वादादौ प्रत्यक्षं लक्षयति—इन्द्रियजन्यमिति। इन्द्रियरूपादेरपि इन्द्रियजन्यत्वेन तद्वारणार्थकतया ज्ञानपदस्योपादानम्, सार्थकत्वेऽपि मनोरूपेन्द्रियजन्यानुमित्यादावतिव्याप्तिवारणाय इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यत्वस्यानुपदमेव विवक्षणीयतया तदसम्भवात् ज्ञानमिति स्वरूपकीर्त्तनमेव। अथवा प्रमार्थकं ज्ञानपदं भ्रमनिरासाय, एवञ्च सूत्रानुसारित्वमप्येतल्लक्षणस्य सम्भवेदन्यथा सूत्रे अव्यभिचारीत्यनेन भ्रमनिरासात्तदनुसारित्वं न स्यादिति विभावनीयम्।

४। नन्विन्द्रियजन्यत्वाभावादीश्वरप्रत्यक्षे अव्याप्तिरित्याह—ईश्वरप्रत्यक्षन्त्विति। तथाच जन्यप्रत्यक्षमेवास्य लक्ष्यमिति भावः।

५। ईश्वरप्रत्यक्षस्यालक्ष्यत्वे सूत्रकारसम्मतिं दर्शयति—इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादि। इन्द्रियार्थसन्निकर्षोत्पन्नमित्यनेन ईश्वरप्रत्यक्षस्यानुमित्यादेश्च निरासः। भ्रमनिरासार्थमाह—अव्यभिचारीति, भ्रमभिन्नमिति तदर्थः। एतावता प्रत्यक्षप्रमाया एव लक्षणमुक्तमतो भ्रमे लक्षणागमनेऽपि न क्षतिः। शिष्टपदाभ्यान्तु प्रत्यक्षस्य विभागः कृतः, तथाहि अव्यपदेश्यं निर्विकल्पकं व्यवसायात्मकं विशिष्टव्यवसायात्मकं सविकल्पकमित्यर्थः। न चाव्यपदेश्यपदेन कथं निर्विकल्पकलाभ इति वाच्यम्। व्यपदेशः शब्दप्रयोगः, स च विशिष्टज्ञानादेवेत्यव्यपदेश्यत्वेन व्यपदेशानर्हत्वेन निर्विकल्पकलाभात्। एवञ्च सूत्रे इन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारिज्ञानम् अव्यपदेश्यं व्यवसायात्मकमिति योजना बोध्या, अन्यथा लक्षणवाक्ये विभागसाधकपदेन व्यवधानादसङ्गत्यापत्तेरित्यवधेयम्।

६। तथैवोक्तत्वादिति, ईश्वरप्रत्यक्षत्वस्यालक्ष्यत्वस्यैवाभिप्रेतत्वादित्यर्थः।

७। ईश्वरप्रत्यक्षस्यापि लक्ष्यत्वमभिप्रेत्याह—अथवेति। विशिष्टज्ञानमात्रस्य विशेषणज्ञानजन्यत्वात्तत्राभिव्याप्तिप्रसक्त्या ज्ञानजन्यत्वमपहाय ज्ञानाकरणकत्वपर्य्यन्तानुसरणम्। अथ

ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। अनुमितौ व्याप्तिज्ञानस्य उपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मरणेऽनुभवस्य च हेतुत्वान्न तत्र तत्रातिव्याप्तिः। इदं लक्षणमीश्वरप्रत्यक्षसाधारणम् (८)। परामर्शजन्यं (९) ज्ञानमनुमितिः। यद्यपि परामर्शप्रत्यक्षादिकं (१०) परामर्शजन्यं तथापि परामर्शजन्यं हेत्वविषयकं यज्ज्ञानं तदेवानुमितिः। न च कादाचित्क(११)हेतुविषयकानुमितावव्याप्तिरिति वाच्यं, तादृश(१२)ज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। अथवा(१३)व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः। एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः। पदज्ञानकरणकं ज्ञानं शाब्दबोधः। वस्तुतो(१४)

---

निदिध्यासनद्वारा मननादिज्ञानकरणके योगिप्रत्यक्षे लक्षणमिदमव्याप्तमिति चेन्न ज्ञानाकरणकत्वपदेन ज्ञानकरणत्वाव्यभिचारिजातिशून्यज्ञानत्वस्य विवक्षितत्वात्, तादृशी च जातिरनुमित्यादिरेव। एतेनानुमित्यादौ व्याप्तिज्ञानादेर्ज्ञानत्वेन कारणतानये ज्ञानत्वघटितकरणतावच्छेदकधर्माप्रसिद्ध्या असम्भवोऽपि प्रत्युक्त इति ध्येयम्।

८। करणसामान्यशून्यत्वादीश्वरप्रत्यक्षस्य संग्रहसम्भवादिति भावः।

९। अनुमितिं लक्षयति—परामर्शेति। परामर्शत्वं व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वम्। तथाच व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानमनुमितिरिति फलितम्।

१०। प्रत्यक्षादिकमित्यादिना विशेषणतावच्छेदकप्रकारकनिश्चयविधया परामर्शजन्यस्य विशिष्टवैशिष्ट्यबोधस्य परिग्रहः। परामर्शप्रत्यक्षस्य परामर्शजन्यत्वन्तु विषयविधया तत्र परामर्शस्य हेतुत्वादित्यनुसन्धेयम्।

११। कादाचित्केति, धूमवान् पर्वतो वह्निमानित्यनुमितौ पक्षतावच्छेदकविधया धूमस्य भानादित्यर्थः।

१२। तादृशेति परामर्शजन्यहेत्वविषयकेत्यर्थः। सत्तामादायातिव्याप्तिरतोऽनुभवत्वव्याप्येति।

१३। पक्षधर्मताया अप्रवेशेन लाघवाल्लक्षणान्तरमाह—अथवेति।

१४। नन्वनुमितिं प्रत्यपि न व्याप्तिज्ञानत्वेन करणत्वं किन्तु ज्ञानत्वेन मनस्त्वेनैव वा, एवमुपमित्यादावपि मनस्त्वेनैव करणत्वं कार्यवैलक्षण्यस्य सामग्रीवैलक्षण्यादेवोपपत्तेः। विजातीयप्रमाभेदेनैव प्रमाणानां विभागस्यापि सम्भवादिति पूर्वोक्तानुमित्यादिलक्षणानामसम्भव इत्यत आह—वस्तुत इति। घटे अतिव्याप्तिवारणाय हत्यन्तम्। ज्ञानत्वानुभवत्वादिकमादाय प्रत्यक्षादावतिव्याप्तिवारणाय विशेष्यदलम्।

घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृत:।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुते: ॥५३॥
उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये।
विभागसंयोगपरापरत्व-स्नेहद्रवत्वं परिमाणयुक्तम् ॥५४॥

यत्किञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्ति-प्रत्यक्षावृत्तिजातिमत्त्वम् अनुमितित्वम्। एवं (१५) यत्किञ्चित् प्रत्यक्षादिकमादाय तद्व्यक्तिवृत्ति अनुमित्यवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं (१६) वाच्यमिति। जन्यप्रत्यक्षं विभजते घ्राणजादीति—घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षम्। न चेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वम्। जन्यप्रत्यक्षस्यैव निरूपणीयत्वात् उक्तसूत्रानुसारात् (१७) ॥ ५२ ॥

घ्राणस्येति। गोचर इति ग्राह्य इत्यर्थ:। गन्धत्वादिरिति आदिपदात् सुरभित्वासुरभित्वपरिग्रह:। गन्धस्य प्रत्यक्षत्वात्तद्वृत्तिजातिरपि प्रत्यक्षा। गन्धाश्रयग्रहणे तु घ्राणस्य न सामर्थ्यमिति बोध्यम्। तथा रस इति रसत्वादिसहित इत्यर्थ:। गन्धो रसश्च उद्भूतो बोध्य:। तथा—शब्दत्वादिसहित: ॥ ५३ ॥

---

१५। ननु मनस: करणतापक्षे ज्ञानाकरणकज्ञानत्वरूपं प्रत्यक्षलक्षणमनुमित्यादावतिव्याप्तमत: प्रत्यक्षस्य लक्षणान्तरमाह एवमिति।

१६। प्रत्यक्षत्वादिकमिति. यत्किञ्चिदुपमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वमुपमितित्वं। यत्किञ्चिच्छाब्दबोधव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वं शाब्दत्वं निर्वाच्यमित्याशय:।

१७। इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादि प्रदर्शितसूत्रानुसारादित्यर्थ:।

क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः ।
गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः ॥ ५५ ॥
उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः ।
रूपान्यच्चक्षुषोऽयोग्यं रूपमत्रापि कारणम् ॥ ५६ ॥

उद्भूतरूपमिति । (१८) ग्रीष्मोष्मादावनुद्भूतरूपमिति न तत् प्रत्यक्षम् । तद्वन्ति उद्भूतरूपवन्ति ।

योग्येति । पृथक्त्वादिकमपि योग्यव्यक्तिवृत्तितया ग्राह्यम् । तादृशः—योग्यवृत्तिरित्यर्थः । चक्षुर्योग्यत्वमेव कथं तदाह—गृह्णातीति, आलोकसंयोग उद्भूतरूपञ्च चाक्षुषप्रत्यक्षं प्रति कारणम् । (१९) तत्र द्रव्यचाक्षुषं प्रति तयोः समवायसम्बन्धेन कारणत्वम् । द्रव्यसमवेतप्रत्यक्षं प्रति स्वाश्रयसमवायसम्बन्धेन द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेनेति ॥ ५४ ॥ ५५ ॥

उद्भूतेति, उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः । सोऽपि—उद्भूतस्पर्शोऽपि स्पर्शत्वादिसहितः । रूपान्यदिति,—रूपभिन्नं रूपत्वादिभिन्नञ्च चक्षुषो यत् योग्यं तत् त्वगिन्द्रियस्यापि ग्राह्यम् । तथाच पृथक्त्वादिसंख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ता एवं क्रिया एवं जातयो

---

१८। उद्भूतपदस्य प्रयोजनमाह ग्रीष्मोष्मादाविति,—आदिना चूर्णप्रविष्टतेजःपरिग्रहः । न तत् प्रत्यक्षमिति नोष्मादिगतरूपप्रत्यक्षमित्यर्थः, रूपे उद्भूतत्वप्रवेशेन उष्मादिप्रत्यक्षस्य वारणासम्भवात् "द्रव्याणि तद्वन्ती"त्यनेन तस्य वारणीयत्वाच्च तच्छब्देनोष्मादिपरिग्रहासम्भवादिति भावः ।

१९। आलोकसंयोगस्य कारणत्वमन्धकारे चाक्षुषापत्तिवारणाय उद्भूतरूपस्य तु पिशाचादीनां प्रत्यक्षत्ववारणायेति बोध्यम् ।

योग्यवृत्तयश्च ते त्वचो ग्राह्या इति। अत्रापि त्वगिन्द्रियजन्येऽपि रूपं द्रव्यप्रत्यक्षे (२०) कारणं, तथाच वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणमिति। नवीनास्तु वहिरिन्द्रियजन्य-द्रव्यप्रत्यक्षमात्रे रूपं न कारणं प्रमाणाभावात्, किन्तु चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणम् अन्वयव्यतिरेकात्। वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेत् न किञ्चित्, आत्मावृत्ति(२१)शब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु। रूपस्य कारणत्वे लाघवमिति चेन्न वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात्, इष्टापत्तिरिति चेत् स्पर्श एव लाघवात् कारणमस्तु प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिरित्येव किं नेष्यते। यस्मात् प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्ययस्य सत्त्वात् वायोरपि प्रत्यक्षं भवत्येव (२२)। वहिर्द्रव्यप्रत्यक्षमात्रे तु न रूपस्य न वा स्पर्शस्य हेतुत्वं वायुप्रभयो(२३)रेकत्वं गृह्यत एव, क्वचित् (२४)

---

२०। द्रव्यप्रत्यक्ष इति परकारिकास्थद्रव्याध्यक्ष इत्यस्य विवरणं तस्य परान्वयित्वाभावादिति मन्तव्यम्।

२१। ननु कार्य्याभावे कारणाभावस्य प्रयोजकतया गगनादौ वहिरिन्द्रियजन्यप्रत्यक्षाभावे रूपाभावस्पर्शाभावयोः प्रयोजकत्वकल्पने गौरवात्तादृशप्रत्यक्षं रूपत्वेन हेतुतां कल्पयित्वा तदवच्छिन्ना भावत्वेनैव तादृशप्रत्यक्षाभावे प्रयोजकत्वमुचितमित्यत आह आत्मावृत्तीत्यादि। तत्रात्मनो वहिरिन्द्रियजन्यप्रत्यक्षवारणाय आत्मावृत्तीति। आकाशस्य वहिरिन्द्रियजन्य-प्रत्यक्षवारणाय शब्दभिन्नेति। कालादेस्तद्वारणाय विशेषेति।

२२। एवञ्च उद्भूतरूपत्वेन उद्भूतस्पर्शत्वेन वा कारणत्वमित्यत्र विनिगमनाविरहाद्गुरुभूतस्यापि आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वस्य कारणत्वमित्याशय:

२३। ननु वृद्धैः स्पार्शनानङ्गीकारात्तत्स्पार्शनवारणाय स्पर्शान्यद्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तस्पार्शनवद्द्रव्यसमवायत्वेन हेतुत्वस्य वाच्यतया वायोः स्पार्शनाङ्गीकारो नोचितः, अन्यथा वायुगतसंख्यापरिमाणयोस्त्वचा ग्रहणप्रसङ्गादित्यतस्तत्रेष्टापत्तिमाह वायुप्रभयोरिति। प्रभोपादानं दृष्टान्तार्थं, नातः प्रभागतसंख्याप्रत्यक्षे इष्टापत्तेः प्रकृतानुपयोगित्वेऽपि क्षतिः।

२४। क्वचित्—भूयोऽवयवावच्छेदेन त्वगिन्द्रियसन्निकर्षस्थले सजातीयसम्बलनाभाव इत्यर्थः।

**द्रव्याध्यक्षे, त्वचो योगो मनसा ज्ञानकारणम्।**
**मनोग्राह्यं सुखं दुःख-मिच्छा द्वेषो मतिः कृतिः ॥५७॥**

द्वित्वादिकमपि, क्वचित् (२५) संख्यापरिमाणाद्यग्रहो दोषादित्याहुः (२६) ॥ ५६ ॥

त्वचो योगो मनसा ज्ञानकारणमिति, त्वङ्मनःसंयोगो ज्ञानसामान्ये (२७) कारणमित्यर्थः। किं तत्र प्रमाणं सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्त्तमानेन मनसा ज्ञानाजननमिति। ननु सुषुप्तिकाले किं ज्ञानं भविष्यति ? अनुभवरूपं स्मरणरूपं वा ? नाद्यः, अनुभवसामग्र्यभावात्। तथाहि—चाक्षुषादिप्रत्यक्षे चक्षुरादिना सह मनःसंयोगस्य हेतुत्वात् तदभावादेव न चाक्षुषादिप्रत्यक्षं, ज्ञानादेरभावादेव न मानसप्रत्यक्षं, (२८) ज्ञानाद्यभावे चात्मनोऽपि न प्रत्यक्ष(२९)मिति। व्याप्तिज्ञानाभावात् नानुमितिः, सादृश्यज्ञानाभावात् नोपमितिः, पदज्ञानाभावात् न शाब्दबोधः, इत्यनुभवसामग्र्याभावात् नानुभवः। उद्बोधकाभावाच्च (३०) न स्मरणम्। मैवं

---

२५। क्वचित्—सजातीयसम्वलनदशायां। दोषादिति, सजातीयसम्वलनादिरूपदोषादित्यर्थः।

२६। वायोः प्रत्यक्षतामन्दे हेन लाघवान्मूर्त्तप्रत्यक्षत्वावच्छिन्नं प्रतिरूपत्वेनैव कारणत्वमुचितं, यच्चोक्तं प्रभाया अप्रत्यक्षत्वेऽष्टापत्तिरित्येव किं न स्यादिति तदपि न उपरिदेशे विहङ्गम इत्यत्र प्रभामण्डलस्यैवोपरिदेशतया तत्प्रत्यक्षं विना उपरिदेशे विहङ्गम इति प्रत्यक्षानुपपत्तेरित्यादिकमस्वरसबीजमाहुरित्यनेन सूचितम्।

२७। जन्यज्ञानसामान्ये इत्यर्थः, नातो नित्यज्ञाने त्वङ्मनः-संयोगस्याकारणत्वेऽपि क्षतिः।

२८। अत्र ज्ञानादेरित्यस्यानुसङ्गेनान्वयो बोध्यः, अन्यथा केषामित्याकाङ्क्षाया अनिवृत्तेः।

२९। "धर्म्माधर्म्माश्रयोऽध्यक्षो विशेषगुणयोगतः" इति कारिकायां योग्यविशेषगुणसम्बन्धेनैवात्मनो मानसत्वस्याङ्गीकारात्तदन्तर्गतस्य ज्ञानादेरभावादेव न प्रत्यक्षमित्यर्थः।

३०। उद्बोधकस्य फलबलकल्प्यत्वादत्र च स्मरणरूपफलाभावेन तत्कल्पनासम्भवादिति भावः।

सुषुप्तिप्राक्कालोत्पन्नेच्छादि(३१)व्यक्तेस्तत्सम्बन्धेनात्मनश्च प्रत्यक्षप्रसङ्गात्, तदतीन्द्रियत्वे (३२) मानाभावात्. सुषुप्तिप्राक्काले (३३) निर्विकल्पकमेव जायत इत्यत्रापि प्रमाणाभावात्। अथ ज्ञानमात्रे त्वङ्मन:संयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात्। विषयत्वक्संयोगस्य त्वङ्मन:संयोगस्य च सत्त्वात्। परस्पर(३४)प्रतिबन्धादिकमपि वा न स्यादिति। अत्र केचित् पूर्वोक्तयुक्त्या त्वङ्मनोयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसामग्र्या: स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात् (३५) कल्प्यत इति। अन्ये तु (३६) सुषुप्त्यनुरोधात् चर्म्ममन:संयोगस्य ज्ञानहेतुत्वं कल्प्यते चाक्षुषादिप्रत्यक्षकाले त्वङ्मन:संयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति॥ मनोग्राह्यमिति, मनोजन्य(३७)प्रत्यक्षविषय इत्यर्थ:। मतिर्ज्ञानम्। कृति: प्रयत्न:। एवं सुखत्वादिकमपि मनोग्राह्यम्। एवमात्मापि मनोग्राह्य:, किन्तु मनोमात्रस्य गोचर इत्यनेन पूर्वमुक्तत्वात् अत्र नोक्त:॥ ५७॥

---

३१। इच्छाद्या आदिरिति व्युत्पत्त्या अत्रेच्छादिव्यक्तिपदेन ज्ञानमाव विवक्षितं, नात: प्रथमोपस्थितज्ञानमुपेक्ष्य इच्छादिव्यक्तेरभिधाननिबन्धनासङ्गति:।

३२। तदतीन्द्रियत्वे—ज्ञानातीन्द्रियत्वे।

३३। ननु सुषुप्तिप्राक्कालीनज्ञानस्य निर्व्विकल्पकरूपत्वात्तदतीन्द्रियत्वमुभयवादिसिद्धमेवेत्यत आह सुषुप्तिप्राक्काल इति।

३४। ननु चाक्षुषादिसामग्र्या: स्पार्शनप्रतिबन्धकत्वादेव न तत्र स्पार्शनं भवतीत्याह—परस्परेति।

३५। अनुभवस्य सर्व्वैरेव स्वीकृतत्वादन्यथा स्पार्शनकालेऽपि चाक्षुषं भवत्वेवेति इष्टापत्त्यादिना त्वदुक्तापत्तेरसङ्गतापातादिति भाव:।

३६। मिश्रमतमाह अन्येत्वित्यादिना,—सुषुप्त्यनुरोधेन सुषुप्तौ ज्ञानानुत्पादानुरोधेन, इत्यत्र चाक्षुषकाले पूर्व्वोक्तस्पार्शनापत्तिर्न सम्भवतीत्यावेदयितुमाह—चाक्षुषादीति।

३७। मनोग्राह्यत्वस्य सार्व्वत्रिकत्वादाह—मनोजन्येति, मनोमात्रजन्येत्यर्थ:, अन्यथा तद्दोषतादवस्थ्यादिति ध्येयम्।

**ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।**
**महत्त्वं षड्विधे * हेतुरिन्द्रियं करणं मतम् ॥ ५८ ॥**

ज्ञानमिति,—चक्षुःसंयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न सम्भवति, पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् (१)। तथा च प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव (२) ज्ञानं जायते, तदेव (३) निर्विकल्पकं, तच्च न प्रत्यक्षं (४)। तथाहि—(५) वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षं न भवति घटमहं जानामीति प्रत्यक्षात् तत्रात्मनि ज्ञानं

१। कदाचित् घट इत्याकारकं स्वरूपतो घटत्वप्रकारकं कदाचिच्च जातिमानिति जातित्वेन घटत्वादिप्रकारकं ज्ञानं जायते इत्यनुभवसाक्षिकं तन्निर्वाहाय घटत्वांशे अन्याप्रकारकघटत्वप्रकारकबुद्धौ तादृशघटत्वज्ञानत्वेन घटत्वांशे जातित्वप्रकारकघटत्वविशिष्टबुद्धौ च तादृशघटत्वज्ञानत्वेन हेतुत्वस्यावश्यकत्वादिति भावः ।

२। वैशिष्ट्यानवगाहि—वैशिष्ट्यसांसर्गिकविषयताशून्यमित्यर्थः। वैशिष्ट्यसांसर्गिकविषयतानिरासेनैव घटघटत्वयोर्विशेष्यता प्रकारताशून्यत्वं लब्धं, तयोर्वैशिष्टसांसर्गिकविषयतानियतत्वात्। नचैवं निर्विकल्पकस्य निर्विषयतापत्तिः, प्रकारता विशेष्यता सांसर्गिकविषयतानामेव तत्रासत्त्वादिति वाच्यं प्रकारतादिभिन्नायास्तुरीयविषयताया एव तत्र स्वीकारादित्यवधेयम्।

३। तदेव—तादृशविषयतात्रयशून्यमेव। निर्विकल्पकं—निर्विकल्पकस्वरूपं, लक्षणन्तु प्रकारताशून्यत्वादिकं प्रत्येकमेवेति ध्येयम।

४। तस्यानुव्यवसायो न भवतीत्याशयः।

५। निर्विकल्पके मूलोक्तमतीन्द्रियत्वं साधयति तथाहीत्यादिना। ज्ञानस्य प्रत्यक्षं वैशिष्ट्यानवगाहि न भवतीत्यन्वयः।

* यद्यपि श्रावणादौ महत्त्वस्य हेतुत्वे प्रयोजनाभावः, तथापि द्रव्यसमवेतप्रत्यक्षत्वादेस्तज्जन्यतावच्छेदकस्य श्रावणादिसाधारण्यात् श्रावणान्यत्वप्रवेशे गौरवात् प्रयोजनाभावाच्च षड्विध इत्युक्तं, तथाच षड्विध इत्यस्य षड्विधसाधारणप्रत्यक्षत्वावच्छिन्न इत्येवार्थो न तु श्रावणत्वाद्यवच्छिन्न इति तदर्थ इति भावः।

प्रकारीभूय भासते ज्ञाने घटस्तत्र घटत्वं, यः प्रकारः स एव विशेषणमित्युच्यते। विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते। विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम्। निर्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं न सम्भवति (६)। घटत्वाद्यप्रकारकञ्च घटादिविशिष्टज्ञानं न सम्भवति जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य (७) किञ्चिद्धर्म्मप्रकारकत्वनियमात् ॥

महत्त्वमिति द्रव्यप्रत्यक्षे महत्त्वं समवायसम्बन्धेन कारणं, द्रव्यसमवेतानां जातिगुणकर्म्मणां प्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन कारणम्। द्रव्यसमवेतसमवेतानां गुणत्वकर्म्मत्वरूपत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणमिति। इन्द्रियमिति, अत्रापि षड्विध इति अनुषज्यते। इन्द्रियत्वन्तु न जातिः। पृथिवीत्वादिना साङ्कर्य्यप्रसङ्गात्। किन्तु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम्। आत्मादिवारणाय सत्यन्तम् (८) उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वात्

६। ननु विशेष्ये विशेषणमिति रीत्यैव निर्व्विकल्पकानुव्यवसायः कथं न स्यादिति चेन्न रक्तः पटो घटो द्रव्यमिति समूहालम्बनानन्तरं रक्तं घट जानामीति प्रतीत्यापत्त्या विशिष्ट-वैशिष्ट्य-विषयताशून्यज्ञानानुव्यवसायानभ्युपगमात्।

७। जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य—तादृशपदार्थप्रकारकज्ञानस्य, किञ्चिद्धर्म्मप्रकारकत्वनियमात्—जात्यखण्डोपाध्यतिरिक्तपदार्थवृत्तिप्रकारतायाः किञ्चिद्धर्म्मावच्छिन्नत्वनियमादित्यर्थः। अथैवमपि निर्व्विकल्पकस्य घटत्वरूपविषयोपरागेण प्रत्यक्षं दुर्व्वारमेव जातीतरस्यैव स्वरूपतः प्रकारत्वानभ्युपगमेन तस्य ज्ञाने विषयतया स्वरूपत एव प्रकारत्वसम्भवादिति चेन्न समवायेनैव जातेः स्वरूपतः प्रकारत्वाभ्युपगमात्, अन्यथा, कालो घटो ज्ञानमित्यादिप्रत्ययापत्तेः तादृशप्रतीतेरनुभवविरुद्धत्वादित्यवधेयम्।

८। सत्यन्तदाने च शब्दादितरे ये उद्भूतविशेषगुणाः सुखादयस्तदाश्रयत्वस्यैवात्मनि सत्त्वान्नातिव्याप्तिः। आत्मादिपदेन चर्म्ममनःसंयोगस्य ज्ञानकारणत्वपक्षे तत्संग्रहः। अतएव सुषुप्तमात्माभिन्नत्वमेव कथं न निवेशितमित्यपि परास्तं, तथा सति तन्मते चात्मभिन्नं चर्म्मेष्वेवाति प्रसङ्गादित्यवधेयम्।

शब्देतरेति (९)। विशेषगुणस्य रूपादेश्चक्षुषि सत्त्वात् उद्भूतेति। उद्भूतत्वं न जातिः (१०) शुक्लत्वादिना साङ्कर्य्यात्। न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्, उद्भूतरूपत्वादिना चाक्षुषादौ जनकतानुपपत्तेः (११)। किन्तु शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना तदभावकूटश्चोद्भूतत्वम् (१२)। तच्च संयोगादावप्यस्ति। तथा च शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादेरस्त्यतो विशेषेति। कालादिवारणाय विशेष्यदलम्। इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वात् इन्द्रियावयववारणाय (१३), नवीनमते दलादौ रूपाभाव(१४)प्रत्यक्षे सन्निकर्षघटकतया (१५) कारणीभूतचक्षुःसंयोगाद्याश्रयस्य कालादेर्वारणाय मनःपदं। ज्ञानकरणमित्यपि

---

९। नवीनमते तु शब्देतरेत्यत्र शब्दपदं ज्ञानेन्द्रियाकृतीनामप्युपलक्षकं, अन्यथा ईश्वरस्यैव तैः श्रोत्रेन्द्रियत्वोपगमेन श्रोत्रे अव्याप्ति-प्रसङ्गात्।

१०। विशेषपदस्य प्रयोजनं वक्तुं भूमिकामाचरति उद्भूतत्वं न जातिरिति, तथाहि—उद्भूतत्वस्य प्रत्यक्षजनकतावच्छेदकजातिरूपत्वे तादृशजातेः संयोगादिसामान्यगुणे कल्पकाभावेन उद्भूतगुणशून्यत्वोक्तावपि चक्षुरादावव्याप्तेरप्रसक्तेरनुद्भूताभावकूटस्य तत्त्व एव संयोगादावनुद्भूतत्वजातौ मानाभावेन तदादायाव्याप्तिदानसम्भवाद्भूमिकेयं न निरर्थिकेत्यवधेयम्।

११। एकैकस्य कारणतावच्छेदकत्वे व्यभिचारात् कूटस्यैकवावृत्तितया कारणतानवच्छेदकत्वादिति भावः।

१२। तथाच तादृशकूटस्य कारणतावच्छेदकत्वमिति नोक्तजनकतानुपपत्तिरूपदोष इत्याशयः।

१३। मनःपदमिति योजना। इन्द्रियावयवार्थावयवयोः संयोगस्यापि प्राचां मते ज्ञानकारणतया तमादायेन्द्रियावयवेऽतिव्याप्तिवारणाय मनःपदमिति भावः।

१४। समवायेन घटाद्यभावादीनां काले सत्त्वेऽपि न तत्प्रत्यक्षं सम्भवति कालस्यायोग्यत्वेन "यदि काले घटः स्यात्तदा घटवत्तया उपलभ्येत" इत्यापादयितुमशक्यत्वात्। "काले यदि रूपं स्यात्तदा रूपवत्तया उपलभ्येत" इत्यापत्तिस्तु सम्भवति नीरूपत्वे नैव कालस्यायोग्यतायाः सम्पादनीयतया रूपसत्त्वे तदनिर्वाहादित्यतो रूपाभावपर्यन्तानुधावनमित्यवधेयम।

१५। द्रव्यवत्ताभावप्रत्यक्षे चक्षुःसंयुक्तविशेषणतया व्यापारत्वेन तद्घटकतया चक्षुःसंयोगस्य कारणत्वमवगन्तव्यम्।

**विषयेन्द्रियसम्बन्धो व्यापार: सोऽपि षड्विध:।**
**द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायत:॥ ५९॥**

तद्वारणाय (१६)। करणमिति असाधारणं कारणं करणम्, असाधारणत्वं व्यापारवत्त्वम्॥ ५८॥

विषयेन्द्रियसम्बन्धो इति, व्यापार: (१) सन्निकर्ष:। षड्विधं सन्निकर्षमुदाहरणद्वारा दर्शयति द्रव्यग्रह इति। द्रव्यप्रत्यक्ष(२)मिन्द्रियसंयोगजन्यम्। द्रव्यसमवेतप्रत्यक्षम् इन्द्रियसंयुक्तसमवायजन्यम्। एवमग्रे-

---

१६। तद्वारणाय—कालादेरिन्द्रियत्ववारणायेत्यर्थ:। यद्यपि ज्ञानकारणत्वोपादानेऽपि कालविषया कालमन:संयोगस्यापि ज्ञानकारणतया तद्दोषं तादवस्थ्यं समवायेन कारणत्वविवक्षणे तु क्वापि कार्ये कालमन:संयोगस्य समवायेन कारणत्वाभावात् ज्ञानपदमनर्थकं तथापि समवायेन कारणतालाभायैव ज्ञानपदं। अथवा दैशिकपरत्वादिकारणदिङ्मन:संयोगमादाय दिश्यतिव्याप्तिवारणाय तत्पदमिति ध्येयं।

१। ननु विषयेन्द्रियसम्बन्धो व्यापार इति मूलमसङ्गतं शब्दश्रोत्रसम्बन्धस्य समवायस्य नित्यतया तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वस्यासम्भवादतो व्यापारपदं सन्निकर्षार्थकतया विवृणोति व्यापार:सन्निकर्ष इति। वस्तुतस्तु तत्र समवायोऽपि व्यापार एव कथमन्यथा शब्दप्रत्यक्षे श्रोत्रेन्द्रियस्य करणत्वं व्यापारवत् कारणस्यैव करणत्वात्, किन्तु व्यापारलक्षणविशिष्टं तज्जन्यत्वं तदभिन्नसत्ताकत्वमेव शब्दप्रतियोगिकत्वविशिष्टसमवायस्यैव प्रत्यक्षजनकतया तादृशस्याकाशात्मकश्रोत्रसत्त्वाधीनसत्ताकत्वान्न व्यापारत्वविरोध:। अस्तु वा इन्द्रियस्य करणोपपत्तये शब्दादेर्विषयस्यैव व्यापारत्वं प्रत्यक्षे विषयस्य कारणत्वात् शब्दादेर्विषयस्याकाशादिजन्यत्वात् सुखादेरप्यात्ममन:संयोगजन्यत्वेन मनोजन्यत्वानपायादिति विभावनीयम्।

२। ननु समवायेन द्रव्यप्रत्यक्षं इन्द्रियसंयोगस्य न कारणत्वसम्भव: तस्य विषयनिष्ठस्यात्मन्यसम्भवादिति विषयतैव कार्य्यतावच्छेदकसम्बन्धो वाच्यस्तया च द्रव्यविषकप्रत्यक्षस्य घट इत्याद्याकारस्य विषयतया घटत्वादावप्युत्पत्त्या व्यभिचार इति द्रव्यप्रत्यक्षमिन्द्रियसन्निकर्षजन्यमित्युक्तिरसङ्गतेति चेन्न द्रव्यप्रत्यक्षमित्यस्य द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षमित्यर्थकत्वात्। तथाच प्रत्यक्षत्वमेवेन्द्रियसंयोगजन्यतावच्छेदकं द्रव्यवृत्तिलौकिकविषयताया: कार्य्यतावच्छेदकसम्बन्धत्वादेव घटत्वादौ न व्यभिचार इति भाव:। एवं संयुक्तसमवायादावप्यूहनीयं।

**द्रव्येषु समवेतानां तथा तत्समवायतः ।**
**तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥**

ऽपि (३)। वस्तुतस्तु (४) द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणम्। द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः, द्रव्यसमवेतसमवेतचाक्षुषं प्रति संयुक्तसमवेतसमवायः। एवमन्यत्रापि विशिष्यैव कार्य्यकारणभावः। परन्तु परमाणुनीले नीलत्वं पृथिवीपरमाणौ पृथिवीत्वञ्च चक्षुषा कथं न गृह्यते तत्र परम्परया (५) उद्भूतरूपसम्बन्धस्य महत्त्वसम्बन्धस्य च विद्यमानत्वात्। तथाहि—नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्त्तते। तथा च महत्त्वसम्बन्धो घटनीलमादाय वर्त्तते, उद्भूतरूपसम्बन्धस्तूभयमादायैव वर्त्तते। एवं पृथिवीत्वेऽपि घटादिकमादाय महत्त्वसम्बन्धो बोध्यः। एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात्। तस्मादुद्भूत(६)रूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतचाक्षुषप्रत्यक्षे तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे कारणत्वं वाच्यम्। इत्थञ्च परमाणुनीलादौ न नीलत्वादिग्रहः, परमाणुचक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात्। एवं वाय्वादौ न सत्त्वादिचाक्षुषं,

---

३। द्रव्यसमवेतसमवेतवृत्ति-लौकिकविषयतासम्बन्धेन प्रत्यक्षमिन्द्रियसंयुक्त-समवेतसमवायजन्यमित्यर्थः।

४। ननु द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षे इन्द्रियसन्निकर्षत्वेन हेतुत्वे त्वक्प्रभासंयोगाच्चाक्षुषापत्तिः एवमन्धकारे घटचक्षुःसंयोगात् स्पार्शनापत्तिश्चेत्यत आह वस्तुतस्त्विति।

५। परम्परया—स्वाश्रयसमवेतसमवेतत्वादिसम्बन्धेन।

६। अत्र चक्षुर्घटितचक्षुःसन्निकर्षाच्चक्षुरादीनां प्रत्यक्षवारणाय उद्भूतेति। उद्भूतरूपावच्छिन्नेति महत्त्वावच्छिन्नेति च चक्षुःसंयुक्तपदार्थैकदेशसंयोगेनान्वेति। तथाच महत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य त्रसरेणावभावात्तच्चाक्षुषाद्यनुपपत्तिरिति संयोगस्य प्रत्यासत्तित्वमावश्यकं। एवं महत्त्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्य त्रसरेणुरूपेऽभावात् चाक्षुषानुपपत्त्या संयुक्तसमवायस्यापि प्रत्यासत्तित्वमावश्यकमित्यवधेयम्।

**तद्वृत्तीनां समवेतसमवायेन तु ग्रहः।**
**प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६१ ॥**

तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात्। एवं यत्र घटस्य पृष्ठावच्छेदेनालोकसंयोगः चक्षुःसंयोगस्त्वग्रावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम्। एवं (७) द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणं, द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः कारणम्। अत्रापि महत्त्वावच्छिन्नत्वम् उद्भूतस्पर्शावच्छिन्नत्वञ्च पूर्ववदेव (८) बोध्यम्। एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः। गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणम्। एवं रसप्रत्यक्षे रसनासंयुक्तसमवायः। रससमवेतस्य रासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम्। शब्दप्रत्यक्षे श्रोत्रावच्छिन्न(९)समवायः। शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम्। अत्र सर्वत्र प्रत्यक्षं लौकिकं बोध्यम्। वक्ष्यमाणमलौकिकं प्रत्यक्षम् इन्द्रियसंयोगादिकं विनापि भवति। एवमात्मनः प्रत्यक्षे मनःसंयोगः। आत्मसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः। आत्मसमवेतसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणम्। अभावप्रत्यक्षे समवायप्रत्यक्षे च इन्द्रियसम्बद्धविशेषणता हेतुः। वैशेषिकमते तु न समवायः प्रत्यक्षः (१०)। अत्र यद्यपि विशेषणता नानाविधा, तथाहि—

---

७। स्पार्शनप्रत्यक्षे त्वक्सन्निकर्षस्य कारणत्वं प्रपञ्चयति एवमित्यादिना।

८। परमाणुघटितत्वक्सन्निकर्षेण स्पर्शत्वस्पार्शनवारणाय महत्त्वावच्छिन्नत्वं, प्रभाघटितसन्निकर्षेण स्पर्शत्वस्पार्शनवारणाय उद्भूतस्पर्शत्वादिविशेषणं बोध्यमित्यर्थः।

९। सकलपुरुषाणां सकलशब्दप्रत्यक्षापत्तिवारणाय श्रोत्रावच्छिन्नेति समवायविशेषणम्।

१०। सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात् समवायस्य चैकतया एकदा सन्निहितसकलाश्रयव्यक्तीनां ज्ञानासम्भवादिति भावः।

विशेषणतया तद्वदभावानां ग्रहो भवेत् ।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ ६२ ॥

भूतलादौ घटाभावः संयुक्तविशेषणतया गृह्यते, संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया, संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया, शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया, कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया, एवं कत्वावच्छिन्नाभावे खत्वाभावादिकं विशेषणविशेषणतया, एवं घटाभावादौ पटाद्यभावः संयुक्तविशेषणविशेषणतया । एवमन्यदप्यूह्यम् । तथापि विशेषणतात्वरूपेणैकैव सा गण्यते अन्यथा षोढ़ा सन्निकर्ष इति प्राचां प्रवादो व्याहन्येतेति ।

यदि स्यादुपलभ्येत इति, अभावप्रत्यक्षे योग्यानुपलब्धिः कारणम् । तथाहि—भूतलादौ घटादिज्ञाने जाते घटाभावादिकं न ज्ञायते तेनाभावोपलम्भे (११) प्रतियोग्युपलम्भाभावः (१२) कारणम्, तत्र (१३) योग्यताप्यपेक्षिता (१४) । सा च प्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वरूपा । तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुः । तथाहि—यत्रालोकसंयोगादिकं वर्त्तते, तत्र यद्यत्र घटः स्यात् तर्हि उपलभ्येत इत्यापादयितुं शक्यते, तत्र घटाभावादिप्रत्यक्षं भवति । अन्धकारे तु नापादयितुं शक्यते, तेन घटाभावा-

---

११ । तदिन्द्रियजन्यतत्सम्बन्धावच्छिन्नतदभावलौकिकप्रत्यक्षे ।

१२ । तदिन्द्रियजन्यानाहार्य्यतत्संसर्गकतत्प्रकारकोपलम्भाभाव इत्यर्थः । इन्द्रियान्तरजन्ये आनुमानिके च तदुपलम्भे सत्यपि तदभावप्रत्यक्षात्तदिन्द्रियजन्येति । अभावप्रत्यक्षहेतुप्रतियोग्यारोपसत्त्वेऽप्यभावप्रत्यक्षादनाहार्य्येति ।

१३ । अत्र—प्रतियोग्युपलम्भाभावे ।

१४ । तेन जलपरमाण्वादौ पृथिवीत्वाभावादेर्न प्रत्यक्षमिति भावः ।

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्त्तितः।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥**

द्वैरन्धकारे न चाक्षुषप्रत्यक्षं,(१५) स्पार्शनप्रत्यक्षन्तु भवत्येव। आलोक-संयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात्। गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षः, तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुम-शक्यत्वात्। वायावुद्भूतरूपाभावः, पाषाणे सौरभाभावः, गुडे तिक्ताभावः, श्रोत्रे शब्दाभावः, आत्मनि सुखाभावः, एवमादय-स्तत्तदिन्द्रियैर्गृह्यन्ते, तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात्। संसर्गा-भावप्रत्यक्षे (१६) प्रतियोगिनो योग्यता अन्योऽन्याभावप्रत्यक्षे त्वधि-करणयोग्यताऽपेक्षिता (१७)। अतस्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यत एव ॥ ५८ ॥ ६० ॥ ६१ ॥ ६२ ॥

प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधम्। तत्र लौकिकप्रत्यक्षे षोढ़ाः सन्निकर्षा वर्णिताः। अलौकिकसन्निकर्षानिदानीमुच्यते—अलौकिक इति। व्यापारः (१८) सन्निकर्षः। सामान्यलक्षण इति।

---

१५। अनुपलम्भे विद्यमानेऽपि निरुक्तयोग्यताविशिष्टस्य तस्य तत्राभावादिति भावः।

१६। लाघवादन्यथा योग्यतां निर्व्वक्ति प्रतियोगिनो योग्यतेति। योग्यमात्रप्रतियोगिकत्वे सति योग्यधर्म्ममात्रावच्छिन्नप्रतियोगिताकत्वमित्यर्थः। नातस्तस्याः संसर्गाभावासत्त्वं। अत्र द्रव्यसामान्याभावप्रत्यक्षवारणाय प्रथमं मात्रपदं। गुरुत्ववद्घटात्यन्ताभावप्रत्यक्षवारणाय विशेष्यदलं। रूपगुरुत्वान्यतरावच्छिन्नाभावप्रत्यक्षवारणाय विशेष्यदले मात्रपदम्।

१७। अधिकरणे योग्यतेत्यस्य योग्याधिकरणवृत्तित्वमित्यर्थः, नातस्तस्या अन्योऽन्याभावा-सत्त्वमित्यवधेयम्। इदञ्चाभावग्राहकयोग्यसन्निकर्षप्रदर्शनार्थं तेन स्तम्भ इव वाय्वादौ न पिशा-चान्योन्याभावप्रत्यक्षमिति भावः।

१८। धूमत्वादिसामान्यलक्षणाया इन्द्रियजन्यत्वाभावाद्व्यापारत्वकथनमसङ्गत-मत आह—व्यापारः सन्निकर्ष इति। यद्यपि धूमत्वादेरिन्द्रियप्रतियोगिकत्वाभावात् सन्निकर्षत्वमप्ययुक्तं, तथापि संयोगस्येन्द्रियप्रतियोगिकत्वात्तद्घटितस्येन्द्रियसंयुक्तविशेष्यकज्ञानप्रकारीभूतधूमत्वादेः प्रत्यासत्तितानिर्व्वाहः। यद्येवमपि ज्ञानलक्षणयोगजधर्म्मयोरिन्द्रियप्रतियोगिकत्वानुपपत्तिस्त-दवस्थैव तथापि कालेन स्वाश्रयत्वविशिष्टयोस्तयोः सन्निकर्षत्वाभ्युपगमादाश्रयत्वस्य सप्रतियोगिकत्व-

सामान्यं लक्षणं यस्येत्यर्थः। तत्र लक्षणपदेन यदि स्वरूपमुच्यते, तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते। तच्चे(१९)न्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं बोध्यम्। तथाहि—यत्र इन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं जातम्। तत्र ज्ञाने धूमत्वं प्रकारः। धूमत्वेन सन्निकर्षेण धूम इत्येवं रूपं सकलधूमविषयकं ज्ञानं जायते। अत्र यदि इन्द्रियसम्बद्धप्रकारीभूतमित्येवोच्यते तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात्। तत्र धूमत्वेन सह इन्द्रियसम्बन्धाभावात्। तन्मते तु इन्द्रियसम्बद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानं तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः। इन्द्रियसम्बन्धो (२०) लौकिको ग्राह्यः। इदञ्च (२१) बहिरिन्द्रियस्थले। मानसस्थले तु ज्ञानप्रकारीभूतसामान्यं प्रत्यासत्तिः॥ ६३ ॥

---

मित्येन्द्रियप्रतियोगिकस्य ज्ञानस्य विषयतया विषयवृत्तितया धर्मस्य स्वजन्यज्ञानविषयतावच्छेदकत्वोपलक्षितधर्मसम्बन्धेन विषयवृत्तितया च तदनुयोगिकत्वस्याप्युपपत्त्या नानुपपत्तिः। नन्वेवं व्यापारविरहेणालौकिकप्रत्यक्षे इन्द्रियस्य करणत्वं कथमुपपादनीयमिति चेत् संयोगस्यैव व्यापारत्वोपगमेनेति गृहाण। कथमन्यथा स्मरणाद्यात्मकज्ञानलक्षणप्रत्यासत्तेः करणीभूतेन्द्रियाजन्यत्वात्तस्या व्यापारत्वासम्भवेन इन्द्रियस्य करणत्वमिति विभावनीयम्।

१९। तच्च—सामान्यस्वरूपञ्च।

२०। ननु यत्र चक्षुःसन्निकर्षेण धूम इति ज्ञानं जनितं तत्र चक्षुःसंयोगविगमेऽपि तादृशज्ञानमादायेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारस्य धूमत्वादेर्धूमान्तरे सत्त्वाद्धूमान्तराणां सामान्यलक्षणया ज्ञानापत्तिः। न च तदा धूमो नेन्द्रियसम्बद्धः ज्ञानलक्षणासन्निकर्षस्य धूमे सत्त्वात्। न च तदैकलक्षणे समान्यलक्षणाजन्यज्ञानस्वीकारे क्षतिविरह इति वाच्यं तन्मूलकज्ञानधारापत्तेर्दुर्वारत्वादित्यत आह लौकिको ग्राह्य इति।

२१। नन्विन्द्रियसम्बद्धेत्यत्र लौकिकः सम्बद्धः ज्ञानप्रकारेत्यत्र च ज्ञानस्य तदिन्द्रियजन्यत्वञ्चेद्विवक्षितं तदाणुत्वेन यत्किञ्चिदणूपस्थितावणुत्वसामान्यलक्षणया सकलाणुगोचरो मानसो बोधो न स्यात्तदाणौ मनसो लौकिकसम्बन्धस्य ज्ञाने मनोजन्यत्वस्य चाभावादत आह इदञ्चेति। तथाच बहिरिन्द्रियेण सामान्यलक्षणया ज्ञाने जननीये तद्विवक्षितं न तु मानससामान्यलक्षणाजन्यज्ञाने इति नोक्तदोष इति भावः।

**आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते।**
**तदिन्द्रियजतद्धर्म्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥**

परन्तु समानानां भाव: सामान्यम्। तच्च क्वचिन्नित्यं धूमत्वादि, क्वचिच्चानित्यं घटादि। यत्रैको घट: संयोगेन भूतले समवायेन कपाले ज्ञातस्तदनन्तरं सर्वेषामेव तद्घटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति, तत्रेदं (२३) बोध्यम्। परन्तु सामान्यं येन सम्बन्धेन ज्ञायते तेन सम्बन्धेन (२४) अधिकरणानां प्रत्यासत्ति:, किन्तु (२५) यत्र तद्घटनाशानन्तरं तद्घटवत: स्मरणं जातं, तत्र सामान्यलक्षणया सर्वेषां तद्घटवतां भानं न स्यात्। सामान्यस्य तदानीमभावात्।

किञ्च इन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं यत्र जातं तत्र परदिने इन्द्रियसम्बन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात् तादृशज्ञानं कुतो न (२६) जायते। तस्मात् सामान्यज्ञानं प्रत्यासत्तिर्न तु सामान्यमित्याह—आसत्तिरित्यादि। आसत्ति: प्रत्यासत्तिरित्यर्थ:। तथा च सामान्यलक्षणेत्यत्र लक्षणशब्दस्य विषयोऽर्थ:। तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो

२२। सामान्यपदस्य यौगिकत्वाङ्गीकारेण अनित्यस्यापि सामान्यत्वं व्यवस्थापयन् आसत्तिराश्रयाणान्त्वित्यादिमूलमवतारयितुं भूमिकां रचयति परन्त्वित्यादिना।

२३। इदं—अनित्यसामान्यस्य प्रत्यासत्तित्वमित्यर्थ:।

२३। अन्यथा समवायेन ज्ञानप्रकारीभूतघटत्वादिसामान्यप्रत्यासत्त्या कालादिज्ञानापत्तेरिति भाव:।

२५। किन्त्विति—एवञ्चेत्यर्थ:।

२६। इदमापातत: सामान्यलक्षणाघटकीभूतलौकिकसन्निकर्षस्य विशेषणत्वविवक्षणेन कालान्तरीयसंयोगमादायोक्तातिप्रसङ्गस्याभावादिति तस्मात् पूर्व्वोक्तदोष एवात्र कल्प्ये बोध्य:। एवं ज्ञायमानस्य प्रत्यासत्तित्वे चैत्रीयज्ञानविषयसामान्यप्रत्यासत्त्या मैत्रस्य तदाश्रयप्रत्यक्षापत्तिभिया तत्पुरुषीयत्वनिवेशस्यावश्यकतया गौरवं, ज्ञानस्य प्रत्यासत्तित्वे तु पुरुषनिष्ठप्रत्यासत्त्या हेतुत्वाय तत्पुरुषीयत्वानिवेश इति लाघवमित्यपि बोध्यम्।

लभ्यते (२७)। ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्त्तते तत्र सकलघटादीनां चाक्षुषादिप्रत्यक्षं स्या-दत आह—तदिन्द्रियज इति। अस्यार्थः,—यदा बहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किञ्चिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानसामग्री अपेक्षिता। सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकम्। तेनान्धकारादौ चक्षुरादिना तादृशज्ञानं न जायते(२८) ॥६४॥

ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणापि ज्ञानरूपा तदा तयोर्भेदो न स्या-दत आह—विषयीति। सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति। ज्ञानलक्षणा प्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति (२९)। अत्रायमर्थः। प्रत्यक्षे सन्निकर्षं विना भानं (३०) न सम्भवति। तथा च सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनाञ्च भानं कथं भवेत्, तदर्थं सामान्यलक्षणा स्वीक्रियते। न च सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यं प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वात् अन्यधूमस्य चानुपस्थितत्वाद्धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः। मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसन्देहः

---

२७। एतन्मते च निर्व्विकल्पकसाधारणं स्मरणसाधारणञ्च सामान्यज्ञानमात्रं प्रत्यासत्तिः। तथाच घटत्वप्रकारकप्रत्यक्षत्वं कार्य्यतावच्छेदकं घटत्वज्ञानत्वञ्च कारणतावच्छेदकं स्वप्रकारीभूतघटत्वाश्रयत्वञ्च कार्य्यतावच्छेदकः सम्बन्धः। स्वविषयघटत्वाश्रयत्वं कारणतावच्छेदकः सम्बन्धः। चक्षुःसंयोगादिशून्यकाले पूर्व्वोक्तातिप्रसङ्गस्य वक्ष्यमाणतदिन्द्रियजेत्यादिनैव वारणादिति ध्येयम्।

२८। अयमाशयः—यदैव घट इति चाक्षुषमुत्पद्यते तदैव सन्निकृष्टघटांशे लौकिकमन्यघटांशेऽलौकिकमित्यभ्युपगमात् सामान्यलक्षणाजन्यघटत्वप्रकारकचाक्षुषत्वस्य व्यापकं घटत्वप्रकारकलौकिकचाक्षुषत्वमिति फलितं। तथाच चक्षुःसन्निकर्षादिशून्यकाले व्यापकधर्म्मावच्छिन्नजनकसामग्र्याः सहकारिण्या विरहादेव न चाक्षुषं सामान्यलक्षणयाज्ञानमिति।

२९। सामान्यलक्षणास्वीकारे बीजमाह अत्रे ति।

३०। भानं विषयता। न सम्भवतीति प्रत्यक्षविषयतायाः सन्निकर्षाश्रयत्वव्याप्यत्वादितिभावः।

**विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः।**
**योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः॥ ६५॥**

सम्भवति। न च सामान्यलक्षणास्वीकारे प्रमेयत्वेन सकलप्रमेये ज्ञाते सार्वज्ञ्यापत्तिरिति वाच्यम्। प्रमेयत्वेन सकलप्रमेयज्ञाते जातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञ्याभावात्। एवं (३१) ज्ञानलक्षणाया अस्वीकारे सुरभिचन्दनमिति ज्ञाने सौरभस्य भानं कथं स्यात् (३२)। यद्यपि सामान्यलक्षणयापि सौरभभानं सम्भवति तथापि सौरभत्वस्य (३३) भानं ज्ञानलक्षणया (३४)। एवं (३५) यत्र धूमत्वेन धूलीपटलं ज्ञातं, तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया (३६)।

---

३१। ज्ञानलक्षणास्वीकारे बीजमाह एवमित्यादिना।

३२। चन्दनखण्डस्य चाक्षुषे जायमाने सौरभस्योपस्थितावपि सौरभांशे योग्यवृत्तित्वविशिष्टचक्षुःसन्निकर्षाभावादित्यर्थः।

३३। स्वरूपतः सौरभत्वस्य भानमित्यर्थः, तेन प्रमेयत्वादिसामान्यलक्षणया प्रमेयत्वादिना तद्भानसम्भवेऽपि न क्षतिः।

३४। ज्ञानलक्षणया—ज्ञानलक्षणयैवेत्यर्थः। तदानीं सौरभत्वांशे धर्म्मान्तरस्याग्रहीततया सामान्यलक्षणया तद्भानानिर्व्वाहादिति भावः। ननु धर्म्मान्तरस्य सौरभत्वांशेऽग्रहेऽपि सौरभत्वसामान्यलक्षणयैव सौरभत्वादेर्भानमस्तु सौरभत्वप्रकारकसौरभविशेष्यकत्वस्यैव तत्कार्य्यतावच्छेदकत्वादिति चेन्न सौरभत्वादिविषयिताप्रयोजकस्य स्वविषयसौरभत्वादिमत्त्वरूपस्य सामान्यलक्षणायाः सम्बन्धस्य सौरभत्वेऽभावेन सामान्यलक्षणया तद्भानानिर्व्वाहात् सौरभत्वसामान्यलक्षणायाः कार्य्यतावच्छेदके सौरभत्वप्रकारकत्वनिवेशे प्रयोजनाभावाच्चेति ध्येयम्।

३५। यत्र ज्ञानलक्षणया स्वविषयमुख्यविशेष्यकं भानं तत्र विशेषणज्ञानकारणतया न निर्व्वाह इत्यभिप्रायेण ज्ञानलक्षणाप्रत्यासत्तेः प्रयोजनमाह एवमिति।

३६। ज्ञानलक्षणया—ज्ञानलक्षणयैवेत्यर्थः। तत्र धूमत्वज्ञानरूपसामान्यलक्षणायाः स्वविषयधूमत्वाश्रयत्वसम्बन्धेन धूलिपटलेऽभावेन सामान्यलक्षणयानुव्यवसाये धूलिपटलभानासम्भवादिति भावः।

युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः ।
व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥
अनुमायां ज्ञायमानं लिङ्गन्तु करणं न हि ।
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥

योगजो द्विविध इति। योगाभ्यासजनितो धर्म्मविशेषः श्रुतिपुराणादिप्रतिपाद्य इत्यर्थः। युक्तयुञ्जानभेदत इति। युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्म्मस्यापि द्वैविध्यमिति भावः ॥ ६५ ॥

युक्तस्य सर्वदा भानमिति। युक्तस्य तावद्योगधर्म्मसहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्व्वदैव(३७) भवितुमर्हति। द्वितीयस्य चिन्ताविशेषोऽपि सहकारीति ॥

इति श्रीविश्वनाथपञ्चानन भट्टाचार्य्यविरचितायां
सिद्धान्तमुक्तावल्यां प्रत्यक्षखण्डम् ॥

अनुमितिं व्युत्पादयति—(१) व्यापारस्त्विति। अनुमायाम् अनुमितौ व्याप्तिज्ञानं (२) करणम्। परामर्शो व्यापारः। तथा हि—

---

३७। सर्व्वदैव—ध्यानाद्यभावेऽपीत्यर्थः।

१। अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयस्मरणानुकूलसम्बन्धो निरूपणीयनिष्ठासङ्गतिः। तथाच प्रत्यक्षनिरूपणानन्तरमनुमाननिरूपणे प्रयोजकजिज्ञासा अनुमानज्ञानं मे भवत्वित्याकारिका, तज्जनकज्ञानं अनुमानज्ञानं मदिष्टसाधनमित्याकारकं, तद्विषयोऽनुमानं, तत्स्मरणानुकूलसम्बन्धः अनुमाननिष्ठकार्य्यत्वं तदेवात्र सङ्गतिः। न च "सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा। निर्व्वाहकैक्यकार्य्यैक्ये षोढासङ्गतिरिष्यते ॥" इति गणनायामनुल्लेखात् कथं कार्य्यत्वस्य सङ्गतित्वमिति वाच्यं, तत्राजहत्स्वार्थवृत्त्या कार्य्यत्वकारणत्वोभयसाधारणेन केनचिद्रूपेण हेतुतापदस्य तदुभयपरतया अनुमित्यादिग्रन्थे भट्टाचार्य्यादिभिरवधारणादित्यनुसन्धेयम्।

२। कारणे निर्द्दिष्ट एव व्यापारे जिज्ञासोदयान्मूले पश्चान्निर्द्दिष्टमपि करणं प्रथमं दर्शयति—व्याप्तिज्ञानं करणमिति। अत्र नव्याः, व्याप्तिज्ञानत्वस्य परामर्शत्वव्यापकतयानुमितिं प्रति हेतुत्वमेव नास्ति नियतपूर्व्ववर्त्तितावच्छेदकव्याप्यसत्त्वे व्यापकधर्म्मेण हेतुतायामन्यथासिद्धेः अन्यथा कपालादेर्घटं प्रति द्रव्यत्वेन हेतुतापत्तेः तस्मादनुमितिं प्रति मनस्त्वेनैव करणत्वं न तु व्याप्तिज्ञानत्वेनेत्याहुः।

**व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते।**
**व्याप्तिः * साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः ॥६८॥**

येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चात् स एव पुरुषः क्वचित् पर्वतादौ अविच्छिन्नमूलां(३) धूमलेखां पश्यति तदनन्तरं धूमो वह्निव्याप्य इत्येवं रूपं व्याप्तिस्मरणं तस्य भवति। पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं भवति स एव परामर्श इत्युच्यते। तदनन्तरं पर्वतोऽयं वह्निमानित्यनुमितिर्जायते। अत्र प्राचीनास्तु व्याप्यत्वेन ज्ञायमानं धूमादिकमनुमितिकरणमिति वदन्ति। तद्दूषयति ज्ञायमानमिति।

लिङ्गस्यानुमित्यकरणत्वे युक्तिमाह—अनागतादीति। यद्यनुमितौ लिङ्गं करणं स्यात् तदा अनागतेन विनष्टेन वा लिङ्गेन अनुमितिर्न स्यात्। अनुमितिकरणस्य लिङ्गस्य तदानीमभावात् (४) ॥ ६६ ॥ ६७ ॥

व्याप्यस्य पक्षधर्मत्वधीरिति। व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानमनुमितिजनकम्। तच्च (५) पक्षे व्याप्य इति

---

३। धूमदर्शनस्य व्याप्तिस्मरणे उद्बोधकविषयाहितत्वसम्पत्त्यर्थं यादृशविशेषणविशिष्टस्य धूमस्य सम्बन्धितया ज्ञानं तादृशधूमदर्शनस्यैव व्याप्तिस्मृत्युद्बोधकत्वमित्यभिप्रायेणाविच्छिन्नत्वमुक्तम्।

४। इदमुपलक्षणं लिङ्गस्य हेतुत्वे चैत्रीयपरामर्शविषयलिङ्गान्मैत्रस्यानुमितिप्रसङ्गः। तत्तत्पुरुषीयत्वनिवेशे तु गौरवं, अस्मन्मते सामानाधिकरण्यप्रत्यासत्त्या हेतुहेतुमद्भावनिवेशेनैवातिप्रसङ्गाभावान्न तत्पुरुषीयत्वनिवेश इति लाघवमित्यपि बोध्यम्।

५। तच्च—व्याप्यस्य पक्षेण सह वैशिष्ट्यावगाहि ज्ञानञ्च।

---

* अत्र सप्तम्यर्थोऽनिरूपितत्वं अन्वयश्चास्यासम्बन्धपदार्थवृत्तित्वाभावैकदेशवृत्तित्वे, तथाच साध्यवदन्यनिरूपितवृत्तित्वाभाववत्त्वं लक्षणार्थः पर्यवसित इति।.

ज्ञानं, पक्षो व्याप्यवानिति ज्ञानं वा। अनुमितिस्तु(६) पक्षे व्याप्य इति ज्ञानात् पक्षे साध्यम् इत्याकारिका, पक्षो व्याप्यवानिति ज्ञानात् पक्षः साध्यवानित्याकारिका। द्विविधादपि (७) परामर्शात् पक्षः साध्यवानित्येवानुमितिरित्यन्ये। ननु (८) वह्निव्याप्यधूमवान् पर्वत इति ज्ञानं विनापि यत्र पर्वतो धूमवानिति प्रत्यक्षं ततो धूमो वह्निव्याप्य इति स्मरणं तत्र ज्ञानद्वयादेवा(९)नुमितिदर्शनात् व्याप्तिविशिष्टवैशिष्ट्यावगाहि ज्ञानं सर्वत्र न कारणं। किन्तु व्याप्यतावच्छेदकप्रकारकपक्षधर्म्मताज्ञानत्वेन कारणस्यावश्यकत्वात् (१०) तत्र विशिष्टज्ञानकल्पने गौरवाच्चेति चेन्न। व्याप्यतावच्छेदकाज्ञानेऽपि (११) वह्निव्याप्यवानिति ज्ञानादनुमित्युत्पत्ते(१२)र्लाघवाच्च (१३) व्याप्तिप्रकारकपक्षधर्म्मताज्ञानत्वेनैव हेतुत्वम्। किञ्च (१४) धूमवान् पर्वत

---

६। नन्वेवं पक्षविशेष्यकपरामर्शोत्तरानुमितौ व्याप्यविशेष्यकपरामर्शस्य व्याप्यविशेष्यकपरामर्शोत्तरानुमितौ च पक्षविशेष्यकपरामर्शस्य व्यभिचार इत्यत आह—अनुमितिस्त्विति। तथाच अव्यवहितोत्तरत्वनिवेशेन कार्य्यतावच्छेदकस्य परस्परानुमितिव्यावृत्तत्वान्न व्यभिचार इति।

७। पक्षविशेष्यकत्वमेव सर्व्वत्र प्रसिद्धसाध्यकानुमितौ नियतमिति नवीनमतमाह—द्विविधादपीति। वस्तुतोऽनुभवानुरोधात् पक्षविशेष्यकपरामर्शस्यैव हेतुत्वं अत एव वह्निव्याप्यधूमवांश्चायमित्याकारकः पक्षविशेष्यक एवोपनयः सर्व्वसम्मत इति ध्येयम्।

८। मीमांसकः शङ्कते नन्विति।

९। अत्रैवकारोऽप्यर्थे, ज्ञानद्वयादपीत्यर्थः।

१०। आवश्यकत्वादिति, व्याप्यतावच्छेदकप्रकारकपक्षधर्म्मताज्ञानत्वस्योभयवादिसिद्धनियतपूर्व्ववर्त्तितावच्छेदकत्वादित्यर्थः।

११। अयमालोको धूमो वेति सन्देहदशायां व्याप्यतावच्छेदकप्रकारकनिर्णयाभावेऽपीत्यर्थः।

१२। तथाच व्याप्यतावच्छेदकप्रकारकपक्षधर्म्मताज्ञानस्य तत्र व्यभिचारान्न तेन रूपेण हेतुत्वमिति भावः।

१३। ननु तत्र फलबलात् व्याप्यतावच्छेदकप्रकारकं ज्ञानं कल्पनीयमतो न व्यभिचार इत्यत आह लाघवाच्चेति। व्याप्यतावच्छेदकप्रकारकत्वापेक्षया व्याप्तिप्रकारकत्वस्य लघुत्वादित्यर्थः।

इति ज्ञानादनुमित्यापत्तिः, व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकपक्षधर्म्मताज्ञानस्य सत्त्वात्। न च तदानीं गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्म्मताज्ञानस्य हेतुत्वमिति वाच्यम्, चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्म्मताज्ञानादनुमितिः स्यादिति। यदि तु तत्पुरुषीयगृह्यमाण--व्याप्यतावच्छेदकप्रकारकतत्पुरुषीयपक्षधर्म्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरित्युच्यते तदा, अनन्तकार्य्यकारणभावः। मन्मते तु समवायसम्बन्धेन व्याप्तिप्रकारकपक्षधर्म्मताज्ञानं समवायसम्बन्धेनानुमितिं जनयतीति नानन्तकार्य्यकारणभावः। यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्म्मताज्ञानञ्च स्वतन्त्रं कारणमित्युच्यते तदा कार्य्यकारणभावद्वयं। वह्निव्याप्यो (१५) धूम आलोकवान् पर्वत इति ज्ञानादप्यनुमित्यापत्तिः स्यादिति (१६)। इत्यञ्च (१७) यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयम्। फलमुखगौरवस्यादोषत्वात्।

व्याप्यो नाम (१८) व्याप्त्याश्रयः, तत्र (१९) का व्याप्तिरित्यत

---

१४। नन्वस्तु तत्रावच्छेदकलाघवं तथापि पूर्व्वोक्तकल्पनालाघवमेव मीमांसकानां व्याप्यतावच्छेदकप्रकारकपक्षधर्म्मताज्ञानसाधकयुक्तिर्भविष्यतीत्यत आह किञ्चेति।

१५। ननु व्याप्तिप्रकारकपक्षधर्म्मताज्ञानत्वेन पक्षधर्म्मताविषयकव्याप्तिप्रकारकज्ञानत्वेन वा हेतुतेत्यत्र विनिगमनाविरहेण हेतुताद्वयं तत्रापीत्यत आह वह्निव्याप्यो धूम इत्यादि।

१६। न्यायनये तु व्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षविशेष्यताशालिज्ञानत्वेन-हेतुत्वस्य विवक्षितत्वान्न तादृशज्ञानान्न वा धूमो वह्निव्याप्यो धूमवान् पर्व्वत इति ज्ञानादनुमित्यापत्तिः, तत्र व्याप्तिप्रकारतानिरूपितधूमविशेष्यतायाः पर्व्वतविशेष्यतानिरूपितप्रकारतानात्मकत्वादिति भावः।

१७। ज्ञानद्वयस्थले न्यायमतेऽपि विशिष्टज्ञानस्य कल्पनीयतया गौरवं फलमुखत्वेन निराकरोति इत्यञ्चेत्यादिना।

१८। व्याप्यपक्षोभयावगाहिज्ञानस्य व्याप्तिज्ञानसाध्यत्वेनोपोद्घातसङ्गत्या परामर्शनिरूपणानन्तरव्याप्तिनिरूपणमिति सूचयितुमाह—व्याप्यो नामेति।

१९। घटकत्वं सप्तम्यर्थः, तथाच व्याप्यघटकीभूतव्याप्तिः केत्यर्थः पर्य्यवसितः।

**अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥**

आह—व्याप्तिरिति। वह्निमान् धूमादित्यादौ साध्यो वह्निः, साध्यवान् महानसादिः, तदन्यो जलह्रदादिः, तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिंस्तप्तायःपिण्डादौ वह्निसत्त्वान्नातिव्याप्तिः। अत्र येन सम्बन्धेन साध्यं तेनैव सम्बन्धेन साध्यवान् बोध्यः। अन्यथा समवायसम्बन्धेन वह्निमान् वह्नेरवयवस्तदन्यो महानसादिः, तत्र धूमस्य विद्यमानत्वादव्याप्तिप्रसङ्गात् (२०)। साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान् बोध्यः। तेन यत्किञ्चिद्वह्निमतो महानसादेर्भिन्ने पर्वतादौ धूमस्य सत्त्वेऽपि न क्षतिः। येन सम्बन्धेन हेतुता तेनैव सम्बन्धेन साध्यवदन्यवृत्तित्वं बोध्यम्, तेन साध्यवदन्यस्मिन् धूमावयवे धूमस्य समवायसम्बन्धेन सत्त्वेऽपि न क्षतिः। साध्यवदन्यावृत्तित्वञ्च साध्यवदन्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः। तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यह्रदादिवृत्तित्वाभावेऽपि नातिव्याप्तिः। अत्र यद्यपि द्रव्यं गुणकर्म्मान्यत्वविशिष्टसत्त्वादित्यादौ विशिष्टसत्तायाः सत्तायाश्चैक्यात् साध्यवदन्यस्मिन् गुणादाववृत्तित्वं नास्ति तथापि हेतुतावच्छेदकरूपेणावृत्तित्वं वाच्यम्। हेतुतावच्छेदकं तादृशवृत्तितावच्छेदकमिति फलितार्थः (२१) ॥ ६८ ॥

---

२०। इदमव्याप्त्यभिधानं येन केनचित् सम्बन्धेन साध्यत्वविवक्षणाभिप्रायेण सम्बन्धसामान्येन साध्यवत्त्वविवक्षणे तु धूमवान् वह्नेरित्यादौ धूमशून्यायोगोलकादेरपि सम्बन्धसामान्यान्तर्गतकालिकादिना धूमवत्त्वेन धूमासमानकालीनपदार्थस्यैव धूमवदन्यत्वात्तत्र च हेतोरवृत्तेरतिव्याप्तिरेव बोध्या।

२१। तथाच साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नावच्छेदकताकभेदवन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितानवच्छेदकहेतुतावच्छेदकवत्त्वमिति लक्षणार्थः पर्य्यवसित इति संक्षेपः।

ननु (२२) केवलान्वयिनि ज्ञेयत्वादौ साध्ये साध्यवदन्यस्याप्रसिद्धत्वादव्याप्तिः। किञ्च (२३) सत्तावान् जातेरित्यादौ (२४) साध्यवदन्यस्मिन् सामान्यादौ हेतुतावच्छेदकसम्बन्धेन समवायेन वृत्तेरप्रसिद्धत्वादव्याप्तिश्चात आह। अथवा हेतुमन्निष्ठेति। हेतुमतो निष्ठा वृत्तिर्यस्य स तथा विरहोऽभावः। तथाच हेत्वधिकरणवृत्तिर्योऽभावः तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरुच्यते। अत्र यद्यपि वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्वं तत्तद्वह्न्यादेरस्तीत्यव्याप्तिः। न च समानाधिकरणवह्निधूमयोरेव व्याप्तिरिति वाच्यम्। तद्वह्नेरप्युभयाभावसत्त्वादेकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेः। गुणवान् (२५) द्रव्यत्वादित्यादावव्याप्तिश्च। तथापि प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति वाच्यम् (२६)। ननु रूपत्वव्याप्यजातिमत्वान् पृथिवीत्वादित्यादौ साध्यतावच्छेदिकारूपत्वव्याप्यजातयस्तासां शुक्लत्वादिस्वरूपाणां नीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीत्यव्याप्तिरिति चेन्न। तत्र परम्परया (२७) रूपत्वव्याप्यजातित्वस्यैव साध्यतावच्छेदकत्वात्।

---

२२। अथवेत्यादिलक्षणमवतारयितुमाद्यलक्षणे दोषं दर्शयति नन्विति।

२३। ननु केवलान्वयित्वज्ञानकाले पक्षताघटकसंशयाभावान्नैवानुमितिः, तच्छून्यकाले तु भ्रमात्मकव्याप्तिज्ञानादनुमितिर्भवत्येवेत्यत आह किञ्चेति।

२४। आदिना संयोगेन हेतुतायां गुणवान् घटादित्यादेः संग्रहः।

२५। ननु वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेनाभावविशेषणान्नाव्याप्तिरत आह गुणवानिति। अत्र हेतोरेकव्यक्तिकतया समानाधिकरणयोरेव व्याप्तिरित्युक्तावपि न निस्तार इति भावः।

२६। तथाच गुणत्वस्य द्रव्यत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वान्नाव्याप्तिरिति भावः।

२७। परम्परया—स्वाश्रयाश्रयसमवायसम्बन्धेन। तथाच साक्षात्सम्बन्धेन जातित्वविशिष्टस्य पृथिव्यामभावसत्त्वेन साध्यतावच्छेदकतादृशजातित्वस्य तत्प्रतियोगितावच्छेदकत्वेऽपि

न हि तादृशधर्म्मावच्छिन्नाभावः क्वापि पृथिव्यामस्ति, रूपत्वव्याप्य-जातिमान् नास्तीति बुद्ध्यापत्तेः। साध्यादिभेदेन व्याप्तेर्भेदात् तादृशस्थले साध्यतावच्छेदकतावच्छेदकप्रतियोगितावच्छेदकतान-वच्छेदकमित्येव लक्षणघटकमित्यपि वदन्ति (२८)।

हेत्वधिकरणञ्च हेतुतावच्छेदकविशिष्टाधिकरणं वाच्यम्। तेन द्रव्यं गुणकर्म्मान्यत्वविशिष्टसत्त्वादित्यादौ शुद्धसत्त्वाधिकरणगुणादिनिष्ठा-भावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाव्याप्तिः। एवं हेतुतावच्छेदकसम्ब-न्धेन हेत्वधिकरणं बोध्यम्। तेन समवायेन धूमाधिकरणतदवयव-निष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिः। अभावश्च प्रतियोगि-व्यधिकरणो बोध्यः। तेन कपिसंयोगी एतद्वृक्षत्वादित्यादौ मूला-वच्छेदेनैव एतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि कपि-संयोगस्य नाव्याप्तिः। न च प्रतियोगिव्यधिकरणत्वं यदि प्रतियोग्य-नधिकरणवृत्तित्वम् तदा तथैवा(२९)व्याप्तिः, प्रतियोगिनः कपि-संयोगस्यानधिकरणे गुणादौ वर्त्तते योऽभावस्तस्यैव (३०) वृक्षे मूलावच्छेदेन सत्त्वात्। यदि प्रतियोग्यधिकरणावृत्तित्वं तदा संयोगिसत्त्वादित्यादावतिव्याप्तिः, सत्त्वाधिकरणे गुणादौ यः संयोगा-भावस्तस्य प्रतियोग्यनधिकरणवृत्तित्वादिति वाच्यम्। हेत्वधिकरणे प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य विवक्षितत्वात्। स्वप्रतियोग्य-

---

उक्तपरम्परया यदवच्छेदकं तदन्यत्वस्य सत्त्वान्नाव्याप्तिः, रूपवान् पृथिवीत्वादित्यादावव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वस्य विवक्षणीयत्वादिति ध्येयम्।

२८। पूर्व्वोक्तरीत्यानिर्व्वाहे तत्र साध्यतावच्छेदकतावच्छेदकधर्म्मिकप्रतियोगितानव-च्छेदकत्वप्रकारकज्ञानस्य हेतुत्वं नोचितं, कारणतावच्छेदकगौरवादित्यस्वरसो वदन्तीत्यनेन सूचितः।

२९। तथैव—तदवस्थैव।

३०। अधिकरणभेदेनाभावभेदानभ्युपगमादिति भावः।

धिकरणीभूतहेत्वधिकरणवृत्त्यभाव इति निष्कर्षः (३१)। प्रतियोग्यनधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं बोध्यम्। तेन विशिष्टसत्त्वावान् जातेरित्यादौ जात्यधिकरणगुणादौ विशिष्टसत्त्वाभावस्य प्रतियोगिसमानाधिकरणत्वेऽपि न क्षतिः (३२)। एवं साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं बोध्यम्। तेन ज्ञानवान् द्रव्यत्वादित्यादौ द्रव्यत्वाधिकरणघटादेर्विषयतासम्बन्धेन ज्ञानाधिकरणत्वेऽपि न क्षतिः। इत्यञ्च (३३) वह्निमान् धूमादित्यादौ धूमाधिकरणे समवायेन वह्निविरहसत्त्वेऽपि न क्षतिः (३४)। ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित् तत्सामान्यस्य वा अनधिकरणत्वम्। यत्किञ्चि(३५)त्प्रतियोगितावच्छेदकावच्छिन्नस्य वानधिकरणत्वविवक्षितम्। आद्ये कपिसंयोगी एतद्वृक्षत्वादित्यादौ तथैवाव्याप्तिः, कपिसंयोगाभावस्य हि प्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिरपि कपिसंयोगो भवति, तदनधिकरणञ्च वृक्ष इति। द्वितीये प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः, सर्वस्यैवाभावस्य

---

३१। नन्वेवं हेतुसमानाधिकरणेत्यस्य वैयर्थ्यं सत्तावान् जातेरित्यादौ सत्ताद्यभावस्य निरुक्तप्रतियोगिवैयधिकरण्याभावादेवाव्याप्तिविरहादित्यतो निष्कर्षान्ताभिधानं अभावान्तार्थनिष्कर्षं इत्यर्थः। तथाच हेतुसमानाधिकरणत्वविशेषणबलादेव तादृशप्रतियोगिवैयधिकरण्यलाभान्न तद्वैयर्थ्यमिति भावः।

३२। न क्षतिः—नातिव्याप्तिः। एवमग्रेऽपि।

३३। ननु प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोग्यनधिकरणत्वमुच्यतां, तावताऽपि ज्ञानवान् सत्त्वादित्यादावनतिप्रसङ्गसम्भवादित्यत आह—इत्यञ्चेति साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वविवक्षणे चेत्यर्थः।

३४। न क्षतिः—नाव्याप्तिः। समवायेन वह्न्यभावस्य साध्यतावच्छेदकसंयोगेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तित्वविरहादिति भावः।

३५। यत्किञ्चिदिति—प्रतियोगितावच्छेदकविशेषणं, यत्किञ्चिद्यत्प्रतियोगितावच्छेदकं तदवच्छिन्नसामान्यस्य वेत्यर्थः।

पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मक (३६) प्रतियोगिसमानाधिकरणत्वात्। न च वह्निमान् धूमादित्यादौ घटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्वतादेस्तथापि साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोग्यनधिकरणत्वमत्यैवेति कथमप्रसिद्धिरिति वाच्यम्। घटाभावे यो वह्न्यभावस्तस्य घटाभावात्मकतया (३७) घटाभावस्य वह्निरपि प्रतियोगी तदधिकरणञ्च पर्वतादीति क्रमेण प्रतियोगिव्यधिकरणस्याप्रसिद्धत्वात्। यदि च घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते, तथापि धूमाभाववान् वह्न्यभावादित्या (३८) दावव्याप्तिः, तत्र साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धः, तेन सम्बन्धेन सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्येति। तृतीये तु कपि(३९)संयोगाभाववान् आत्मत्वा(४०)दित्यादावव्याप्तिः। तत्रात्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगस्तस्य च गुणत्वात् तत्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि तदवच्छिन्नानधिकरणत्वं

---

३६। पूर्व्वक्षणवृत्तित्वविशिष्टस्य स्वस्य घटाभावादेरभावस्तदात्मकेत्यर्थः। न च पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावादेरभावः स्वभावस्य प्रतियोगी न घटाभावादेरिति वाच्यं पूर्व्वक्षणवृत्तित्वविशिष्टघटाभावादेर्योऽभावस्तदभावस्य पूर्व्वक्षणवृत्तित्वविशिष्टघटाभावानतिरेकितया विशिष्टघटाभावस्य च शुद्धघटाभावानतिरेकित्वेन विशिष्टघटाभावप्रतियोगिनस्तस्य शुद्धघटाभावप्रतियोगित्वानपायात्। तथाचोत्तरक्षणावच्छेदेन तस्य घटाभावाधिकरणेऽपि सत्त्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽसम्भव इति भावः।

३७। अभावाधिकरणकाभावस्याधिकरणानतिरिक्तत्वादिति भावः।

३८। आदिपदेनाभावसाध्यकसद्धेतुमात्रपरिग्रहः।

३९। प्राचां मते द्रव्ये संयोगसामान्याभावानङ्गीकारादाह—कपीति।

४०। घटत्वादिहेतुके यत्किञ्चित्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वं हेत्वधिकरणस्य घटादेर्न सम्भवति उत्पत्तिकाले घटे गुणसामान्याभावसत्त्वादत आत्मत्वपर्य्यन्तानुधावनं।

हेत्वधिकरणस्यात्मन इति। मैवम्। यादृश ४१)प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात्। ननु (४२) कालो घटवान् कालपरिमाणादित्यत्राप्रतियोगिव्यधिकरणाभावाप्रसिद्धि:, हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्वेषामभावानां साध्यतावच्छेदकसम्बन्धेन कालिकविशेषणतया प्रतियोग्यधिकरणवृत्तित्वात्। अत्र केचित् महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरण:, महाकालस्य घटाधारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात्। महाकाले महाकालभेदाभावात्। वस्तुतस्तु (४३) प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्म्मावच्छिन्नत्वोभयाभाव(४५)स्तेन सम्बन्धेन तद्धर्म्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम्। इत्थञ्च कालो घटवान् कालपरिमाणादित्यादौ संयोगसम्बन्धेन घटाभावप्रतियोगिनो घटास्यानधिकरणे महाकाले वर्त्तमान: स एव संयोगेन घटाभावस्तस्य प्रतियोगितायां कालिकसम्बन्धावच्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभावसत्त्वान्नाव्याप्ति:। ननु प्रमेयवह्निमान्

---

४१। तृतीयविवक्षानुसारेण समाधत्ते यादृशेति।

४२। साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वविवक्षणेऽव्याप्तिमाशङ्कते नन्विति।

४३। ननु महाकालमात्रवृत्तिविशेषणतासम्बन्धेन साध्यतायां महाकालान्यत्वविशिष्टघटाभावोऽपि न प्रतियोगिव्यधिकरणस्तत्र तेन सम्बन्धेन महाकालान्यत्वविशिष्टघटाभावाधिकरणत्वाप्रसिद्धेरत आह वस्तुत इति।

४४। संयोगेन घटाभावप्रतियोगितायां धूमत्वावच्छिन्नत्वघटितोभयाभावसत्त्वाद्धूमवान् वह्नेरित्यादौ प्रसक्ताया अतिव्याप्तेर्वारणाय सामान्येति।

४५। एकैकाभावनिवेशे समवायेन वह्न्यभावप्रतियोगितायां वह्नित्वावच्छिन्नत्वस्य संयोगेन घटाभावप्रतियोगितायां साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वस्य च सत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिरत उभयाभावनिवेश:।

**सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।**
**स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ ७० ॥**

धूमादित्यादौ प्रमेयवह्नित्वावच्छिन्नत्वमप्रसिद्धं (४६) गुरुधर्मस्यानवच्छेदकत्वादिति चेन्न। कम्बुग्रीवादिमान् नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताविषयीकरणेन गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारादिति (४७) संक्षेपः ॥ ६९ ॥

पक्षवृत्तित्वमित्यत्र (१) पक्षत्वं किं तदाह—सिषाधयिषयेति। सिषाधयिषाविरह(२)विशिष्टायाः सिद्धेरभावः पक्षता, तद्वान् पक्ष इत्यर्थः। सिषाधयिषामात्रं न पक्षता, विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात्। अत एव साध्यसन्देहोऽपि न पक्षता, विनापि सन्देहं तदनुमानात्। सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव, अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम्। तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्या-

---

४६। तथाचाव्याप्तिरिति भावः।

४७। यदि च कम्बूग्रीवादिमान्नास्तीत्यादौ कम्बूग्रीवादिमत्प्रतियोगिकाभाव एव विषयो नतु कम्बूग्रीवादिमत्त्वे तत्प्रतियोगितावच्छेदकत्वमपीत्युच्यते, तदा यत्किञ्चिद्‌ घटवत्यपि कम्बूग्रीवादिमान्नास्तीति वाक्यस्य प्रामाण्यापत्तिरिति हृदि निधाय संक्षेप इति।

१। पक्षतानिरूपणे सङ्गतिं प्रदर्शयति—पक्षधर्मत्वमित्यत्रेति। तथाच प्रकृतस्य परामर्शस्य घटकतया पक्षधर्मत्वमपि प्रकृतं, तदुपपादकत्वरूपोद्‌घातसङ्गत्या पक्षतानिरूपणं। व्याप्तिनिरूपणाव्यवहितोत्तरपक्षतानिरूपणे का सङ्गतिरिति चेत् व्याप्तिनिरूपितैककार्य्यप्रयोजकत्वमेव सङ्गतिरिति। प्रयोजकत्वञ्च कारणकारणतावच्छेदकसाधारणं तेनानुमितौ पक्षतायाः कारणत्वे व्याप्तेर्व्विषयविधया कारणतावच्छेदकत्वेऽपि च न क्षतिरिति ध्येयं।

२। मूले पक्षतालक्षणस्य स्पष्टतयानुक्तत्वात् पक्षतालक्षणं स्वातन्त्र्येण प्रदर्शयन् मूलार्थमाह सिषाधयिषाविरहेति। सिषाधयिषा विरहवैशिष्ट्यञ्च सिद्धावेककालावच्छेदेनैकात्मवृत्तित्वं, तेन सिषाधयिषाकालीनसिद्धेः कालिकसम्बन्धेन सिषाधयिषाविरहविशिष्टत्वसत्त्वेऽपि न क्षतिः।

मपि पचता । यत्र च सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामसत्यामपि पचता । यत्र च सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पचता, सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात् । ननु यत्र (३) परामर्शानन्तरं सिद्धिस्ततः सिषाधयिषा तत्र सिषाधयिषाकाले परामर्शनाशान्नानुमितिः । यत्र सिद्धिपरामर्शसिषाधयिषाः क्रमेण भवन्ति तत्र सिषाधयिषाकाले सिद्धेर्नाशात् प्रतिबन्धकाभावादेवानुमितिः । यत्र सिषाधयिषासिद्धिपरामर्शाः सन्ति तत्र परामर्शकाले सिषाधयिषैव नास्ति । एवमन्यत्रापि (४) । सिद्धिकाले परामर्शकाले वा न सिषाधयिषा योग्यविभुविशेषगुणानां यौगपद्यनिषेधात्, तत्कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न । यत्र वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्षं (५) स्मरणं (६) वा ततः सिषाधयिषा तत्र पक्षतासम्पत्तये सिषाधयिषाविरहविशिष्टत्वविशेषणस्यावश्यकत्वादिति । अत्रेदं बोध्यं, यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे (७) यल्लिङ्गकानुमितिस्तादृशतादृश(८)

---

३ । परामर्शरूपकारणसत्त्वे सिद्धिरूपविरोधिसत्त्वे च यदनुमितृसा स्यात्तदा तस्या उत्तेजकत्वं वाच्यं न चैतत् सम्भवतीत्याशङ्कते ननु यत्रेति ।

४ । यत्र परामर्शसिषाधयिषासिद्धयः क्रमेण भवन्ति एवं सिद्धिसिषाधयिषापरामर्शाः, एवं सिषाधयिषापरामर्शसिद्धयश्चेत्यर्थः ।

५ । अनुमितीष्टसाधनताविषयकमिति शेषः, अन्यथा वह्निमानिति प्रत्यक्षानन्तरं सिषाधयिषैव न सम्भवति इष्टसाधनताज्ञानस्य हेतुत्वात्, इष्टसाधनताज्ञानस्य तादृशप्रत्यक्षात् पूर्व्वमेवोपगमे प्रत्यक्षमेव न सम्भवति बलवदिच्छासामग्रीप्रतिबन्धात्, प्रत्यक्षानन्तरन्तदुपगमे तु सिषाधयिषाक्षणे प्रत्यक्षमेव न तिष्ठेदित्यादिकमनुसन्धेयं ।

६ । विशिष्टानुभवं प्रति विशेषणज्ञानस्य हेतुत्वेन प्रत्यक्षे तदपेक्षा गौरवादाह—स्मरणंवेति ।

७ । घटानुमितिर्जायतामितीच्छासत्त्वेऽपि पर्व्वतो वह्निमानिति सिद्धासत्त्वे वह्निमानित्यनुमित्युत्पत्तेः पर्व्वतो वह्निमानिति सिद्धिसत्त्वेऽपि तादृशेच्छाबलात्तादृशानुमित्यापत्तिरत उक्तं सिद्धिसत्त्व इति ।

८ । इदञ्चोत्तेजकेच्छाव्यक्तेः परिचायकं उत्तेजकत्वन्तु तत्तद्व्यक्तित्वेनैवेति बोध्यं ।

सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता। तेन (९) सिद्धिपरामर्शसत्त्वेऽपि यत्किञ्चिज्ज्ञानं (१०) जायतामितीच्छायामपि नानुमितिः (११)। वह्निव्याप्य(१२)धूमवान् पर्वतो वह्निमानिति प्रत्यक्षसत्त्वे प्रत्यक्षादिभिन्नं ज्ञानं जायतामितीच्छायामनुभवत्येव (१३)। एवं (१४) धूमपरामर्शसत्त्वे आलोकेन वह्निमनुमिनोमि इतीच्छायामपि नानुमितिः। सिषाधयिषाविरहकाले यादृशसिद्धिसत्त्वे नानुमितिस्तादृशी सिद्धिर्विशिष्यैव (१५) तत्तदनुमितौ प्रतिबन्धिका वक्तव्या। तेन पर्व्वतस्तेजस्वी पाषाणमयो वह्निमानिति ज्ञानसत्त्वेऽप्यनुमितेर्न विरोधः। परन्तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितिदर्शनात्। पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेव (१६) प्रतिबन्धिका। पक्षतावच्छेदकसामानाधि-

---

९। तेन—तत्तदिच्छाया उत्तेजकत्वेन।

१०। यत्किञ्चिज्ज्ञानं जायतामित्यस्यैतदुत्तरकालीनमित्यादि। अन्यथा यत्किञ्चिज्ज्ञानस्य सदा सिद्धत्वेन तद्रूपेणेच्छाविरहात्।

११। नानुमित्यापत्तिरित्यर्थः। तदिच्छायास्तद्व्यक्तित्वेनोत्तेजकत्वानभ्युपगमादिति भावः।

१२। नन्वनुमितित्वप्रकारकेच्छात्वेनानुगतरूपेण वोत्तेजकत्वं वाच्यं, तावतैव यत्किञ्चित् ज्ञानं जायतामितिच्छावारणसम्भवान्नतु तत्तद्व्यक्तित्वेनोत्तेजकत्वं कल्प्यं कल्पनागौरवादित्यत आह वह्निव्याप्येति।

१३। भवत्येवेत्यनुमितिरित्यनेन सम्बध्यते। तथाचानुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वे तत्रानुमितिर्नस्यादिति भावः।

१४। तल्लिङ्गकत्वप्रवेशस्य फलमाह एवमिति।

१५। पर्व्वतो वह्निमानित्यनुमितौ पर्व्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकतावक्तव्या इत्यर्थः। तत्प्रयोजनमाह तेनेति।

१६। एवकारेण सामानाधिकरण्येन सिद्धेर्व्यवच्छेदः।

करण्येनानु(१७)मितिं प्रति तु सिद्धिमात्रं (१८) विरोधि। इदन्तु बोध्यम्(१९)—यत्रायं पुरुषो न वेति संशयानन्तरं पुरुषत्वव्याप्य-करादिमानयम् इति ज्ञानं तत्रासत्यामनुमित्सायां पुरुषत्वस्य प्रत्यक्षं भवति (२०) न त्वनुमितिरतोऽनुमित्साविरहविशिष्टसमानविषयक-प्रत्यक्षसामग्री कामिनीजिज्ञासादिवत् स्वातन्त्र्येण (२१) प्रति-बन्धिका। एवं परामर्शानन्तरं विनापि प्रत्यक्षेच्छां पक्षादिप्रत्यक्षानु-त्पत्तेः। प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री (२२) भिन्नविष-यकप्रत्यक्षे प्रतिबन्धिका ॥ ७० ॥

---

१७। सामानाधिकरण्येण—सामानाधिकरण्यमात्रेण, अन्यथा अवच्छेदावच्छेदेनानुमिते-रपि सामानाधिकरण्यावगाहितया तद्वदवच्छेदाप्रतीतेः।

१८। पक्षविशेष्यकसाध्यप्रकारकनिश्चयत्वेन विरोधित्वमित्यर्थः।

१९। उपाध्यायास्तु सिषाधयिषाविरहविशिष्टसिद्धिप्रत्यक्षसामग्र्योरन्यतरस्याभावः पक्षता तेन सिद्धिकाले समानविषयकप्रत्यक्षसामग्रीकालेऽपि च नानुमित्यापत्तिरित्याहुस्तद्दूषयितुं प्रत्यक्षसामग्र्यभावस्य पक्षताकुक्षावप्रवेशे प्रत्यक्षसामग्रीकाले कथं नानुमितिरित्युत्कटशिष्य-जिज्ञासानुत्पादार्थं प्रथमतः स्वसिद्धान्तमाह इदन्तु बोध्यमित्यादिना।

२०। संशयोत्तरप्रत्यक्षहेतुभूतस्य विशेषदर्शनस्य सत्त्वादिति भावः। एतादृशप्रत्यक्ष-सामग्रीविशेषपर्य्यन्तानुधावनञ्च तद्विषये अनुमितिसामग्रीसम्पत्तिदर्शनार्थं स्वातन्त्र्येणानुमिति-सामग्रीप्रदर्शने प्रयासापत्तेः।

२१। ननु पक्षताकुक्षिप्रविष्टत्वेनेत्यर्थः। शाब्दसिद्धौ सत्यामशाब्दज्ञानं जायतामितीच्छायामनुमितेरुत्पादनात् सिद्धावनुमितिगोचरेच्छात्वं न तादृशेच्छाकाले प्रत्यक्षसामग्रीकाले-ऽनुमित्यनुत्पादात् सामग्र्यामनुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वस्यावश्यकतया एकरूपेणो-त्तेजकत्वासम्भवात्, एवमुभयत्र सिषाधयिषाविरहस्य नैकसम्बन्धेन विशेषणत्वसिद्धौ समवाय-घटितसामानाधिकरण्येन चक्षुःसंयोगादिरूपसामग्र्यास्तु स्वाश्रयचक्षुःसंयुक्तमनःप्रतियोगिक-विजातीयसंयोगघटितसामानाधिकरण्येनैत्येकरूपेण तयोः प्रतिबन्धकत्वासम्भवादिति भावः।

२२। अनुमितिसामग्र्येव प्रतिबन्धिका नतु विभिन्नविषयकप्रत्यक्षसामग्र्यनुमिति-प्रतिबन्धिकेत्यर्थः। तथाच प्रत्यक्षसामग्र्याः समानविषयकानुमितिं प्रत्येव प्रतिबन्धकतया न पूर्व्वोक्तानुमित्यनुपपत्तिरिति भावः।

**अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।**
**कालात्ययोपदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥७१॥**

प्रसङ्गसङ्गत्या (१) हेत्वाभासान् विभजति—अनैकान्त इत्यादि। तल्लक्षणन्तु (२) यद्विषयत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वं, तथाहि व्यभिचारादिविषयकत्वेन ज्ञानस्यानुमितिविरोधित्वा त्ते (३) दोषाः। यद्विषयकत्वञ्च यादृशविशिष्टविषयकत्वं बोध्यम्। तेन बाधभ्रमस्यानुमितिविरोधित्वेऽपि न क्षतिः। तत्र पर्वतो वह्न्यभाववानिति विशिष्टस्याप्रसिद्धत्वान्न हेतुदोषः। न च वह्न्यभावव्याप्यपाषाणमयत्ववान् इति परामर्शकाले वह्निव्याप्यधूमस्याभासत्वं न स्यात् तत्र वह्न्यभावव्याप्यवान् पक्ष इति विशिष्टस्याप्रसिद्धत्वादिति वाच्यम्। इष्टापत्तेः (५)। अन्यथा (६) बाधस्याप्य-

---

१। सद्धेतुनिरूपणानन्तरमसद्धेतुनिरूपणे विजयलक्षणैककार्य्यकारित्वमपि सङ्गतिर्बोध्या· खोक्तहेतोः सद्धेतुत्वप्रतिपादनेनेव परोक्तप्रतिहेतोर्दुष्टत्वप्रतिपादनेनापि कथायां वादिनो विजयादिति ध्येयम्।

२। ननु तद्धर्म्मावान्तरधर्म्मप्रकारकज्ञानगोचरेच्छाम् प्रति तद्धर्म्मज्ञानस्य हेतुत्वेन लक्षणात्मकसाधारणधर्म्मज्ञानं विना विशेषे जिज्ञासानुदयाद्विभागो निष्प्रयोजक इत्यतो· हेत्वाभाससामान्यलक्षणमाह तल्लक्षणन्त्विति। यद्विषयकत्वेनेति तृतीयार्थोऽवच्छिन्नत्वं ज्ञान· पदमनाहार्य्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरं षष्ठ्यर्थो वृत्तित्वं विरोधित्वं—प्रतिबन्धकत्वं तत्र षष्ठ्यन्तार्थस्य यद्विषयकत्वेऽन्वयः तृतीयान्तार्थस्य च विरोधित्वे। तथाच अनाहार्य्या· प्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्विषयकत्वावच्छिन्नमनुमितिप्रतिबन्धकत्वं तत्त्वं हेत्वा· भासत्वमित्यर्थः।

३। ते—व्यभिचारादयः।

४। न वह्न्यभावादावतिव्याप्तिः इतरथा वह्न्यभावविषयकत्वस्य पर्व्वतविशेष्यकवह्न्यभाव· प्रकारकत्वरूपानुमितिप्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वात्तत्रातिव्याप्तिः स्यादिति भावः।

५। तथाच सद्धेतूनां प्रतिपरामर्शेऽपि न दुष्टत्वमिति भावः।

६। अन्यथा—प्रतिबन्धकीभूतधर्मविषयस्यापि दोषत्वे।

नित्यदोषत्वापत्ति: (७)। तस्मात् तत्र वह्न्यभावव्याप्यपाषाणमयत्ववान् इति परामर्शकाले वह्निव्याप्यधूमस्य नाभासत्वं, भ्रमादनुमितिप्रतिबन्धमात्रम् हेतुस्तु न दुष्ट इति। इत्यञ्च (८) साध्याभाववद्वृत्तिहेत्वादिकं (९) दोष:, तद्वत्ता च हेतौ येन केनापि सम्बन्धेनेति (१०) नव्या:। परे तु (११) यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वं हेत्वाभासत्वम्। सत्प्रतिपक्षे विरोधिव्याप्यादिकमेव तथा। तद्वत्त्वञ्च (१२) हेतोर्ज्ञानरूपसम्बन्धेन। न चैवं वह्निमान् धूमादित्यादौ पक्षे बाधभ्रमस्य साध्याभावविषयकत्वेनानुमितिविरोधित्वाज्ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि (१३) सत्त्वात् सद्धेतोरपि बाधितत्वापत्तिरिति वाच्यम्। तत्र (१४) ज्ञानस्य सम्बन्धत्वाकल्पनात्। अत्र (१५) सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात्(१६)।

---

७। पक्षे साध्याभावभ्रमदशायां सद्धेतावपि दोषत्वापत्तिरित्यर्थ:।

८। इत्यञ्च—यादृशविशिष्टविषयकत्वेन ज्ञानस्य प्रतिबन्धकत्वं तादृशविशिष्टस्य दोषत्वे च।

९। आदिना साध्याभावविशिष्टपक्षपरिग्रह:।

१०। एकज्ञानविषयत्वविशिष्टप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनेत्यर्थ:। न च वह्निव्यभिचारविशिष्टद्रव्यत्वादेर्धूमेऽपि सत्त्वादतिव्याप्तिरिति वाच्यं, यादृशविशिष्टविषयकज्ञानत्वेन यद्धेतुकानुमितिप्रतिबन्धकत्वं तादृशविशिष्टाश्रयतद्धेतुत्वस्यैव दुष्टत्वादिति।

११। सत्प्रतिपक्षादेरनित्यदोषवादिनां मतमाह—परे त्विति।

१२। न च वह्न्यभावादिव्याप्येतत्पदेनोपादातुं शक्यत्वेऽपि तस्या धूमावृत्तितया न धूमस्य दुष्टत्वं स्यादत आह तद्वत्त्वञ्चेति। ज्ञानरूपसम्बन्धेन—एकज्ञानविषयत्वेनेत्यर्थ:।

१३। तद्वत्त्वस्यापि—साध्याभाववत्त्वस्यापीत्यर्थ:।

१४। तत्र—बाधकालीनधूमादिसद्धेतौ।

१५। अत्र—प्रीतिपरामर्शकालीने धूमादिसद्धेतौ।

१६। तत्कल्पनात्—ज्ञानस्य सम्बन्धत्वकल्पनात्।

तत्र (१७) बाधितव्यवहाराभावादित्याहुः (१८)। अनुमितिविरोधित्वञ्च अनुमितितत्कारणान्यतरविरोधित्वं तेन व्यभिचारिणि नाव्याप्तिः। दोषज्ञानञ्च यद्धेतुविषयकं तद्धेतुकानुमितौ प्रतिबन्धकम्। तेन एकहेतौ व्यभिचारग्रहे हेत्वन्तरेणानुमित्युत्पत्ते-(२०) स्तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेऽपि न क्षतिरिति संक्षेपः (२१)। यादृशः (२२) पक्षसाध्यहेतौ यावन्तो दोषास्तावदन्योन्यत्वं तत्र हेत्वाभासत्वम्। पञ्चत्वकथनन्तु तत्सम्भव(२३)स्थलाभिप्रायेण। एवं (२४) साधारण्याद्यन्यतमत्वम् अनैकान्तिकत्वम् ॥ ७१ ॥

---

१७। ननु सद्धेतावपि बाधित इति व्यवहारेण सम्बन्धत्वकल्पनं ज्ञानस्य भविष्यतीत्याह तत्रेति, बाधक्षमकालीनसद्धेतावित्यर्थः। प्रत्युतायं न बाधितः, पुरुषस्तु भ्रान्त इत्येव व्यवहारादिति भावः।

१८। तादृशव्यवहारयोः स्वानुभवमात्रसाक्षिकत्वमाहुरित्यस्वरसबीजं।

१९। यथाश्रुतविरोधित्वत्यागे बीजमाह तेनेत्यादिना।

२०। ननु तद्धेतुकतत्साध्यकानुमितिं प्रति तद्धेतौ तत्साध्यकव्यभिचारग्रहाभावो हेतुर्व्वाच्यस्तत्राह तदभावेति।

२१। नन्वत्र लक्षणे अवच्छेदकत्वं न स्वरूपसम्बन्धविशेषः पूर्व्वोक्तदोषादित्यनतिरिक्तवृत्तित्वमेव निवेशनीयं, तथाच धूमवान् वह्नेरित्यादौ प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः,-स्वविषयकत्वस्य प्रतिबन्धकतानतिरिक्तवृत्तित्वादत आह संक्षेप इति। अनुमितिप्रतिबन्धकतावच्छेदकान्तराघटितत्वेनानुमितिविरोधितावच्छेदकं विशेषणीयं प्रमेयत्वविशिष्टव्यभिचारस्य प्रकृतानुमितिप्रतिबन्धकतावच्छेदकीभूतो यो व्यभिचारस्तद्घटित एवेति न तत्रातिप्रसङ्ग इति ध्येयम्।

२२। निर्व्वह्निः पर्व्वतो वह्निमान् धूमादित्यादौ विशिष्टपक्षसाध्यकज्ञानस्य नियताहार्य्यतया आहार्य्यापरोक्षज्ञानानभ्युपगमेनानुमित्यनात्मकत्वादुक्तानुमितिघटितलक्षणाप्रसिद्ध्या न कोऽपि हेत्वाभासः स्यादत आह यादृश पक्षसाध्येति।

२३। वायुर्गन्धवान् स्नेहादित्यादौ सर्व्वविधहेत्वाभासस्य सम्भवस्तथा च तत्स्थलीयदोषसामान्यलक्षणमभिप्रेत्यैव पञ्चधा विभागकरणमिति भावः।

२४। सामान्यलक्षणं विना विभागस्यानुपयुक्तत्वादनैकान्तिकसामान्यलक्षणमाह एवमिति। साधारणादीत्यादिना असाधारणानुपसंहारिणोः परिग्रहः।

**आद्य: साधारणस्तु स्यात् स्यादसाधारणो मत:।**
**तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् ॥७२॥**

आद्य: साधारण इत्यादि। साधारण (१) साध्यवदन्यवृत्तिर्हेतु: (२)। तेन च व्याप्तिग्रहप्रतिबन्ध: क्रियते। असाधारण: साध्यासमानाधिकरणो हेतु:। तेन साध्यसामानाधिकरण्यग्रह: प्रतिबध्यते। अन्ये तु सपक्षा वृत्तिरसाधारण:, सपक्षश्च निश्चितसाध्यवान्। इत्यञ्च शब्दोऽनित्य: शब्दत्वादित्यादौ पक्षे यदा साध्यनिश्चयस्तदा नासाधारण्यं तत्र हेतोर्निश्चयादिति वदन्ति (३)। अनुपसंहारी च अत्यन्ताभावाप्रतियोगिसाध्यकादि:। अनेन च व्यतिरेकव्याप्तिग्रहप्रतिबन्ध: क्रियते (४)। विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी। अयञ्च साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धक:। सत्प्रतिपक्षे तु (५)

---

१। मूले वक्ष्यमाणेषु साधारणादिलक्षणेषु क्वचिद्दोषं हृदि निधाय स्वयं निष्कृष्टतल्लक्षणान्याह साध्यवदन्यवृत्तीत्यादिना।

२। इदञ्च साध्यवदन्यावृत्तित्वे सति साध्यसामानाधिकरण्यं व्याप्तिरित्यभिप्रायेण, व्यापकसामानाधिकरण्यस्य व्याप्तित्वे तु स्वसमानाधिकरणाभावप्रतियोगितावच्छेदक एव साधारणो बोध्य:, तदभावज्ञानस्यैव तज्ज्ञानप्रतिबन्धकत्वादिति ध्येयम्।

३। साधारणादिवद्यास्यासीकहेत्वाभासत्वानुपपत्तिरूपास्वरस: प्राचीनमते वदन्तीत्यनेन सूचित:।

४। एवञ्च साधारणासाधारणानुपसंहारिणां व्याप्तिज्ञानप्रतिबन्धकतारूपदूषकताबीजैक्येनैकहेत्वाभासत्वमुपपद्यते। साधारणेनाव्यभिचारग्रहस्य असाधारणेन व्याप्तिघटकसामानाधिकरण्यग्रहस्य अनुपसंहारिणा च व्यतिरेकव्याप्तिग्रहस्य प्रतिबन्धादिति भाव:।

५। नन्वेवं साध्याभावसाधकात् सत्प्रतिपक्षाद्विरुद्धस्य भेदो न स्यात्? न च साध्याभावव्याप्यवान् पक्ष: सत्प्रतिपक्ष:, विरुद्धस्तु साध्यव्यापकाभावप्रतियोगी प्रकृतो हेतुरिति स्वरूपत एव भेदो वर्त्तत इति वाच्यं, यथा साधारणादीनां परस्परवैलक्षण्येऽपि दूषकताबीजस्यैक्येनैकहेत्वाभासत्वं तथा सत्प्रतिपक्षविरोधयोरपि विरोध्यनुमितिसामग्रीत्वेन प्रतिबन्धकतारूपदूषकताबीजैक्यादेकहेत्वाभासत्वापत्ते: सम्भवादत आह सत्प्रतिपक्षे त्विति। प्रतिहेतु:—प्रतिकूलो द्वितीयो हेतु:।

प्रतिहेतुः साध्याभावसाधकः । अत्र तु हेतुरेवेति विशेषः । साध्याभावसाधक (६) एव साध्यसाधकत्वेन उपन्यस्त इत्यशक्तिविशेषोपस्थापकत्वाच्च विशेषः । सत्प्रतिपक्षः साध्याभावव्याप्यवान् पक्षः। अगृहीता (७) प्रामाण्यकसाध्यव्याप्यवत्त्वोपस्थितिकालीनागृहीता प्रामाण्यकतदभाव-व्याप्यवत्त्वोपस्थितिविषयस्तथा इत्यन्ये (८)। अत्र च परस्पराभावव्याप्यवत्ताज्ञानात् परस्परानुमितिप्रतिबन्धः फलम् । अत्र केचित् (९) यथा घटाभावव्याप्यवत्ताज्ञाने विद्यमानेऽपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानं जायते । यथा च शङ्खे सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने सति पित्तादिदोषे पीतः शङ्ख इति धीर्जायते, एवं कोटिद्वयव्याप्यदर्शनेऽपि कोटिद्वयस्य प्रत्यक्षरूपः संशयो भवति, तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव। यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः । फलबलेन (१०) चाधिकसमबलभावः कल्प्यते

---

६ । ननु यदि दूषकताबीजैक्येऽपि हेतुभेदे सत्प्रतिपक्षो हेत्वैक्ये विरुद्धरूपं हेत्वाभासान्तरमित्युच्यते तदा यत्रान्वयव्याप्तिमता हेत्वन्तरेण प्रतिरोधस्तत्र सत्प्रतिपक्षो, यत्र तु व्यतिरेकव्याप्तिमता तत्र हेत्वाभासान्तरं स्यादतो भेदकान्तरमप्याह साध्याभावसाधकेति । वस्तुगत्या साध्याभावसाधके हेतावेव तत्र साध्यसाधकत्वभ्रम इति स्थापनावादिनं प्रति भ्रमरूपाशक्तिसूचकत्वं विरोधस्य नत्वेवं सत्प्रतिपक्षस्येति भावः ।

७ । सत्प्रतिपक्षव्यवहारौपयिकमन्येषां सत्प्रतिपक्षलक्षणमाह अगृहीतेत्यादि ।

८ । व्यवहारमात्रोपयोगिनो निरुक्तरूपस्य प्रकृतानुपयोगः उपस्थितिघटितस्योक्तरूपस्य स्वरूपसत एवोपयुक्तस्याभासतायामप्रयोजकत्वादित्यस्वरसं सूचयत्यन्य इति ।

९ । सत्प्रतिपक्षस्य संशयजनकत्वं दूषकताबीजं नत्वनुमितिप्रतिबन्धकत्वं तदभावव्याप्यवत्ताज्ञानस्यानुमितिप्रतिबन्धकत्वे मानाभावादिति रत्नकोषकारमतं दूषयितुमुपन्यस्यति एव केचिदित्यादिना ।

१० । ननु यद्युभयाभासकसत्त्वे उभयभानं तदा दोषसत्त्वेऽपि पीतत्वशुक्लत्वोभयस्मृतावुभयोर्भानापत्तिरित्यत आह फलबलेनेति । तथाच तत्र पीतत्वसाक्षात्कारस्य वाउभविकतया शुक्लत्वग्रहे पित्तरूपदोषस्य प्रतिबन्धकत्वं कल्पयित्वा पीतत्वसाक्षात्कारसामग्र्या

इति वदन्ति। तन्न। तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयात् लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य प्रतिबन्धकता, लाघवात्। न तूपनीतभानविशेषे शाब्दबोधे च पृथक्प्रतिबन्धकता, गौरवात् (११)। तथा च प्रतिबन्धकसत्त्वात् कथमनुमितिः (१२)। न हि लौकिकसन्निकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयाकारानुमितिः प्रामाणिकी येनानुमितिभिन्नत्वेनापि विशेषणीयं, यत्र च (१३) कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात् संशयो नान्यथा अगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति।

आश्रयासिद्ध्याद्यन्य (१४) तमत्वमसिद्धत्वम्। आश्रयासिद्धिः पक्षे पक्षतावच्छेदकस्याभावः। यत्र च काञ्चनमयः पर्वतो वह्निमानिति साध्यते, तत्र पर्व्वतो नो काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमयपर्व्वते परामर्शप्रतिबन्धः फलम्।

स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्याभावः। अत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपपरामर्शस्य प्रतिबन्धः फलम्।

साध्या प्रसिद्ध्यादयस्तु (१५) व्याप्यत्वासिद्धिमध्येऽन्तर्भूताः।

---

अधिकबलत्वं, एवं दूरत्वदोषे सत्यपि स्थाणुत्वपुरुषत्वयोः स्मृतौ संशयस्यैवोदयात् तत्सामग्र्याः समबलत्वमेव कल्प्यत इति भावः।

११। कार्य्यकारणभावद्वयकल्पने गौरवादिति भावः।

१२। अनुमितेरपि तत्प्रतिबध्यतावच्छेदकाक्रान्तत्वादित्याशयः।

१३। कथं तर्ह्युभयव्याप्यवत्तानिश्चयात् प्रात्यक्षिकः संशय इत्याशङ्का न भवत्येव तावद्यावत्तन्निश्चयेऽप्रामाण्यं न गृह्यते इत्याह यत्र चेति।

१४। आदिना स्वरूपासिद्धिव्याप्यत्वासिद्ध्योः संग्रहः।

१५। साध्याप्रसिद्ध्यादीनामाधिक्यं निराकरोति साध्याप्रसिद्ध्यादयस्त्विति, आदिना साध्याप्रसिद्धिपरिग्रहः।

साध्ये साध्यतावच्छेदकस्याभावः साध्याप्रसिद्धिः। काञ्चनमयवह्निमानित्यादौ साध्ये साध्यतावच्छेदकाभावे ज्ञाते साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम् ।

एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः। यथा काञ्चनमयधूमादित्यादौ, अत्र। हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात् तत्तद्धेतुकव्याप्तिज्ञानादेरभावः फलम्। एवं वह्निमान् नीलधूमादित्यादौ गुरुतया नीलधूमत्वस्य हेतुतानवच्छेदकत्वमपि व्याप्यत्वासिद्धिरित्यपि वदन्ति। (१६)

बाधस्तु पक्षे साध्याभावादिः (१७)। एतस्यानुमितिप्रतिबन्धः फलम्। तद्धर्म्मिकतदाभावनिश्चयो लौकिकसन्निकर्षाजन्य (१८) दोषविशेषाजन्य १९) तद्धर्म्मिकतज्ज्ञानमात्रे विरोधीति न तु (२०) तत्र संशयसाधारणं पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणं तद्विरोधितया बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति

---

१६। वदन्तीत्यनेनास्वरसः सूचितः, तद्बीजन्तु नीलधूमे व्याप्तिसत्त्वात् कथं व्याप्यत्वासिद्धिरिति। न च तत्र व्याप्तिसत्त्वेऽपि नीलधूमत्वस्य व्याप्तेरनवच्छेदकतया तदवच्छेदेन व्याप्यत्वासिद्धिरेवेति वाच्यं अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य नीलधूमत्वेऽपि सत्त्वात् स्वरूपसम्बन्धरूपावच्छेदकत्वाभावात्तदवच्छेदेन व्याप्त्यभावसत्त्वसम्भवेऽपि अनुमितितत्कारणीभूतव्याप्तिज्ञानाविरोधित्वेन हेत्वाभासत्वासम्भवाच्च। तस्माद्व्यर्थविशेषणस्थले न व्याप्यत्वासिद्धिहेत्वाभासः पुरुषस्त्वधिकेन निगृह्यत इति ध्येयम्।

१७। आदिना साध्यवदन्यत्वस्य पक्षवृत्तिसाध्याभावादेश्च परिग्रहः।

१८। बाधबुद्ध्युत्तरक्षणे लौकिकसन्निकर्षजन्यविशिष्टबुद्धेरानुभविकत्वादाह लौकिकसन्निकर्षाजन्येति।

१९। शङ्खो न पीतः वंशो नोरग इति निश्चयेऽपि पित्तमण्डूकवसाञ्जनादिदोषवशात् शङ्खः पीतः वंश उरग इत्यारोपोदयात्तत्र व्यभिचारवारणायाह दोषविशेषाजन्येति, दोषसामान्याजन्यत्वनिवेशे असम्भावस्यैव बाधाऽप्रतिबध्यत्वापत्तिरतो विशेषेति। तथाच पित्तमण्डूकवसाञ्जनादिदोषान् विशिष्योपादाय तदजन्यत्वं प्रतिबध्यतावच्छेदककोटौ निवेशनीयमिति भावः।

२०। कस्यचिन्मतं दूषयितुमुपन्यस्यति नत्विति, इति युक्तमित्यनेनान्वयः।

युक्तम् अप्रसिद्धसाध्यकानु (२१) मित्यपलापापत्तेः साध्यसंशयादिकं (२२) विनाप्यनुमित्युत्पत्तेश्च। एवं (२३) साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकम्। मानाभावाद् (२४) गौरवाच्च (२५)। अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः। किन्तु भ्रमत्वज्ञानानास्कन्दितबाधादिबुद्धेः प्रतिबन्धकता। तत्र भ्रमत्वशङ्काविघटनेन प्रामाण्यज्ञानं क्वचिदुपयुज्यते (२६)। न च बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारः पक्षे हेत्वभावे स्वरूपासिद्धिरेव दोष इति वाच्यम्। बाध-

---

२१। पूर्व्वमगृहीतसाध्यविधेयकेत्यर्थः। तथाच पृथिवीत्वव्यापकाभावप्रतियोगिगन्धवती पृथिवीति व्यतिरेकपरामर्शजन्यायाः साध्यविशेषणिकायाः पृथिव्यामितरभेद इत्यनुमितेरभावापत्तेरित्यर्थः।

२२। नन्वाचार्य्यमते सर्व्वत्रान्वयव्याप्तिज्ञानस्यैवानुमितिहेतुतया व्यतिरेकसहचारेणाप्यन्वयव्याप्तिरेव गृह्यत इति तैरङ्गीकारादुभयपरामर्शादनुमितेरसिद्धत्वात् अन्वयव्याप्तेः साध्यघटितमूर्त्तिकत्वेन व्याप्तिज्ञानसमय एव साध्यज्ञानावश्यकत्वादप्रसिद्धसाध्यकानुमितिः कुत्रापि न भवत्येवेत्यत आह साध्यसंशयादिकं विनेति। आदिना सिषाधयिषाकालीनसिद्धिपरिग्रहः।

२३। पक्षविशेष्यकसाध्याभावज्ञाने प्रमात्वनिश्चयोऽनुमितिप्रतिबन्धकस्तदभावः कारणमतस्तादृशप्रमात्वमेव बाध इति प्राचीनमतं दूषयति एवमिति।

२४। ग्राह्याभावानवगाहिनस्तादृशज्ञानस्य विरोधित्वे मानाभावादित्यर्थः।

२५। ननु पक्षे साध्याभावज्ञानेऽपि तत्राप्रामाण्यज्ञानकालेऽनुमितिरुदयान्न साध्याभावज्ञानं प्रतिबन्धकमस्मन्मते तु तदा साध्याभावप्रमात्वनिश्चयाभावादेवानुमित्युत्पत्तिरत आह गौरवादिति। तथाच तत्रानुमितिनिर्व्वाहाय संशयनिश्चयसाधारणाप्रामाण्यज्ञानाभाव एव प्रतिबन्धकतावच्छेदककोटौ निवेश्यते न तु पक्षविशेष्यकसाध्याभाववत्ताज्ञाने प्रमात्वनिश्चयत्वेन प्रतिबन्धकं गौरवादित्यर्थः।

२६। तथाचानुमिततत्कारणज्ञानान्यतरं प्रति साक्षात् प्रतिबन्धकीभूतज्ञानविषयाभावान्न साध्याभावज्ञानप्रमात्वं हेत्वाभास इति भावः।

**यः सपक्षे विपक्षे च भवेत् साधारणस्तु सः ।**
**यस्तूभयस्माद् व्यावृत्तः स चासाधारणो मतः ॥७३॥**

ज्ञानस्य व्यभिचारज्ञानादेर्भेदात् ( २७ )। किञ्च ( २८ ) यदा परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिञ्चित्करत्वाद्बाधस्यानुमितिप्रतिबन्धकत्वं वाच्यम्। एवं ( २९ ) यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं तत्र बाधस्यैव ( ३० ) प्रतिबन्धकत्वं वाच्यम्। स च पक्षे घटे गन्धसत्त्वात् कथं बाध इति वाच्यम्। पक्षतावच्छेदकदेशकालावच्छेदेनानुमितेरनुभवसिद्धत्वादिति ( ३१ )। बाधतद्व्याप्यभिन्ना ( ३२ ) ये हेत्वाभासास्तद्व्याप्या अपि तन्मध्य एवान्तर्भवन्ति। अन्यथा हेत्वाभासाधिक्यप्रसङ्गात् बाधव्याप्यसत्प्रतिपक्षो भिन्न एव। स्वतन्त्रेच्छेन मुनिना पृथगुपादानात्। सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक ( ३३ ) इति प्रकटितोऽर्थः ॥ ७२ ॥

यः सपक्षे इति। सपक्षविपक्षवृत्तिः साधारण इत्यर्थः। सपक्षो निश्चितसाध्यवान्। विपक्षः साध्यवद्भिन्नः। विरुद्धवारणाय

---

२७। तथाच बाधस्थले असिद्धिव्यभिचारान्यतरनियमेऽपि बाधज्ञानस्य व्यभिचारादिविषयकत्वाभावेन तस्य हेत्वाभासान्तरत्वमिति भावः।

२८। नन्वयोगोलकपक्षकधूमसाध्यकवह्निहेतुके बाधलौकिकप्रत्यक्षवद्व्यभिचारलौकिकप्रत्यक्षमपि व्याप्तिनिश्चये सत्यपि भविष्यतीत्याह किञ्चेति।

२९। व्यभिचाराद्यसङ्कीर्णमपि बाधं दर्शयति एवमित्यादिना।

३०। पक्षे हेतुसत्त्वेन स्वरूपासिद्धेः प्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तित्वरूपस्य व्यभिचारस्य चाभावादिति भावः।

३१। पक्षतावच्छेदकमुत्पत्तिकालमनन्तर्भाव्य यद्यनुमितिः प्रामाणिकी स्यात्तदा बाधो न स्यान्न तु तथास्तीति भावः।

**तथैवानुपसंहारी केवलान्वयिपक्षकः। ***

**यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥७४॥**

सपक्षवृत्तित्वमुक्तम्। वस्तुतो विपक्षवृत्तित्वमेव वाच्यम्। विरुद्धस्य साधारणत्वेऽपि दूषकतावीजस्य भिन्नतया (१) तस्य पार्थक्यात्।

यस्तूभयस्मादिति। सपक्षविपक्षव्यावृत्त इत्यर्थः। सपक्षः साध्यवत्तया निश्चितः। विपक्षः साध्यशून्यतया निश्चितः। शब्दोऽनित्यः (२) शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वसन्देहस्तदा सपक्षत्वं विपक्षत्वञ्च घटादीनामेव तद्व्यावृत्तञ्च शब्दत्वमिति तदा तदसाधारणम्। यदा तु शब्दे नित्यत्वनिश्चयस्तदा नासाधारणं। इदञ्च प्राचां मतं। नवीनमतं पूर्वमुक्तम् (३) ॥७३॥

केवलान्वयिपक्षक इति। सर्वमभिधेयं (४) प्रमेयत्वादित्यादौ

---

३२। बाधः साध्याभावविशिष्टपक्षादिः, तद्व्याप्यः सत्प्रतिपक्षः, तद्भिन्ना व्यभिचारविरुद्धासिद्धाः, तद्व्याप्यानां तत्रैवान्तर्भाव इत्यर्थः। व्यभिचारादेरिव व्यभिचारादिव्याप्यस्यापि व्याप्तिग्रहप्रतिबन्धकज्ञानविषयत्वेन पञ्च हेत्वाभासानन्तर्गतत्वे तस्यातिरिक्तहेत्वाभासत्वं स्यादिति भावः।

३३। साध्याभावव्याप्यव्याप्यवत्ताज्ञानस्य साध्यवत्ताज्ञानविरोधित्वे मानाभावादिति भावः।

१। साधारणस्याव्यभिचारज्ञाने विरुद्धस्य च सामानाधिकरण्यज्ञाने प्रतिबन्धकत्वादिति भावः।

२। सपक्षत्वविपक्षत्वयोर्निश्चयत्वनिवेशस्य फलमाह शब्दोऽनित्य इत्यादिना।

३। असाधारणः साध्यासमानाधिकरणो हेतुरित्यादिनोक्तमित्यर्थः।

* भावप्रधाननिर्देशेनात्र पक्षपदं पक्षतापरं, अन्यथाकाशाभावादिपक्षकसद्धेतावतिप्रसङ्गापत्तेः। पक्षता चात्र साध्यसंशयरूपा गृह्यते, तेन सर्व्वमभिधेयं प्रमेयत्वादित्यादौ यदा सिद्धिः सिषाधयिषा च तदा साध्यनिश्चयसम्भवेन सामानाधिकरण्यघटितव्याप्तिग्रहसम्भवात्तस्य सद्धेतोरनन्यतया सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य तदा केवलान्वयित्वेऽपि तत्र नातिव्याप्तिः।

४। अनुपसंहारिणो हेत्वाभासत्वमुपपादयति सर्व्वमभिधेयमित्यादिना।

**आश्रयासिद्धिराद्या स्यात् स्यात् स्वरूपासिद्धिरप्यथ ।**
**व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥७५ ॥**
**पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ।**
**ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥**

सर्वस्यैव पक्षत्वात् सामानाधिकरण्यग्रहस्थलान्तराभावा(५)न्नानुमितिः। इदन्तु न सम्यक्। पक्षैकदेशे सहचारग्रहेऽपि क्षतेरभावात्(६)। अस्तु वा(७)सहचाराग्रहस्तावतापि अज्ञानरूपासिद्धिरेव न तु हेत्वाभासत्वं तस्य। तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तम्। यः साध्यवतीति। एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभावो बोधितः। तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः (८) ॥ ७४ ॥

असिद्धिं विभजते। आश्रयासिद्धिरित्यादि ॥ ७५ ॥

पक्षतासिद्धिरिति। आश्रयासिद्धिरित्यर्थः। अपरेति स्वरूपासिद्धिरित्यर्थः। नीलधूमादिक इति। नीलधूमत्वादिकं गुरुतया न हेतुतावच्छेदकम्। स्व(९)समानाधिकरणव्याप्यतावच्छेदकधर्म्मा-

---

५। संशयोत्पत्तिक्षणे निश्चयवारणाय निश्चयं प्रति संशयसामग्र्याः प्रतिबन्धकत्वस्यावश्यं वाच्यतया प्रकृते सर्व्वत्र साध्यसन्देहसत्त्वे तत्पूर्व्वं तत्सामग्र्याः सत्त्वेन साध्यनिश्चयस्य कुत्राप्यसम्भवेन व्यापकसाध्यसामानाधिकरण्यविशिष्टप्रमेयत्वादिरूपव्याप्तिग्रहानुत्पादान्न तत्रानुमितिरित्यनुपसंहारिणो हेत्वाभासत्वमिति भावः।

६। तदानीमपि केवलान्वयिपक्षकत्वस्यानुपसंहारित्वस्य क्षतेरभावादित्यर्थः। तथाच तत्रानुपसंहारित्वस्य सत्त्वात्तस्य व्याप्तिज्ञानानुत्पादप्रयोजकत्वाभावाद्धेत्वाभासत्वानुपपत्तिरिति भावः।

७। विरोधादसमानविषयकत्वेन प्रतिबन्धकत्वेऽप्याह अस्तु वेति।

८। तथाचासाधारणे नातिव्याप्तिरिति भावः।

९। स्वपदं व्याप्यतावच्छेदकत्वे नाभिमतपरं। स्वस्यापि स्वाविषयकप्रतीतिविषयत्वरूपस्वाघटितत्वाभावाद्धर्म्मान्तरेति। स्वस्माद्धर्म्मान्तरत्वञ्च स्वाविषयकप्रतीतिविषयत्वं स्वान-

**व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् ।**
**विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥ ७७ ॥**
**साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः ।**
**उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥**

न्तराघटितस्यैव व्याप्यतावच्छेदकत्वात्। धूमप्रागभावत्वसंग्रहाय स्वसमानाधिकरणेति(१०) ॥

विरुद्धयोरिति। कपिसंयोगतदभावव्याप्यवत्त्वपरामर्शेऽपि न सत्प्रतिपक्षत्वमत उक्तम् विरुद्धयोरिति। तथाच स्वसाध्य(११)विरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषय इत्यर्थः ॥ ७६ ॥ ७७ ॥

साध्यशून्य इति। पक्षः पक्षतावच्छेदक(१२)विशिष्ट इत्यर्थः। तेन घटे गन्धसत्त्वेऽपि न क्षतिः। एवं (१३) मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि बोध्यम् ॥ ७८ ॥

इति श्रीविश्वनाथ-पञ्चानन-भट्टाचार्य्य-विरचितायां
सिद्धान्तमुक्तावल्यामनुमानखण्डम् ॥

---

वच्छिन्नविषयतावच्छेदकत्वपर्य्यवसितं वाच्यं, तेन धूमत्वस्य नीलधूमत्वानतिरेकेऽपि न क्षतिः, धूमत्वस्य नीलधूमत्वानवच्छिन्नाया धूमवानिति ज्ञानीयप्रकारताया अवच्छेदकत्वात् नीलधूमत्वस्य च तद्घटितत्वादिति भावः।

१०। अन्यथा तस्य व्याप्यतावच्छेदकीभूतधूमत्वघटितत्वेन तत्संग्रहो न स्यादिति भावः।

११। विरुद्धयोर्हेत्वोः परामर्श इति समापसारणायाह स्वसाध्येति। स्वं सत्प्रतिपक्षत्वेनाभिमतो हेतुः तत्साध्यविरुद्धो यः साध्याभाव इत्यर्थः।

१२। ननूत्पत्तिकालीनघट इत्यादिमूलमयुक्तं, तत्र पक्षे घटे गन्धशून्यत्वादत आह पक्षतावच्छेदकेति।

१३। कालस्येव देशस्यापि पक्षतावच्छेदकत्वे बाधसम्भवात्तत्प्रदर्शनेन न्यूनतां परिहर्त्तुमाह एवमिति।

**ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।**
**सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम् ॥७९॥**
**वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।**
**गवयादिपदानान्तु शक्तिधीरुपमाफलम् ॥ ८० ॥**

उपमितिं व्युत्पादयति ग्रामीणस्येति । यत्रारण्यकेन केनचिद् ग्रामीणं प्रति उक्तं गोसदृशो गवयपदवाच्य इति पश्चाच्च ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टस्तत्र गोसादृश्यदर्शनं (१) यत् जातं तदुपमितिकरणम्, तदनन्तरं गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं यत् जायते तदेव व्यापारः । तदनन्तरं तत्र गवयो गवयपदवाच्य इति ज्ञानं यत् जायते तदुपमितिः । न त्वयं गवयपदवाच्य इत्युपमितिः । गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् (२) ॥ ७९ ॥ ८० ॥

इति श्रीविश्वनाथ-पञ्चानन-भट्टाचार्य्य-विरचितायां
सिद्धान्तमुक्तावल्यामुपमानखण्डम् ॥

---

१ । सादृश्यदर्शनं—सादृश्यप्रत्यक्षं ।

२ । प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्यानन्तरवक्तव्यत्वमवसरः । अत चानुमानोपमानयोर्द्वयोरपि प्रत्यक्षोपजीवकत्वेऽप्यनुमानस्य बहुवादिसम्मतत्वेन निरसनीयाल्पवादिविप्रतिपत्तिकत्वेन सुगमतयानुमान एव प्रायशो व्युत्पित्सोः प्रथमतो जिज्ञासाजायत इति अनुमाननिरूपणेन प्रतिबन्धकीभूतजिज्ञासानिवृत्त्यावश्यवक्तव्यत्वमुपमानस्येत्यवसरसङ्गत्यानुमाननिरूपणानन्तरमुपमानं निरूपितं । न चोपमितेः प्रमाणान्तरत्व एव मानाभाव इति वाच्यं, चक्षुरादिव्यापारविगमेऽपि उपमितेरुत्पादेन चाक्षुषत्वाद्यसम्भवात् । नापि मानसत्वं मानसोत्तरमुपमिनोमीति प्रतीत्यापत्तेः उपमित्यनन्तरं साक्षात् करोमीतिप्रतीतेरनुदयेन तत्र प्रत्यक्षत्वसत्त्वे प्रमाणाभावाच्च अन्यथानुमितेरपि मानसत्वापत्तेः । नाप्यनुमितिः व्याप्त्यादिज्ञानं विनाप्युदयात् । न च शाब्दं पदज्ञानाजन्यत्वात् । नापि स्मृतिरननुभूतार्थस्य स्मरणायोगादिति ध्येयं ।

**पदज्ञानन्तु * करणं द्वारं तत्र पदार्थधीः।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी॥ ८१॥**

शाब्दबोधप्रकारं दर्शयति—पदज्ञानन्त्विति। न तु (१) ज्ञायमानं पदं करणम्, पदाभावेऽपि मौनिश्लोकादौ (२) शाब्दबोधात्। पदार्थधीरिति। पदजन्यपदार्थस्मरणं व्यापारः, अन्यथा (३) पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः। तत्रापि वृत्त्या पदजन्यत्वं बोध्यम्, अन्यथा घटादिपदात् समवायसम्बन्धेनाकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तेः। वृत्तिश्च शक्तिलक्षणान्यतरसम्बन्धः। अत्रैव (४) शक्तिज्ञानस्योपयोगः, पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्सम्बन्धेन स्मरणानुपपत्तेः। पदज्ञानस्य हि एकसम्बन्धिज्ञानविधयाऽर्थस्मारकत्वम्, शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः। सा चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा (५) आधुनिके (६) नाम्नि शक्तिरस्त्येव। एकादशेऽहनि

---

* उपजीव्योपजीवकसङ्गतिमभिप्रेत्याह पदज्ञानन्त्विति। तथाहि—अतिदेशवाक्यजन्यशाब्दबोधस्यैवोपमानत्वमिति प्राचीनमते उपमानप्रमाणस्यातिदेशवाक्यजन्यशाब्दप्रमाणजन्यत्वेन शब्दस्यार्थज्ञानजन्यत्वमिति मतेऽपि वाक्यार्थज्ञानरूपप्रयोगमूलभूतज्ञानजन्यत्वेन शब्दस्यैव-तन्मते प्रमाणत्वेन स्वरूपत एवोपजीव्योपजीवकभावः। शाब्दबोधस्य शक्तिज्ञानात्मकोपमितिजन्यत्वेन फलयोरप्युपजीव्योपजीवकभाव इत्यवधेयम्।

१। एवकारार्थकस्य मूलस्थतुशब्दस्य व्यवच्छेद्यं स्पष्टयति न तु ज्ञायमानमिति।

२। आदिना द्वित्वादिबोधकविजातीयहस्तचेष्टादेः परिग्रहः। तथाच मौनिश्लोकस्थले विजातीयहस्तचेष्टास्थले च शब्दोच्चारणाभावेन ज्ञायमानपदाभावाच्छाब्दबोधो न स्यात्? पदज्ञानस्य करणत्वमिति नवीनमते तु लिप्या हस्तचेष्टया च सङ्केतितपदज्ञानाद्भवति शाब्दबोध इति भावः।

३। अन्यथा—पदार्थज्ञानमात्रस्य व्यापारत्वे।

४। अत्रैव—पदजन्यपदार्थोपस्थितावेव।

५ यद्यपीश्वरेच्छाया ऐक्यात् घटपदाद्घटो बोद्धव्य इतीश्वरेच्छायाः पटेऽपि सत्त्वादतिप्रसङ्गः, एवं गङ्गापदजन्यबोधविषयत्वप्रकारकेच्छायास्तीरेऽपि सत्त्वेन शक्त्यैव तीरबोधोपपत्ते-

पिता नाम कुर्य्यादितीश्वरेच्छायाः सत्त्वात् (७)। आधुनिकसङ्केतिते (८) न शक्तिरिति सम्प्रदायः। नव्यास्तु ईश्वरेच्छा न शक्तिः, किन्तु इच्छैव। तेन आधुनिकसङ्केतितेऽपि शक्तिरस्त्येवेत्याहुः (९)। शक्तिग्रहश्च व्याकरणादितः। तथा हि—

"शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥"

धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति। क्वचित्तु सति बाधके त्यज्यतेऽपि, यथा—वैयाकरणैराख्यातस्य कर्त्तरि शक्तिरुच्यते। चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्याभेदान्वयः। तच्च गौरवात्त्यज्यते, किन्तु कृतौ शक्तिर्लाघवात् (१०)। कृतिश्चैत्रादौ प्रकारीभूय भासते। न च कर्त्तुरनभिधानाच्चैत्रादिपदानन्तरं तृतीया (११) स्यादिति वाच्यम्, कर्तृसंख्यानभिधानस्य तत्र (१२)

---

लक्षणोच्छेदापत्तिस्तथापि गङ्गापदवाच्यत्वव्यवहारस्य तीरेऽभावात् गङ्गादिपदजन्यबोधविषयत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छैव गङ्गादिपदानां शक्तिस्तीरादिनिष्ठविशेष्यताया गङ्गादिपदजन्यबोधविषयत्वप्रकारतानिरूपितत्वेऽपि न तस्यास्तादृशविषयतात्वेन प्रकारतानिरूपितत्वं, अपि तु शुद्धविषयतात्वेनेति नातिप्रसङ्गो न वा लक्षणोच्छेदप्रसङ्ग इति ध्येयम्।

६। आधुनिके पित्रादिभिरेकादशेऽहनि सङ्केतिते नाम्नीत्यर्थः नात "आधुनिकसङ्केतिते तु न शक्ति"रित्युत्तरग्रन्थविरोध इत्यवधेयम्।

७। एकादशाहकालीनपितृच्चारणविषयनामत्वेन सामान्यरूपेणेत्यर्थः।

८। आधुनिकमात्रसङ्केतिते नदीवृद्ध्यादिपदे।

९। मतद्वयेऽप्यपभ्रंशात्मकगगर्य्यादिपदे शक्तिभ्रमादेव बोध इत्यवधेयम्।

१०। कृतित्वजातेः शक्यतावच्छेदकत्वे लाघवादित्यर्थः।

११। अनभिहितेत्यधिकारीयेण कर्तृकरणयोस्तृतीयेत्यनेनानभिहितकर्त्तरि तृतीयाविधानादिति भावः।

१२। अत्र—तृतीयायां, तन्त्रत्वात्—प्रयोजकत्वात्।

तन्त्रत्वात्। संख्याभिधानयोग्यश्च (१३) कर्म्मत्वाद्यनवरुद्ध: (१४) प्रथमान्तपदोपस्थाप्य: कर्म्मत्यादीत्यस्ये(१५)तरविशेषणत्वतात्पर्य्याविषयत्वमर्थ: (१६)। तेन चैत्र इव मैत्रो गच्छतीत्यादौ न चैत्रे संख्यान्वय:। यत्र कर्म्मादौ न विशेषणत्वेतात्पर्य्यं तद्वारणाय प्रथमान्तेति (१८)। यद्वा (१९) धात्वर्थातिरिक्ताविशेषणत्वं प्रथमद-

---

१३। ननु कर्त्तृसंख्याभिधान एव किं प्रयोजकमित्याशङ्क्य तत्प्रयोजकं दर्शयति संख्याभिधानयोग्यश्चेति।

१४। पचति तण्डुल इत्यादौ कर्म्मत्वादिलाक्षणिकप्रथमान्तपदोपस्थाप्यतण्डुलादिव्युदासाय कर्म्मत्वाद्यनवरुद्ध इति।

१५। कर्म्मत्वाद्यनवरुद्धत्वं यदि द्वितीयादिकारकविभक्त्यर्थाविशेषणत्वं तदा चैत्र इव गच्छति मैत्र इत्यादौ चैत्रस्य इवार्थसादृश्य एव विशेषणत्वेन कारकविभक्त्यर्थकर्म्मत्वादावविशेषणत्वादाख्यातार्थसंख्याया मैत्र इव चैत्रेऽप्यन्वय: स्यात्, यदि च कर्म्मत्वाद्यनन्वितत्वं तदा पक्वमन्नं भुज्यतामित्यादौ पाककर्म्मत्वेनान्विते अन्ने आख्यातार्थसंख्याया अन्वयो न स्यादत: कर्म्मत्वाद्यनवरुद्धत्वं निर्व्वक्ति कर्म्मत्वादीत्यस्येति। तथाच कर्म्मत्वपदमितरपरं अनवरुद्धत्वञ्च विशेषणत्वेनाविवक्षितत्वम्। वस्तुतस्तु इतरत्वस्यापि न विवक्षा प्रयोजनाभावात्, एवञ्च समुदायस्यैव विशेषणत्वेन तात्पर्य्याविषयत्वमर्थ इति ध्येयम्।

१६। अविशेषणत्वं प्रकारताशून्यत्वं, तस्य च शाब्दबोधात् पूर्वं चैत्रादावपि सत्त्वात् चैत्र इव मैत्रो गच्छतीत्यादौ चैत्रेऽपि संख्यान्वयापत्ति:। न च चैत्रीयं सादृश्यमित्यवान्तरवाक्यार्थबोधस्य पूर्वं सत्त्वात् कथमविशेषणत्वं चैत्रस्येति वाच्यं, यत्र खलु कपोतन्यायेन बोधस्तत्र चैत्रीयं सादृश्यमित्यवान्तरवाक्यार्थबोधस्य पूर्वमभावादतोऽविशेषणत्वमुपेक्ष्य विशेषणत्वेन तात्पर्य्याविषयत्वपर्य्यन्तानुधावनम्।

१७। विशेषणत्वे—विशेषणत्वमात्रे, तथा च तण्डुलं पचतीत्यादौ यदि विशेषणत्वमुख्यविशेष्यत्वाभ्यां तण्डुलबोधे तात्पर्य्यं तत्र तण्डुले संख्यान्वयवारणाय प्रथमान्तेतीत्यर्थ:, चैत्र एव पचति चैत्रश्चैवं पचतीत्यादावेवकारार्थेऽन्यस्मिन् कर्म्मत्वादौ च चैत्रस्य विशेषणत्वात् संख्यान्वयानुपपत्त्या विशेषणत्वमात्रेण तात्पर्य्यविषयत्वस्य विवक्षणीयत्वात्। तथा च चैत्र एव पचतीत्यादौ विशेषणत्वमुख्यविशेष्यत्वाभ्यां तात्पर्य्यविषयत्वात् संख्यान्वयोपपत्तिरिति ध्येयम्।

१८। इदमुपलक्षणं चैत्रेण सुप्यत इत्यादौ धात्वर्थस्वापादौ संख्यान्वयवारणयापि प्रथमान्तपदोपस्थाप्यत्वस्यावश्यकत्वात्।

१९। द्वितीयदलस्य प्रकारान्तरेण प्रयोजनं वक्तुमन्यथा प्रथमदलार्थमाह यद्वेति।

त्वार्थः। तेन चैत्र इव मैत्रो गच्छतीत्यत्र चैत्रादेर्वारणम् (२०)। स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय च द्वितीयदलम्। तस्य द्वितीयान्तोपस्थाप्यत्वाद्वारणमिति (२१)। एवं व्यापारेऽपि न शक्तिर्गौरवात्। रथो (२३) गच्छतीत्यादौ स्वव्यापारे आश्रयत्वे (२४) वा लक्षणा। जानातीत्यादौ (२५) तु आश्रयत्वे नश्यतीत्यादौ प्रतियोगित्वे निरूढ़लक्षणा। उपमानाद्यथा शक्तिग्रहस्तथोक्तम्।

एवं कोषादपि शक्तिग्रहः। सति बाधके क्वचित् त्यज्यते। यथा नीलादिपदानां नीलरूपादौ नीलादिविशिष्टे च शक्तिः कोषेण व्युत्पादिता (२६) तथापि लाघवान्नीलादावेव शक्तिः। नीलादिविशिष्टे लक्षणेति (२७)।

एवमाप्तवाक्यादपि। यथा कोकिलः पिकपदवाच्य इत्यादिशब्दात् पिकादिशब्दानां कोकिले शक्तिग्रहः।

एवं व्यवहारादपि। यथा प्रयोजकवृद्धेन घटमानयेत्युक्तं तत्

---

२०। धात्वर्थातिरिक्ते सादृश्ये विशेषणत्वादिति भावः।

२१। अत्रापि कल्पे चैत्र एव पचतीत्यादौ चैत्रे संख्यान्वयत्वोपपादनाय धात्वर्थातिरिक्तविशेषणत्वभावेन तात्पर्य्याविषयत्वमेव विवक्षणीयमिति ध्येयम्।

२२। प्रकारसामान्यस्य व्यापारोऽर्थ इति मीमांसकमतं दूषयति गौरवादिति, जन्यताघटितस्य व्यापारत्वस्य जात्यपेक्षया गुरुत्वादिति भावः।

२३। नन्वाख्यातस्य न यत्नार्थकत्वं रथो गच्छतीत्यादौ तदभावेऽप्याख्यातप्रयोगादत आह रथ इत्यादि।

२४। रथो गच्छतीत्यादौ गमनानुकूलव्यापारस्य न बोधः, किन्तु गमनाश्रयत्वस्यैवेति नवीनमतमाश्रित्याह आश्रयत्वे वेति।

२५। आदिना इच्छति यतते इत्यादेः संग्रहः।

२६। गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीति कोषस्योभयत्र शक्तिग्राहकत्वादिति भावः।

२७। "गुणवचनान्मतुपो लुगिष्ट" इति स्मरणाल्लुप्तेन मतुपैव विशिष्टार्थसम्भवे कृतं लक्षणयेत्यपि वदन्ति।

श्रुत्वा प्रयोज्यवृद्धेन घट आनीत: तदवधार्य्य पार्श्वस्थो बालो घटानयनरूपं कार्य्यं घटमानयेति शब्दप्रयोज्यमित्यवधारयति। ततश्च घटं नय गामानय इत्यादौ आवापोद्वापाभ्यां घटादिपदानां कार्य्यान्वितघटादौ शक्तिं गृह्णाति। इत्थञ्च भूतले नीलो घट इत्यादिशब्दान्न शाब्दबोध: घटादिपदानां कार्य्यान्वितघटादिबोधे (२८) सामर्थ्यावधारणात् कार्य्यताबोधं प्रति च लिङादीनां सामर्थ्यात् (२९) तदभावान्न शाब्दबोध इति केचित् (३०)। तन्न। प्रथमत: कार्य्यान्वितघटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तस्य परित्यागौचित्यात्। अत एव (३१) चैत्र! पुत्रस्ते जात: कन्या ते गर्भिणी जाता इत्यादौ मुखप्रसादमुखमालिन्याभ्यां सुखदु:खे अनुमाय तत्कारणत्वेन परिशेषात् शाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयति। तथा च व्यभिचारात् (३२) कार्य्यान्विते न शक्ति:, न च तत्र तं पश्येत्यादिशब्दान्तरमध्याहार्य्यं मानाभावात्, चैत्र! पुत्रस्ते जातो मृतश्चेत्यादौ तदभावाच्च (३३)। इत्थञ्च लाघवादन्वितघटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति (३४)।

---

२८। साक्षात् परम्परया वा कार्य्यत्वान्वितविषयकशाब्दत्वावच्छिन्नं प्रतिपदत्वेन कारणतेति कार्य्यकारणभाव: पर्य्यवसित:। इयमेव च कार्य्यान्विते पदानामानुभविकी शक्ति:।

२९। कार्य्यताबोधं प्रति लिङादिपदानां स्वजन्यकार्य्यत्वोपस्थितिद्वारा हेतुत्वं। घटादिपदानां कार्य्यत्वानुभवं प्रति हेतुत्वेऽपि घटादिपदेषु कार्य्यत्वस्मारकशक्त्यभावेन स्मारकशक्त्या कार्य्यत्वोपस्थापकलिङादिपदाभावान्न भूतले घट इत्यादित: शाब्दबोध इति भाव:।

३०। केचित्—प्रभाकरा:

३१। अत एव—कार्य्यत्वाविषयकबोधं प्रति पदानां हेतुत्वादेव।

३२। चैत्र! पुत्रस्ते जात इत्यादिपदै: कार्य्यत्वाविषयकबोधस्यापि जनने घटादिपदै: कार्य्यताविषयक एव बोधो जन्यत इति नियमे व्यभिचारादित्यर्थ:।

३३। तं पश्येत्यादि कार्य्यताबोधकपदाध्याहारसम्भवाच्चेत्यर्थ:।

३४। भट्टमतं प्रक्षिपन् स्वमतमुपसंहरति इत्थञ्चेति।

एवं वाक्यशेषादपि शक्तिग्रहः । यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य (३५) दीर्घशूकविशेषे आर्य्याणां प्रयोगः कङ्गौ च म्लेच्छानाम्, तत्र (३६) हि यथान्या ओषधयो म्लायन्त अथैते मोदमाना इवोत्तिष्ठन्ति ।

वसन्ते सर्वशस्यानां जायते पत्रशातनम् ।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥

इति वाक्यशेषात् दीर्घशूके शक्तिर्निर्णीयते । कङ्गौ तु शक्तिभ्रमात्प्रयोगः । नाना(३७)शक्तिकल्पने गौरवात् । हर्य्यादिपदे (३८) तु विनिगमकाभावा(३९)न्नानाशक्तिकल्पनम् ॥ एवं विवरणादपि शक्तिग्रहः । विवरणन्तु तत्समानार्थपदान्तरेण तदर्थकथनम् । यथा घटोऽस्तीत्यस्य कलसोऽस्तीत्यनेन विवरणाद्घटपदस्य कलसे शक्तिग्रहः । एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्पते (४०) ।

एवं प्रसिद्धपदसान्निध्यादपि शक्तिग्रहः (४१) । यथा इह सहकारतरौ मधुरं पिको रौतीत्यादौ पिकपदस्य कोकिले शक्तिग्रह इति ।

---

३५ । अस्य च देहलीदीपन्यायेन "दीर्घशूके शक्तिर्निर्णीयते" इत्यनेनापि सम्बन्धः ।

३६ । तादृशशिष्टव्यवहारेण कङ्गौ दीर्घशूके वा यवपदस्य शक्तिरिति सन्देहे सति ।

३७ । नन्वस्तु यवपदस्य वाक्यशेषाद्दीर्घशूके शक्तिः, कङ्गावपि शक्तिसत्त्वे बाधकाभाव इत्यत आह नानेति ।

३८ । कथं तर्हि हर्य्यादिपदे नानाशक्तिकल्पनेत्याह हर्य्यादिपदे त्विति ।

३९ । तत्र कोषस्योभयत्र तुल्यत्वात् प्रकृते च वाक्यशेषस्यैव विनिगमकत्वादिति भावः ।

४० । न च विवरणस्य कथं शक्तिग्राहकत्वं तद्वाचकपदाभावादिति वाच्यं आख्यातं यत्नत्वविशिष्टे शक्तं यत्नत्वविशिष्टे शक्तिं करोति प्रतिपादितार्थप्रतिपादकत्वादित्यनुमानविधया तस्य शक्तिग्राहकत्वात् ।

४१ । प्रसिद्धार्थकपदसमभिव्याहारोऽप्यनुमानविधयैव शक्तिग्राहकः, तथाहि—इहेत्यादिवाक्यादिहाव वृक्षे मधुररावकर्त्ता पिकपदवाच्य इत्येव बोधः । पिकपदस्य पूर्व्वं शक्तिग्रहाभावात्

तत्र जातावेव (४२) शक्तिर्न तु व्यक्तौ व्यभिचारादा(४३)नन्त्याच्च, व्यक्तिं विना च जातिभानस्यासम्भवा(४४)द्व्यक्तेरपि भानमिति केचित्। तन्न। शक्तिं विना व्यक्तिभानानुपपत्ते: (४५)। न च व्यक्तौ लक्षणा (४६)। अनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात्। न च व्यक्तिशक्तावानन्त्यम्। सकलव्यक्तावेकस्या (४७) एव शक्ते: स्वीकारात्। न चाननुगम:, (४८) गोत्वादेरेवानुगमकत्वात् (४९)। किञ्च (५०) गौ: शक्येति शक्तिग्रहो यदि तदा व्यक्तौ शक्ति:। यदि

---

कोकिलदर्शनानन्तरं कोकिल: पिकपदवाच्य:, सहकारतरौ मधुररावकर्तृत्वादित्यनुमानादेव शक्तिग्रह इति। न च तिङर्थधर्म्मिणि नामार्थान्वयस्याव्युत्पन्नत्वान्नेदं शक्तिग्रहस्योदाहरणमिति वाच्यं "यो य: शूद्रस्य पचति द्विजोऽन्नं सोऽतिनिन्दित इत्यादौ" तिङर्थधर्म्मिणि तथान्वयदर्शनेन तादृशनियमस्यासिद्धेरिति ध्येयम्।

४२। प्रसङ्गसङ्गत्या परमतनिराकरणपूर्व्वकं स्वमते जातिविशिष्टे शक्तिं व्यवस्थापयितुं मीमांसकमतमाह जातावेवेति।

४३। यस्यां कस्याञ्चिद्व्यक्तौ शक्ति: सर्व्वासु वेति विकल्प्याद्ये दूषयति व्यभिचारादिति। अगृहीतशक्तिकव्यक्तावपि शाब्दबोधोदयेन तत्र शक्तिज्ञानाभावाद्व्यभिचार इति भाव:। द्वितीये दोषमाह आनन्त्यादिति, व्यक्तिभेदेन शक्तिभेदात् शक्त्यानन्त्यमित्यर्थ:।

४४। जातिभासकसामग्र्या एव व्यक्तिभासकत्वादिति भाव:।

४५। पदजन्यपदार्थोपस्थिते: शाब्दबोधं प्रति हेतुतया व्यक्तिशक्तिं विना तद्भानानिर्व्वाहादिति भाव:।

४६। तावतैव वृत्त्या पदजन्यपदार्थोपस्थितेर्निर्व्वाहादिति भाव:।

४७। ईश्वरेच्छायास्तस्या एकत्वादिति भाव:।

४८। गोव्यक्तीनामननुगततया विषयतासम्बन्धेन शक्तिज्ञानकारणतायामवच्छेदकत्वासम्भव इत्यर्थ:।

४९। तथाच गोशाब्दबोधे गोत्वविशिष्टविषयकशक्तिज्ञानत्वेन हेतुत्वान्नोक्तदोष इति भाव:।

५०। ननु सर्व्वत्र पदजन्यपदार्थोपस्थितेर्हेतुत्वे मानाभाव: कथमन्यथा शाब्दबोधे गोविशेष्यकगोत्वप्रकारकसंसर्गस्य भानं, नचैवं पदानुपस्थितघटादेरपि भानापत्तिरिति वाच्यं, बोधं प्रति गोत्वशक्तिज्ञानत्वेन हेतुत्वस्योक्तत्वादेतादृशातिप्रसङ्गविरहादित्यत आह किञ्चेति।

तु गोत्वं शक्यमिति शक्तिग्रहस्तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधस्य न स्यात्, समानप्रकारत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शाब्दबोधं प्रति च हेतुत्वात्। किञ्च (५१) गोत्वे यदि शक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यम्। गोत्वत्वन्तु गवेतरासमवेतत्वे सति सकलगोसमवेतत्वम्। तथाच गोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात् तत्रैव गौरवम्। तस्मात् (५२) तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ (५३) विश्राम्यतीति।

शक्तं पदं तच्चतुर्व्विधं—क्वचिद्यौगिकं क्वचिद्रूढ़ं क्वचिद्योगरूढ़ं क्वचिद्यौगिकरूढ़म्। तथाहि—यत्रावयवार्थ एव बुध्यते तद्यौगिकम्, यथा पाचकादिपदम्। यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बुध्यते तद्रूढ़म्, यथा गोमण्डलादिपदम्। यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढ़म्, यथा पङ्कजादिपदम्, तथाहि—पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृरूपमर्थं बोधयति, समु-

---

५१। ननु कार्य्यत्वाद्युपाधिप्रकारकशाब्दबोधस्थले तादृशसमानप्रकारकत्वस्य तदनुमतत्वेऽपि जातिप्रकारकशाब्दबोधस्थले तादृशसमानप्रकारकत्वं न तदनुमतमत आह किञ्चेति।

५२। स्वमतमुपसंहरति तस्मादिति।

५३। अत्र च परस्परपरित्यागेन परस्परस्य बोधाभावात् त्रिष्वेकैव शक्तिः एतद्बोधायैव सूत्रे जात्याकृतिव्यक्तयः पदार्थ इत्येकवचनमिति सम्प्रदायः, नव्यास्तु संस्थानानुपस्थितावपि गोत्वादिना गवाद्यन्वयबोधात् जातिविशिष्टव्यक्तावेव शक्तिः, संस्थाने च पृथगेव शक्तिः, व्युत्पत्तिवैचित्र्याच्च संस्थानव्यक्त्योरेकपदार्थयोरपि परस्परमन्वयबोधः, सौत्रं पदार्थ इत्येकवचनन्तु जातिव्यक्त्योरेकशक्तिलाभायैवेत्याहुः।

५४। सामान्यतो यौगिकार्थबुद्धौ रूढ़िज्ञानस्य प्रतिबन्धकत्वे पद्मेऽपि योगार्थस्य पङ्कजनिकर्तृत्वस्य बोधो न स्यादित्यत आह केवलेति। तथाच तत्पदरूढ्यर्थतावच्छेदकावच्छिन्नविशेष्यत्वानिरूपिततत्पदयोगार्थनिष्ठविषयताकबोधं प्रति रूढ़िज्ञानस्य प्रतिबन्धकत्वलाभेन पद्मधर्म्मिकपङ्कजनिकर्तृत्वबुद्धेः प्रतिबध्यतावच्छेदकानाक्रान्तत्वान्नानुपपत्तिरिति ध्येयम्।

दायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति। न च केवलावयवशक्त्या कुमुदे प्रयोगः स्यादिति वाच्यम्, रूढ़िज्ञानस्य केवल(५४)यौगिकार्थज्ञानप्रतिबन्धकत्वादिति प्राञ्चः। वस्तुतस्तु (५५) समुदायशक्त्योपस्थितपद्मेऽवयवार्थपङ्कजनिकर्त्तुरन्वयो भवति, सान्निध्यात् (५६)। यत्र रूढ्यर्थस्य बाधः (५७) प्रतिसन्धीयते (५८) तत्र लक्षणया कुमुदादेर्बोधः। यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्य्यज्ञानं पद्मत्वस्य च बाधस्तत्रावयवशक्तिमात्रेण (५९) निर्वाह इत्यप्याहुः। यत्र तु स्थलपद्मादाववयवार्थबाधस्तत्र समुदायशक्त्या च पद्मत्वेन रूपेण बोधः। यदि तु स्थलपङ्कजं विजातीयमेव तदा लक्षणयैव (६०)। यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण (६१) बोधस्तद्यौगिकरूढ़म्, यथोद्भिदादिपदम्। तत्र हि ऊर्द्ध्वभेदनकर्त्ता तरुगुल्मादिरपि बुध्यते यागविशेषोऽपीति (६२)॥ ८१॥

---

५५। विरोधिविषयकज्ञानस्य प्रतिबन्धकत्वं जनकज्ञानविघटकत्वे नैवेति नियमभङ्गमस्वरसं प्राञ्च इत्यनेन सूचयन् मणिकारमतमाह वस्तुतस्त्विति।

५६। रूढार्थस्य सन्निहितोपस्थितिकत्वादित्यर्थः।

५७। रूढार्थबाध इति तु रूढार्थयोगार्थयोः परस्परान्वयबोधसामग्रीविरहस्योपलक्षणं तेन रूढार्थबाधप्रतिसन्धानासत्त्वेऽपि यत्र कारणान्तरविरहस्तत्रापि लक्षणया कुमुदादेर्बोधो भवत्येवेति।

५८। कुमुदत्वेन बोधे च तात्पर्य्यमिति पूरणीयम्।

५९। मात्रपदेन लक्षणानादरः सूचितः। निर्व्वाहः—पङ्कजनिकर्त्तृत्वेन कुमुदशाब्दबोधनिर्व्वाह इत्यर्थः।

६०। रूढार्थतावच्छेदकपद्मत्वजातेस्तत्राभावेन रूढ्या तद्बोधनासम्भवादिति भावः।

६१। स्वातन्त्र्येण—अर्थान्तरमविषयीकृत्येत्यर्थः। इदञ्च योगरूढ्व्यावृत्त्यर्थमुक्तम्।

६२। उद्भिदा यजेत पशुकाम इत्यादावित्यर्थः।

**लक्षणा शक्यसम्बन्धस्तात्पर्य्यानुपपत्तितः।**
**आसत्तियोग्यताकाङ्क्षातात्पर्य्यज्ञानमिष्यते॥ ८२॥**

लक्षणा शक्यसम्बन्ध इत्यादि। गङ्गायां (१) घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्य्यानुपपत्तिर्वा (२) यत्र प्रतिसन्धीयते तत्र लक्षणया तीरस्य बोधः। सा च शक्यसम्बन्धरूपा। तथाहि—प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणम्। ततः शाब्दबोधः। परन्तु यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा यष्टीः प्रवेशयेत्यत्र लक्षणा न स्यात्, यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात्। तेन यष्टिप्रवेशे भोजनतात्पर्य्यानुपपत्त्या यष्टिधरे लक्षणा। एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके लक्षणा, सर्वतो दधिरक्षायास्तात्पर्य्यविषयत्वात्। एवं छत्रिणो यान्तीत्यादौ छत्रिपदस्यैकसार्थवाहित्वे (३) लक्षणा, इयमेवा(४)जहत्स्वार्था लक्षणेत्युच्यते। एकसार्थवाहित्वेन रूपेण छत्रितदन्ययोर्बोधात्। यदि चान्वयानुपपत्तिर्लक्षणाबीजं स्यात् तदा क्वचिद्गङ्गापदस्य तीरे क्वचिद्घोषपदस्य

---

१। लक्षणा द्विविधा, जहत्स्वार्था अजहत्स्वार्था च, तत्राद्यां दर्शयति गङ्गायामिति।

२। यष्टीः प्रवेशयेत्यादावन्वयानुपपत्तिविरहेऽपि लक्षणादर्शनादाह तात्पर्य्यानुपपत्तिर्व्वेति।

३। एकसार्थवाहित्वे—एकसार्थवाहित्वविशिष्टे। एकसार्थवाहित्वञ्च एकसार्थ एव मत्वेकसार्थगन्तृत्वं, उद्देश्यतावच्छेदकविधेययोरैक्येऽभेदान्वयस्याव्युत्पन्नतया यान्तीत्यस्यानन्वयापत्तेः। छत्रिपदस्य लक्षणाभिधानन्तु वाक्यलक्षणावादिवैयाकरणादिमताभिप्रायेण अन्यथा तद्धितप्रत्ययान्तछत्रिपदस्य प्रकृतिप्रत्ययसमुदायरूपत्वेन वाक्यतया तत्र लक्षणा न स्यात्। न्यायमते तु छत्रपदस्यैव सार्थवाहित्वे लक्षणा प्रत्ययार्थश्च सम्बन्धी, तथाचैकसार्थवन्तो गच्छन्तीत्यन्वयबोध इति ध्येयम्।

४। इयमेव—काकपदस्य दध्युपघातके छत्रिपदस्य एकसार्थवाहित्वे लक्षणेत्यर्थः।

मत्स्यादौ लक्षणेति नियमो न स्यात् । इदन्तु बोध्यं शक्यार्थसम्बन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीरबोधः । यदि तु गङ्गातीरत्वेन रूपेण गृहीतस्तदा तेनैव (५) रूपेण स्मरणम् । अत एव (६) लक्ष्यतावच्छेदके न लक्षणा, तत्प्रकारबोधस्य तत्र लक्षणां विनाप्युपपत्तेः । परन्तु एवंक्रमेण शक्यतावच्छेदकेऽपि शक्तिर्न स्यात्, तत्प्रकारकशक्यार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य सुवचनत्वादिति विभावनीयम् ।

यत्र (७) तु शक्यार्थस्य परम्परा सम्बन्धरूपा (८) लक्षणा सा लक्षितलक्षणेत्युच्यते, यथा द्विरेफादिपदे रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते, भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायत इति । तत्र लक्षितलक्षणा । किन्तु (९) लाक्षणिकं पदं नानुभावकम् । लाक्षणिकार्थस्य (१०) शाब्दबोधे तु पदान्तरं (११) कारणम् । शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वित (१२) स्वशक्यार्थशाब्दबोधं प्रति पदानां

---

५ । तेनैव—गङ्गातीरत्वेनैव । गङ्गातीरत्वेन चेल्लक्षणा तदेयमप्यजहत्स्वार्थैव, तीरत्वेन लक्षणायान्तु जहत्स्वार्थत्वमित्यवधेयम् ।

६ । अत एव—तद्धर्मविशिष्टलक्षणाग्रहस्य तेन रूपेणोपस्थितिशाब्दबोधौ प्रति हेतुत्वादेव ।

७ । लक्षितलक्षणाया आधिक्यमाशङ्क्य जहत्स्वार्थलक्षणायामन्तर्भावमाह यत्रत्विति ।

८ । स्वशक्यरेफद्वयघटितपदवाच्यत्वरूपेत्यर्थः ।

९ । ननु तच्छाब्दबोधे तच्छक्तपदज्ञानत्वेन हेतुत्वाल्लाक्षणिकशाब्दबोधः कथं स्यादित्यत आह किन्त्विति ।

१० । ननु तर्हि लाक्षणिकार्थस्य कथं शाब्दबोधे भानमित्याशङ्क्य लाक्षणिकपदसमभिव्याहृतशक्तपदान्तरमेव लाक्षणिकार्थान्वितस्वार्थशाब्दबोधं प्रति कारणमिति शक्तपदान्तर एव शाब्दबोधे लाक्षणिकार्थस्यापि भानमिति समाधत्ते लाक्षणिकार्थस्येति ।

११ । पदान्तरं—समभिव्याहृतं शक्यं पदं ।

१२ । शक्तिलक्षणान्यतरसम्बन्धेन य इतरपदार्थस्तदन्वितेत्यर्थः । क्रमतः पशुरित्यादिसर्वलाक्षणिकस्थलेऽपि शाब्दबोधस्यानुभवसिद्धतया लाक्षणिकस्याप्यनुभावकत्वमिति नव्याः ।

सामर्थ्यावधारणात् वाक्ये (१३) तु शक्तेरभावाच्छक्यसम्बन्धरूपा लक्षणाऽपि नास्ति। यत्र गभीरायां नद्यां घोष इत्युक्तं तत्र नदीपदस्य नदीतीरे लक्षणा, गभीरापदार्थस्य नद्या सहाभेदेनान्वयः, क्वचि(१४)देकदेशान्वयस्य स्वीकृतत्वात्। यदि तत्रैकदेशान्वयोऽपि न स्वीक्रियते तदा नदीपदस्य (१५) गभीरनदीतीरे लक्षणा। गभीरापदं तात्पर्य्यग्राहकम्। बहुव्रीहावप्येवम् (१६)। तत्र हि चित्रगुपदादौ यद्येकदेशान्वयः स्वीक्रियते तदा गोपदस्य गोस्वामिनि लक्षणा, गवि चित्राभेदान्वयः। यदि त्वेकदेशान्वयो न स्वीक्रियते (१७) तदा गोपदस्य चित्रगोस्वामिनि लक्षणा। चित्रपदं तात्पर्य्यग्राहकम्। एवमारूढ़वानरो वृक्ष इत्यत्र वानरपदे वानरारोहणकर्म्मणि लक्षणा। आरूढ़पदञ्च तात्पर्य्यग्राहकम्। एवमन्यत्रापि।

तत्पुरुषे तु पूर्वपदे लक्षणा। तथा हि राजपुरुष इत्यादौ राजपदार्थेन पुरुषपदार्थस्य साक्षान्नान्वयः, निपाता(१८)तिरिक्तनामार्थयो-

---

तस्य सर्व्वलाक्षणिकत्वञ्च कुमतिपदेन कुमतिविशिष्टस्य पशुपदेन च पशुसदृशस्य लक्षणयोपस्थापनादित्यवधेयं।

१३। ननु शक्यसम्बन्धो न लक्षणा तथा सति वाक्यस्य शक्त्याप्रसिद्धा तत्र लक्षणा न स्यादिति मीमांसकाक्षेपमिष्टापत्त्या निराकुरुते वाक्ये त्विति।

१४। क्वचित्—चैत्रस्य गुरुकुलमित्यादौ।

१५। न च विनिगमनाविरहेण गभीरपदस्य लक्षणा नदीपदं तात्पर्य्यग्राहकमित्यस्यापि वक्तुं शक्यतया कथं नदीपदमात्रे लक्षणाभिधानमिति वाच्यं प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेरुत्तरपद एव लक्षणाया युक्तत्वात्।

१६। एवं—अवयवे लक्षणैव न तु वाक्ये लक्षणेत्यर्थः।

१७। गोधर्म्मिकान्वयबोधे गोधर्म्मिकवृत्तिज्ञानस्य हेतुताया आवश्यकत्वात् अन्यथा चित्रव्रजोऽस्तीत्यादावपि व्रजपदार्थस्य गोस्थानरूपस्यैकदेशे गवि चित्रान्वयप्रसङ्गात्। यद्यपि घटशून्यमित्यादावेकदेशान्वयो दृश्यते तथापि तादात्म्येन तथान्वयो नेष्यत इति हृदयम्।

१८। निपातपदमव्ययस्याप्युपलक्षणं तेन चन्द्र इवेत्यादाविवार्थसादृश्ये चन्द्रस्य प्रतियोगितयान्वयोपपत्तिः।

भेदेनान्वयबोधस्याव्युत्पन्नत्वात्। अन्यथा (१९) राजा पुरुष इत्यत्रापि तथान्वयबोध: (२०) स्यात्। पटो न घट इत्यादौ घटपटाभ्यां नञ: साक्षादेवा(२१)न्वयात् निपातातिरिक्तेति। नीलो घट इत्यादौ नामार्थयोरभेदसम्बन्धेनान्वयाद्भेदेनेति। न च राजपुरुष इत्यादौ लुप्तविभक्ते: स्मरणं कल्प्यमिति (२२) वाच्यम्। अस्मृतविभक्तेरपि ततो बोधोदयात्। तस्मात् राजपदादौ राजसम्बन्धिनि लक्षणा। तस्य च पुरुषेण सहाभेदान्वय:।

द्वन्द्वे तु धवखदिरौ छिन्धीत्यादौ धव: खदिरश्च विभक्त्यर्थद्वित्वप्रकारेण बुध्यते तत्र न लक्षणा। न च साहित्ये (२३) लक्षणेति वाच्यम्, साहित्यशून्ययोरपि (२४) द्वन्द्वदर्शनात्। न च एकक्रियान्वयित्वरूपं साहित्यमस्तीति वाच्यम्। क्रियाभेदेऽपि धवखदिरौ छिन्धीत्यादिदर्शनात्। साहित्यस्याननुभवाच्च (२५)। अत

---

१९। अन्यथा—अव्ययातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्वीकारे।

२०। तथान्वयबोध:—भेदेनान्वयबोध:।

२१। साक्षादेव—प्रत्ययार्थमद्वारीकृत्यैव, विभक्त्यर्थभिन्नसम्बन्धेनैवेति यावत्। भूतले घट इत्यादावाधेयतासंसर्गेणापि घटभूतलयोरन्वयात् साक्षादित्यस्यापि व्युत्पत्तौ निवेशादिति भाव:।

२२। तथा चात्रापि प्रत्ययार्थद्वारैव राजपुरुषयोरन्वयान्नोक्तव्युत्पत्तिविरोध इत्याशय:।

२३। धवखदिरावित्यत्र धवत्वं खदिरत्वञ्च प्रत्येकं नोद्देश्यतावच्छेदकं सुपामुद्देश्यतावच्छेदकव्याप्यसंख्याबोधकत्वस्याकाङ्क्षावित्ति वाक्यप्रामाण्यापत्तिभिया क्लृप्तत्वेन धवद्वयस्य खदिरद्वयस्य वा बोधापत्ते:। परन्तु खदिरपदस्य धवखदिरसाहित्याश्रये लक्षणोपगम्यते, एवञ्च उद्देश्यतावच्छेदकसाहित्यव्याप्यत्वं न धवद्वयवृत्तिद्वित्वस्य न वा खदिरद्वयवृत्तिद्वित्वस्य अपि तु धवखदिरोभयवृत्तिद्वित्वस्येति मीमांसकमतं शङ्कते न च साहित्य इति साहित्याश्रय इत्यर्थ:।

२४। सहवृत्तित्वं साहित्यं लक्ष्यमेकक्रियान्वयित्वं वेति विकल्प्याद्यं दूषयति साहित्यशून्ययोरपीति।

२५। वस्तुगत्या क्रियान्वयित्वस्य धवखदिरयो: सत्त्वेऽपि शाब्दबोधविषयत्वादित्यर्थ:। इदमुपलक्षणं चैत्रमैत्रौ गच्छत इत्यादौ चैत्रादिपदस्य यदि साहित्यविशिष्टे लक्षणा तदा साहित्यस्य व्यासज्यवृत्तितया तदवच्छेदेनाव्यासज्यवृत्तिगमनकर्तृत्वस्यान्वयासम्भव इत्यपि बोध्यम्।

एव राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्र लक्षणाभावात् द्वन्द्व आश्रीयते। तस्मात् साहित्यादिकं नार्थः। किन्तु वास्तवो भेदो यत्र तत्र द्वन्द्वः। न च नीलघटयोर्भेद इत्यादौ (२६) कथमिति वाच्यम्। तत्र नीलपदस्य नीलत्वे घटपदस्य घटत्वे लक्षणा (२७)। अभेदः (२८) इत्यस्याश्रयाभेद इत्यर्थात्।

समाहारद्वन्द्वे तु यदि (२९) समाहारोऽप्यनुभूयत इत्युच्यते तदाऽहिनकुलमित्यादौ परपदेऽहिनकुलसमाहारे लक्षणा। पूर्वपदं तात्पर्य्यग्राहकम्। न च भेरीमृदङ्गं वादयेत्यत्र कथं समाहारस्यान्वयः अपेक्षाबुद्धिविशेषरूपस्य तस्य वादनासम्भवादिति (३०) वाच्यम्। परम्परासम्बन्धेन (३१) तदन्वयात्। एवं पञ्चपूलीत्यादावपि। परे तु (३२) अहिनकुलमित्यादौ अहिर्नकुलश्च बुध्यते। प्रत्येकमेकत्वान्वयः। समाहारसंज्ञा (३४) च यत्र एकत्वं नपुंसकत्वं प्राणितूर्य्येत्यादिसूत्रेणोक्तं तत्रैव (३५)। अन्यत्रैकवचनमसाध्विति

---

२६। आदिपदेन प्रमाणप्रमेयेत्यादिसूत्रपरिग्रहः।

२७। तथाच नीलत्वघटत्वयोर्भेदसत्त्वाद्द्वन्द्व इति भावः।

२८। नन्वेवमभेद इत्यसङ्गतं नीलत्वघटत्वयोरभेदाभावादित्यत आह—अभेद इत्यस्येति।

२९। वस्तुतस्त्वहिनकुलमात्रप्रतीतेर्नोत्तरपदे समाहारलक्षणा नवा शक्तिरित्यभिप्रेत्योक्तं यद्यीति।

३०। अभिघाताख्यसंयोगावच्छिन्नक्रियाया एव वादनपदार्थतया धात्वर्थतावच्छेदकीभूतताद्दशाभिघाताख्यसंयोगस्य समाहारेऽसम्भवेन वादनकर्म्मत्वासम्भवादित्यर्थः।

३१। परम्परासम्बन्धेन—स्वाश्रयवृत्तित्वरूपेण, तदन्वयात् वादनकर्म्मत्वान्वयात्।

३२। मध्यमतमाह—परे त्विति।

३३। ननु यदि समाहारो न बुध्यते तदैकत्वस्य कुत्रान्वयः समाक्रियमाणयोरेकत्वाभावादत आह—प्रत्येकमिति।

३४। ननु समाहारबोधकत्वाभावे कथं तस्य समाहारसंज्ञेत्यत आह—समाहारसंज्ञेति।

३५। तथाच पारिभाषिकीव सा अन्वर्थत्वेऽन्यत्रातिप्रसङ्गादिति भावः।

वदन्ति। पितरौ श्वशुरावित्यादौ पितृपदे जनकदम्पत्योः श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा (३७) एवमन्यत्रापि। घटा इत्यादौ न लक्षणा (३८) घटत्वेन रूपेण नानाघटोपस्थितिसम्भवात्।

कर्म्मधारयस्थले तु नीलोत्पलमित्यादौ अभेदसम्बन्धेन नीलपदार्थ उत्पलपदार्थे प्रकारः। तत्र न लक्षणा। अत एव निषादस्थपतिं याजयेदित्यत्र न तत्पुरुषः लक्षणापत्तेः, किन्तु कर्म्मधारयो लक्षणाभावात्। न च निषादस्य सङ्करजातिविशेषस्य वेदानधिकारात् याजनासम्भव इति वाच्यम्, निषादस्य विद्याप्रयुक्तेस्तत (३९) एव कल्पनात्। लाघवेन मुख्यार्थस्यान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवतयाऽदोषत्वादिति। उपकुम्भम् अर्द्धपिप्पलीत्यादौ परपदे तत्सम्बन्धिनि लक्षणा पूर्वपदार्थप्रधानतया चान्वयबोध (४०) इति। इत्यञ्च (४१) समासे न क्वापि शक्तिः। पदशक्त्यैव (४२) निर्वाहादिति॥ ८२॥

---

३६। ननु ताद्दशसंज्ञायाः किं प्रयोजनमत आह—अन्यथेति, समाहारातिरिक्तद्वन्द्व इत्यर्थः। तथाच नित्यैकवचनक्लीवलिङ्गत्वादिपदसंस्कारार्थत्वान्न तस्या वैयर्थ्यमिति भावः।

३७। एकस्य चैवादेः पितृद्वयासम्भवेन तत्र विरूपैकशेषं विना गत्यभावादिति भावः। विरूपैकशेषत्वेऽपि तत्र लुप्तमावादिपदस्मरणेनैव शाब्दबोधान्न लक्षणेत्यन्ये।

३८। बहुत्वान्वययोग्यानेकोपस्थितेः शक्तित एव सम्भवादिति भावः।

३९। तत एव—श्रुतिबोधितयाजनानुपपत्त्यैव। न चैवं स्त्रीशूद्रौ नाधीयेतामिति वेदविरोधः तेन निषादस्य यागोपयुक्ताध्ययनेतराध्ययनस्य निषेधादिति ध्येयम्।

४०। कुम्भपदलक्षितस्य कुम्भपदसम्बन्धिन उपपदार्थसमीपेऽभेदान्वयात् कुम्भसम्बन्धभिन्नं समीपमित्युपपदार्थविशेष्यकोऽन्वयबोध इत्यर्थः। ननु अर्द्धपिप्पलीति तत्पुरुषे शक्तिनिराकरणं कथं न पुनरुक्तं तत्पुरुष एव तन्निराकरणादिति चेन्न पूर्व्वमुत्तरपदार्थप्रधानराजपुरुषादौ तन्निराकरणं पूर्व्वपदे लक्षणया इह च पूर्व्वपदार्थे प्रधाने अर्द्धपिप्पल्यादितत्पुरुषे उत्तरपदलक्षणया तन्निराकरणमिति भेदेन पौनरुक्त्यभावात्।

४१। वैयाकरणमतं दूषयति—इत्थञ्चेति।

४२। समासघटकीभूतपदशक्तिलक्षणाभ्यामित्यर्थः।

कारणं सन्निधानन्तु पदस्यासत्तिरुच्यते ।
पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिता ॥८३॥

आसत्तिर्योग्यतेत्यादि । आसत्तिज्ञानं (४३) योग्यताज्ञानम् आकाङ्क्षाज्ञानं तात्पर्य्यज्ञानञ्च शाब्दबोधे कारणम् । तत्रासत्तिपदार्थमाह । सन्निधानन्त्विति । यत्पदार्थस्य (४४) यत्पदार्थेनान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः(४५) शाब्दबोधे कारणम् । तेन(४६) गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ न शाब्दबोधः । नीलो घटो द्रव्यं पट इत्यादावासत्तिभ्रमाच्छाब्दबोधः (४७) । आसत्तिभ्रमा-(४८) च्छाब्दभ्रमाभावेऽपि न क्षतिः । ननु(४९) यत्र छत्री कुण्डली

---

४३। गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ गिरिपदाग्निमत्पदयोरव्यवधानभ्रमेण शाब्दबोधोदयेन व्यभिचारात् स्वरूपसत्यासत्तेः कारणत्वं न सम्भवतीति मूलस्थमासत्तिपदं तज्ज्ञानपरतया व्याचष्टे आसत्तिज्ञानमिति। आसत्तियोग्यतेत्यादि विसर्गशून्यपाठे तु मूलतः स्वारसिक एव ज्ञानस्य लाभसम्भव इत्यवधेयम् ।

४४। ननु सन्निधानन्तु पदस्यासत्तिरुच्यत इति मूलोक्तस्यासत्तिलक्षणस्य गिरिर्भुक्तमित्यत्रातिव्याप्तिस्तत्रापि गिरिपदभुक्तपदयोरव्यवधानसत्त्वादतो व्याचष्टे यत्पदार्थस्येति ।

४५। तादृशपदयोरव्यवधानं आसत्तिस्तदुपस्थितिः कारणमित्यर्थः। तथाच गिरिपदार्थोऽग्निमत्पदार्थयोरेवान्वयस्य तात्पर्य्यविषयतया तयोरव्यवधानाभावान्नातिव्याप्तिरिति भावः।

४६। तेन—एतादृशयत्तत्पदगर्भासत्तिनिर्व्वचनेन ।

४७। नीलपदार्थपटपदार्थयोरन्वयस्य तात्पर्य्यविषयत्वेन तयोः शाब्दबोध इत्यर्थः। तथाच तत्र भ्रमाच्छाब्दबोधमात्रं न तु तत्रासत्तिरपीति भावः। मयोक्ताया आसत्तेः श्लोकेऽभावात् विशेषदर्शनेन पदाव्यवधानभ्रमस्यापि तत्राभावाच्छाब्दबोधो न स्यादिति वाच्यं श्लोकादौ योजितवाक्यादेव शाब्दबोधोपगमादिति ध्येयम् ।

४८। ननु तत्र यद्यासत्तिभ्रमस्तदा शाब्दबोधोऽपि भ्रमात्मकः स्यात् ? न चेष्टापत्तिः पटे नीलस्य सत्त्वेन विषयबाधाभावात् । आसत्तिभ्रमाच्छाब्दप्रमाङ्गीकारे च "आसत्तिभ्रमाच्छाब्दभ्रम" इति प्राचीनप्रवादविरोध इत्यत आह—आसत्तिभ्रमादिति। उक्तप्राचीनप्रवादस्तु निर्युक्तिकत्वादश्रद्धेय इति भावः ।

४९। नन्वव्यवधानेन पदोपस्थितिः शाब्दबोधे कारणमित्ययुक्तं अनेकपदघटितवाक्यस्थले अव्यवधानेन पदोपस्थित्यसम्भवादित्याशङ्कते नन्विति ।

वासस्वी देवदत्त इत्याद्युक्तं तत्रोत्तरपदस्मरणेन पूर्वपदस्मरणस्य नाशात् अव्यवधानेन उत्तरपदस्मरणासम्भव इति चेन्न। प्रत्येकपदसंस्कारैश्चरमस्य तावद्विषयकस्मरणस्याव्यवधानेनोत्पत्तेः। नाना(५०) सन्निकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात् (५१)। तावत्पदसंस्कारसहितचरमवर्णज्ञानस्योद्बोधकत्वात्। कथमन्यथा (५२) नानावर्णैरेकपदस्मरणम्। परन्तु (५३) तावत्पदार्थानां स्मरणादेकदैव खले कपोतन्यायात् तावत्पदार्थानां क्रियाकर्म्मभावेनान्वयरूपः शाब्दबोधो भवतीति केचित्।

वृद्धा युवानः (५४) शिशवः कपोताः खले यथामी युगपत् पतन्ति।
तथैव सर्व्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति॥

अपरे (५५) तु।

यद्यदाकाङ्क्षितं (५६) योग्यं सन्निधानं प्रपद्यते।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते॥

---

५०। ननु तद्विशेष्यकतत्प्रकारकस्मृतिं प्रति तद्विशेष्यकतत्प्रकारकसंस्कारत्वेन जनकत्वात् कथं प्रत्येकपदसंस्कारैर्नानापदविशेष्यकस्मरणं भिन्नविषयकत्वादत आह—नानेत्यादि।

५१। यथा घटचक्षुःसंयोगस्य पटप्रत्यक्षं प्रति कारणत्वाभावेऽपि घटचक्षुःसंयोगपटचक्षुःसंयोगाभ्यामेकं प्रत्यक्षं तथा तत्तत्पदगोचरसंस्कारस्य भिन्नविषयकत्वांशे? जनकत्वेऽपि तत्तत्संस्कारजन्यं स्मरणमेकमेव जायते बाधकाभावादिति भावः।

५२। अन्यथा—नानासंस्काराणामेकस्मरणजनकत्वाभावे।

५३। प्राचीनमतं दर्शयति परे त्वित्यादिना।

५४। वृद्धा युवान इत्यस्य तदाहुरित्यादिः। अत्र वृद्धयुवशिशुभिः कपोतैश्चिरतरसन्निहितकालोक्तानां पदार्थानां साम्यं बोध्यम्।

५५। केचिदित्यनेन सूचितमस्वरसं प्रकाशयन् मतान्तरमाह—अपरे त्विति।

५६। स्वार्थाकाङ्क्षितं स्वार्थयोग्यं यद्यत्सन्निधानं प्रपद्यते स्वार्थोपस्थितिविषयो भवति तेन तेनैवान्वितः स्वार्थः पदैः प्रथमं अनुभाव्यते अनन्तरञ्च महावाक्यार्थबोध इत्यर्थः। एवञ्च पूर्व्वोक्तः समूहालम्बनपदार्थस्मरणं विनापि निर्व्वाह इति भावः। एतन्मते पदजन्यपदार्थस्मृतित्वेन न शाब्दबोधं प्रति हेतुत्वमपि तु शाब्दबोधसाधारणताहशोपस्थितित्वेनैव नातश्चरमपदार्थस्मृतिकाले घटादिपदार्थस्मृतेर्नाशेऽपि शाब्दबोधानुपपत्तिरिति ध्येयम्।

तथा च खण्डवाक्यार्थबोधानन्तरं तथैव (५७) पदार्थस्मृत्या महावाक्यार्थबोध इत्यप्याहुः । एतेन (५८) तावद्वर्णाभिव्यङ्ग्यः पदस्फोटोऽपि निरस्तः, तत्तद्वर्णसंस्कारसहितचरमवर्णोपलम्भेन सद्व्यञ्जकेनैवोपपत्तेरिति (५९)। इदन्तु बोध्यम् (६०) यत्र द्वारमित्युक्तं तत्र पिधेहीति पदस्य ज्ञानादेव बोधो, न तु पिधानादिरूपार्थज्ञानात्। पदजन्यतत्तत्पदार्थोपस्थितिस्तत्तच्छाब्दबोधे हेतुत्वात् (६१)। किञ्च (६२) क्रियाकर्म्मपदानां तेन तेनैव सह साकाङ्क्षत्वम्। तेन क्रियापदं विना कथं शाब्दबोधः स्यात्। तथा (६३) पुष्पेभ्य

---

५७। यत्र खण्डवाक्यार्थबोधनाशोत्तरं महावाक्यार्थबोधस्तत्रापि खण्डवाक्यार्थसमानाकारकं स्मरणं कल्पयित्वा विशिष्टवैशिष्ट्यबोधनिर्व्वाह इत्याह—तथैव पदार्थस्मृत्येति ।

५८। घटादिपदस्य क्रमिकवर्णचतुष्टयाद्यात्मकस्य कदाप्यसत्त्वे नार्थोपस्थापकत्वासम्भवात् स्फोट एव घटाद्यर्थोपस्थापक इति वैयाकरणमतं निरस्यति—एतेनेत्यादिना । पूर्व्ववर्णानुभवजनितचरमवर्णानुभवरूपोद्बोधकोद्बोधितचरमवर्णानुभवजनितसंस्कारेणैव क्रमिकवर्णविशिष्ट-पद स्मरणस्योपपादितत्वेनेत्यर्थः ।

५९ पूर्व्वपूर्व्वानुभवजनितसंस्कारसहितचरमवर्णानुभवसम्भवस्यैव स्फोटव्यञ्जकत्वेन भवदङ्गीकृतस्यैव यावदर्थविषयकसंस्काराणामुद्बोधकत्वस्याभ्युपगन्तव्यत्वादिति भावः ।

६०। अवान्तरवाक्यार्थबोधपूर्व्वकमहावाक्यार्थबोधे अवान्तरवाक्यार्थस्मरणमेव कारणं ननु समूहालम्बनस्मृतिः, नहि शाब्दबोधे पदजन्यपदार्थोपस्थितिः कारणं, लाघवेन पदार्थोपस्थितेरेव हेतुत्वात् । अत एव द्वारमित्यादौ न पिधेहीति पदाध्याहारः किन्त्वर्थाध्याहार एवेति प्रभाकरमतं दूषयति—इदन्तु बोध्यमित्यादिना ।

६१। पदार्थोपस्थितिमात्रस्य हेतुत्वे प्रत्यक्षादिनोपस्थितस्यापि शाब्दबोधापत्तिरिति भावः ।

६२। ननु प्रत्यक्षोपस्थितिकपटादेः शाब्दबोधाभावस्तात्पर्य्याभावात्तत्सत्त्वे त्विष्टापत्तिरत आह—किञ्चेति ।

६३। ननु द्वारकर्मकपिधानानुकूलकृतिबोधे आनुपूर्व्वीविशेषस्य द्वारपदोत्तराम्पदरूपस्य पिधेहीत्याकारस्य वा ज्ञानं कारणमतो न द्वारं कर्मत्वं, पिधानं कृतिरित्यस्माच्छाब्दबोधापत्तिः । तथाच—द्वारमित्युक्ते पिधेहीतिपदस्य नाध्याहारः । अव्यवहितोत्तरस्य कार्य्यतावच्छेदके निवेशाच्च न परस्परजन्यबोधे व्यभिचार इत्याह—तथा पुष्पेभ्य इति ।

इत्यादौ (६४) स्पृहयतीति पदाध्याहारं विना चतुर्थ्यनुपपत्तेः (६५) पदाध्याहार आवश्यकः।

योग्यतां निर्वक्ति—पदार्थे इत्यादिना। एकपदार्थे(६६)ऽपर-पदार्थसम्बन्धो योग्यतेत्यर्थः। तज्ज्ञानाभावाच्च वह्निना सिञ्चती-त्यादौ न शाब्दबोधः। नन्वेतस्या योग्यताया ज्ञानं शाब्दबोधात् प्राक् सर्वत्र न सम्भवति वाक्यार्थस्यापूर्वत्वा(६७)दिति चेन्न। तत्तत्-पदार्थस्मरणे सति क्वचित् संशयरूपस्य क्वचिन्निश्चयरूपस्यापि योग्य-ताया ज्ञानस्य (६८) सम्भवात्।

नव्यास्तु योग्यताया ज्ञानं न शाब्दज्ञाने कारणम्। वह्निना सिञ्चतीत्यादौ सेके वह्निकरणत्वाभावरूपायोग्यतानिश्चयेन प्रति-बन्धात् न शाब्दबोधः। तदभावनिश्चयस्य (६९) लौकिकसन्नि-कर्षाजन्य(७०)दोषविशेषाजन्य(७१)तज्ज्ञानमात्रे प्रतिबन्धकत्वात् शाब्द-

---

६४। आदिना क्रुध्यति द्रुह्यति असूयतीत्यादीनां परिग्रहः।

६५। कर्म्मार्थकचतुर्थ्याः स्पृहयति योग एवानुशासनेन बोधनादिति भावः।

६६। पदार्थे तत्र तद्वत्त्वेत्यादिमूलस्य तत्पदार्थे तत्पदार्थवत्त्वं योग्यतेति यथाश्रुतार्थकम-युक्तमनुपयुक्तञ्च स्वस्मिन् स्वाधिकरणत्वाभावात् तज्ज्ञानस्य शाब्दबोधे हेतुत्वासम्भवाच्चेत्यतः प्रथमं तत्पदमेकपदार्थपरतया द्वितीयञ्च तत्पदमपरपदार्थपरतया व्याचष्टे एकपदार्थ—इत्यादि।

६७। अपूर्व्वत्वात् सर्व्वत्र शाब्दबोधात् पूर्वमनिश्चितत्वादित्यर्थः।

६८। संशयनिश्चयसाधारणयोग्यताज्ञानत्वेन हेतुत्वादिति भावः।

६९। नन्वयोग्यताज्ञानस्य प्रतिबन्धकत्वे तदभावत्वेन हेतुत्वं वाच्यं तदपेक्षया लाघवेन योग्यताज्ञानस्यैव हेतुत्वं युक्तमित्याकाङ्क्षायामाह—तदभावनिश्चयस्येत्यादि।

७०। बाधनिश्चयकालेऽपि लौकिकसन्निकर्षजन्यतद्विशिष्टबुद्धेरुदयादाह—लौकिकसन्नि-कर्षाजन्येति।

७१। शङ्खो न पीत इति निश्चयेऽपि पित्तादिदोषात् पीतः शङ्ख इति प्रत्यक्षोदयादाह—दोष-विशेषाजन्येति। शुक्तौ नेदं रजतमिति ज्ञानोत्तरं दोषजन्यस्य इदं रजतमिति भ्रमस्य वारणाय तत्र विशेषेति। पित्तमण्डुकत्वसाञ्जनदोषेत्यर्थः।

**यत्पदेन विना यस्यानन्नुभावकता भवेत् ।**
**आकाङ्क्षा वक्तुरिच्छा* तु तात्पर्य्यं परिकीर्त्तितम् ॥८४**

बोधं प्रत्यपि प्रतिबन्धकत्वं सिद्धम् (७२)। योग्यताज्ञानविलम्बाच्च शाब्दबोधविलम्बोऽसिद्ध इत्याहुः (७३) ॥ ८३ ॥

आकाङ्क्षां निर्वक्ति—यत्पदेनेत्यादि। येन पदेन विना यत्पदस्य अन्वयाननुभावकत्वं तेन सह तस्याकाङ्क्षा इत्यर्थः (७४)। क्रियापदं विना कारकपदं नान्वयबोधं जनयतीति तेन तस्याकाङ्क्षा। वस्तुतस्तु क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थम्। परन्तु घट-कर्म्मताबोधं प्रति घटपदोत्तरद्वितीयाकाङ्क्षाज्ञानं कारणम्, तेन घट-कर्म्मत्वमानयनं कृतिरित्यादौ न शाब्दबोधः। अयमेति (७५) पुत्रो

---

७१। तथाचायोग्यताज्ञानस्य शाब्दबोधं प्रत्यपि प्रतिबन्धकत्वस्य क्लृप्तत्वात्तेनैव निर्व्वाहे योग्यताज्ञानस्य पृथक् कारणत्वं न कल्प्यत इति भावः।

७२। आहुरित्यस्वरसस्तद्वीजन्तु यद्विषयकमनुमित्यादिकं न जातं शाब्दबोध एव जातस्तद्वि-शिष्टबुद्धावयोग्यताज्ञानाभावापेक्षया लाघवेन योग्यताज्ञानत्वेनैव हेतुतासिद्धिः। एवञ्च यद्विशेषे यद्विशेषस्य सत्त्वसामान्ये तत्सामान्यस्येति व्याप्तिबलाच्छब्दसामान्ये योग्यताज्ञानत्वेन हेतुतासिद्धि-र्दुर्व्वारेति। एवमिच्छाया उत्तेजकत्वानुरोधेनायोग्यताज्ञानप्रतिबन्धकत्वस्य विशेष एव पर्य्यवसानात् क्लृप्तप्रतिवध्यतावच्छेदकस्यानुमितित्वादेः शाब्दबोधसाधारण्याभावात् शाब्दबोधे त्वयोग्यत्वनिश्चय-स्यातिरिक्तप्रतिबन्धकताकल्पने गौरवात् लाघवेन योग्यताज्ञानस्यैव हेतुत्वं युक्तमिति ध्येयम्।

७४। येन पदेन विना यत्पदस्य यादृशबोधाजनकत्वं अव्यवहितपूर्व्ववर्त्तित्वाव्यवहितो-त्तरवर्त्तित्वान्यतरसम्बन्धेन तत्पदविशिष्टतत्पदत्वं तादृशशाब्दबोधजनकाकाङ्क्षेति भावः।

७५। नन्वयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यतामित्यादावजनितान्वयबोधदशायां राजपदस्य पुत्रपदेन पुरुषपदेन चाकाङ्क्षासत्त्वाद्राज्ञःपुरुष इत्यन्वयबोधः स्यादत आह—अयमेतीति। तथाच राजपुरुषपदयोराकाङ्क्षायाः सत्त्वेऽपि तात्पर्य्याभावान्न तथान्वयबोध इति भावः।

---

* घटमानयेत्यादौ कर्म्मत्वविशेष्यकाधेयतासंसर्गकघटप्रकारकप्रतीतीच्छा वक्तुस्तात्पर्य्यं, तादृशेच्छयोच्चरितमिदं वाक्यमित्याकारकं श्रोतृस्तज्ज्ञानं शाब्दबोधे कारणमित्यर्थः।

राज्ञ: पुरुषोऽपसार्य्यतामित्यादौ तु पुत्रेण सह राजपदस्य तात्पर्य्य-ग्रहसत्त्वात्तेनैवान्वयबोध:। पुरुषेण सह (७६) तात्पर्य्यग्रहे तु तेन सहान्वयबोध: स्यादेव।

तात्पर्य्यं निर्वक्ति—वक्तुरिच्छेति। यदि तात्पर्य्यज्ञानं कारणं न स्यात्, तदा सैन्धवमानयेत्यादौ (७७) क्वचिदश्वस्य क्वचिल्लवणस्य(७८) बोध इति न स्यात् (७९)। न च तात्पर्य्यग्राहकप्रकरणादीना(८०) मेव शाब्दबोधे कारणत्वमस्त्विति वाच्यम् तेषामननुगमात् (८१)। तात्पर्य्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्य्यज्ञानमेव लाघवात् कारणमस्तु। इत्यञ्च( ८२ )वेदस्थलेऽपि तात्पर्य्यज्ञानार्थमीश्वर: कल्प्यते। न च तत्राध्यापकतात्पर्य्यज्ञानं कारणमिति वाच्यम् सर्गादावध्यापकभावात्। न च प्रलय एव नास्तीति कुत: सर्गादिरिति वाच्यम् प्रलयस्यागमेषु(८३)प्रतिपाद्यत्वात्। इत्थञ्च शुकवाक्येऽपि ईश्वरीयतात्पर्य्यज्ञानं कारणम्। विसंवादिशुकवाक्ये तु शिक्ष-यितुरेव (८४) तात्पर्य्यस्य ज्ञानं कारणम्। अन्ये तु नानार्थादौ

---

७६। सति तात्पर्य्ये त्वनिष्टापत्तिमाह—पुरुषेण सहेति। इदन्तु बोध्यं आकाङ्क्षालक्षणे तत्तत्पदं तत्तत्पदज्ञानपरं मौनिश्लोकानुरोधादत एवाध्याहृतपदेनाप्याकाङ्क्षानिर्व्वाह:। अध्या-हारश्चाश्रुतपदानामनुसन्धानम्।

७७। आदिना श्वेतो धावतीत्यादे: परिग्रह:, तत्र कदाचित् श्वेतगुणविशिष्टस्य कदाचित् कुक्कुरादेर्ब्बोधस्य तात्पर्य्यज्ञाननियम्यत्वात्।

७८। क्वचिदुभयोरित्यपि बोध्यम्।

७९। इति न स्यात्—इति नियमो न स्यादित्यर्थ:।

८०। आदिना संयोगवियोगसाहचर्य्यादीनां परिग्रह:।

८१। तथाच परस्परजन्यशाब्दबोधे परस्परव्यभिचारेण न हेतुत्वसम्भव इति भाव:।

८२। इत्थञ्च—शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्य्यज्ञानस्य हेतुत्वे चेत्यर्थ:।

८३। प्रलयस्य कार्य्यद्रव्यानधिकरणकालविशेषात्मकखण्डप्रलयस्य। आगमेषु—"नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्न चान्यत्" इत्याद्यागमेष्वित्यर्थ:।

८४। ईश्वरेच्छाया विसंवादित्वाभावादिति भाव:।

**साक्षात्कारे सुखादीनां करणं मन उच्यते ।**
**अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते ॥८५॥**

(८५) क्वचिदेव तात्पर्य्यज्ञानं कारणम् । तथा च शुकवाक्ये विनैव तात्पर्य्यज्ञानं शाब्दबोधः । वेदे तु अनादिमीमांसापरिशोधिततर्कैरर्थावधारणमित्याहुः ॥ ८४ ॥

इति सिद्धान्तमुक्तावल्यां शब्दखण्डं समाप्तम् ।

पूर्वमनुभवस्मरणभेदाद्बुद्धेर्द्वैविध्यमुक्तम् । तत्रानुभवप्रकारा दर्शिताः, सुगमतया स्मरणं न दर्शितम् (१) । तत्र हि पूर्वानुभवः कारणम् । अत्र केचित् अनुभवत्वेन न कारणत्वं, किन्तु ज्ञानत्वेनैव, अन्यथा स्मरणानन्तरं स्मरणं न स्यात् (२) समानप्रकारकस्मरणेन(३) पूर्वसंस्कारस्य विनष्टत्वात् । मन्मते तु तेनैव स्मरणेन संस्कारान्तरद्वारा (४) स्मरणान्तरं जन्यत इत्याहुस्तन्न । यत्र समूहालम्बनोत्तरं घटपटादीनां क्रमेण स्मरणमजनिष्ट सकलविषयकस्मरणन्तु मा भूत्, तत्र फलस्य (५) संस्कारनाशकत्वाभावात् (६) कालस्य रोगस्य

---

८५ । आदिना एकार्थगृहीतलक्षणाकस्य संग्रहः ।

८६ । मीमांसा—लाघवज्ञानात्मकस्तर्कः, तत्परिशोधितैः—तत्सहकृतैः, तर्कैः—अनुमानैरित्यर्थः ।

१ । तथाचावसरसङ्गत्यानुभवनिरूपणानन्तरं स्मरणनिरूपणमिति भावः ।

२ । अनुभवस्य नष्टत्वादिति भावः ।

३ । नन्वनुभवस्य व्यापारद्वारा कारणत्वं तच्च कार्य्याव्यवहितप्राक्क्षणवृत्तिस्वव्यापारान्यतरकत्वं, तच्चानुभवनाशेऽपि तज्जन्यसंस्कारसत्त्वान्निराबाधमत आह—समानप्रकारकस्मरणेत्यादि ।

४ । स्मरणस्य तृतीयक्षणे नाशेन स्वरूपतो हेतुत्वासम्भवादिति भावः ।

५ । फलस्य प्रत्येकविषयकक्रमिकस्मरणरूपस्य ।

६ । समानप्रकारकत्वासम्भवादिति भावः ।

चरमफलस्य वा संस्कारनाशकत्वं वाच्यम् (७)। तथा च न क्रमिकस्मरणानुपपत्तिः। न च पुनः पुनः स्मरणात् दृढ़तरसंस्कारानुपपत्तिरिति वाच्यं झटित्युद्बोधकसमवधानस्य दार्ढ्यपदार्थत्वात् (८)। न च विनिगमनाविरहादेव ज्ञानत्वेनापि जनकत्वं स्यादिति वाच्यम् विशेषधर्मेण व्यभिचाराज्ज्ञाने सामान्यधर्मेणान्यथा सिद्धत्वात्। कथमन्यथा दण्डस्य भ्रमिद्वारा द्रव्यत्वेन रूपेण न कारणत्वम्। न चान्तरालिकस्मरणानां संस्कारनाशकत्वसंशयात् व्यभिचारसंशय इति वाच्यम्। अनन्तसंस्कारतन्नाशकल्पनापेक्षया चरमस्मरणस्यैव संस्कारनाशकत्वकल्पनेन व्यभिचारसंशयाभावात्॥ इति स्मृतिप्रक्रिया।

इदानीं क्रमप्राप्तं मनो निरूपयति—साक्षात्कार इति। एतेन मनसि प्रमाणं दर्शितम्। तथाहि—सुखसाक्षात्कारः सकरणको जन्यसाक्षात्कारत्वात् चाक्षुषसाक्षात्कारवत् इत्यनुमानेन करणस्य मनसः सिद्धेः। न चैवं दुःखादिसाक्षात्काराणामपि करणान्तराणि स्युरिति वाच्यम्। लाघवादेकस्यैव तादृशसकलसाक्षात्कारकरणतया[1] सिद्धेः, एवं सुखादीनामसमवायिकारणसंयोगाश्रयतया (२) मनसः सिद्धिर्बोद्धव्या।

---

७। अन्यथा उक्तसमूहालम्बनसंस्कारस्यानाशप्रसङ्गात् न चेष्टापत्तिः जन्यभावत्वेन विनाशित्वनियमात्। ननु कालादेः कालत्वादिना नाशकत्वे संस्कारमात्रस्य क्षणिकत्वापत्तिः तत्तद्व्यक्तित्वेन तथात्वे गौरवमत आह—चरमफलस्य वेति, चरमफले वैजात्यं कल्पयित्वा तेन रूपेण नाशकत्वं वाच्यमिति भावः।

८। तथाच पुनः पुनः स्मरणान्न दृढ़तरसंस्कारोत्पत्तिः, किन्तु विद्यमानसंस्कारस्यैव पुनः पुनः स्मरणेन झटित्युद्बोधकसमवधानं जायते, तद्वाश्च तस्मात् दृढ़स्मरणान्तरमिति भावः

१। ईश्वरीयसाक्षात्कारे व्यभिचारवारणाय जन्येति।

२। भावकार्य्यस्य सासमवायिकारणकत्वनियमादिति भावः।

मनसोऽणुत्वे प्रमाणमाह—अयौगपद्यादिति । ज्ञानानां चाक्षुषरासनादीनां यौगपद्यमेककालोत्पत्तिर्नास्तीत्यनुभवसिद्धम् । तत्र नानेन्द्रियाणां सत्यपि विषयसन्निकर्षे यत्सम्बन्धादेकेन्द्रियेण ज्ञानमुत्पद्यते यदसम्बन्धादपि त्वगादिभिः परैर्ज्ञानं नोत्पद्यते । तन्मनसो विभुत्वे च (३) असन्निधानं न सम्भवतीति विभु मनः । न च तदानीमदृष्टविशेषोद्बोधविलम्बादेव तज्ज्ञानविलम्ब इति वाच्यम्, तथा सति (४) चक्षुरादीनामप्यकल्पनापत्तेः (५)। न च दीर्घशष्कुलीभक्षणादौ नानावधानभाजाञ्च कथमेकदा नानेन्द्रियज्ञानमिति वाच्यम् मनसोऽतिलाघवात् त्वरया नानेन्द्रियसम्बन्धात् नानाज्ञानोत्पत्तेः। उत्पलशतपत्रभेदादिव यौगपद्यप्रत्ययस्य तु भ्रान्तत्वात् (६)। न च मनसः सङ्कोचविकाशशालित्वादुभयोपपत्ति(७)रस्त्विति वाच्यम् नानावयवतन्नाशादिकल्पने गौरवात् लाघवात् निरवयवस्यैव मनसः कल्पनादिति संक्षेपः (८)।

इति सिद्धान्तमुक्तावल्यां द्रव्यपदार्थव्याख्या समाप्ता ॥ ८५ ॥

---

३। तदसन्निधानं मनसो विभुत्वे न सम्भवतीत्यर्थः ।

४। दृष्टसामग्रीसत्त्वेऽप्यदृष्टविलम्बात् कार्य्यविलम्बाङ्गीकारे इत्यर्थः ।

५। चाक्षुषतद्विरहयोरदृष्टतद्विरहाभ्यामुपपत्तेरिति भावः ।

६। अव्यवहितकालोत्पत्तिकत्वस्य दोषत्वादिति भावः ।

७। मनसः सङ्कोचे एकेन्द्रियमात्रसम्बन्धादेकस्यैव ज्ञानस्य विकाशे तु नानेन्द्रियैर्मनसः सम्बन्धाद्युगपन्नानाज्ञानानामुपपत्तिरिति भावः ।

८। यद्यपि नानेन्द्रियैर्म्मनः सन्निकर्षकाले चाक्षुषाद्युत्पत्तिकाले रासनाद्यनुत्पादस्य रासनादिकं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकत्वे नैवोपपत्तेर्म्मनसो विभुत्वेऽपि बाधकाभावस्तथापि तथा प्रतिबन्धकत्वे गौरवम् । न च त्वङ्मनोयोगस्य ज्ञानसामान्यहेतुत्वाच्चाक्षुषसामग्रीकाले स्पर्शन सामग्र्या नियमतः सत्त्वात् स्पार्शनापत्तिर्म्मनसोऽणुत्वपक्षेऽपि दुर्व्वारैवेति वाच्य, अनन्यगत्या स्पार्शनं प्रति चाक्षुषादिसामग्र्याः प्रतिबन्धकत्वस्वीकारात, एवमपि रासनादिप्रत्यक्षे चाक्षुषादिसामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवस्याणुत्वपक्षे निष्प्रत्यूहत्वादित्यादिकमभिप्रेत्य संक्षेप इत्युक्तम् ।

अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः।
रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥
द्रवत्वस्नेहवेगाश्च*मता मूर्त्तगुणा अमी।
धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥८७॥
एतेऽमूर्त्तगुणाः सर्वे विद्वद्भिः परिकीर्त्तिताः।
संख्यादयो विभागान्ता उभयेषां गुणा मताः ॥८८॥

द्रव्यं निरूप्य(१) गुणं निरूपयति अथेत्यादिना। गुणत्वजातौ किं मानमिति चेत्,—इदम्—द्रव्यकर्मभिन्नसामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्ना निरवच्छिन्नकारणतया असम्भवात्। न हि (२) रूपत्वादिकं सत्ता वा तत्रावच्छेदिका न्यूनातिरिक्तदेशवृत्तित्वात्। अतश्चतुर्विंशत्यनुगतं किञ्चिद् वाच्यं, तदेव गुणत्वमिति(३)। द्रव्याश्रिता इति। यद्यपि द्रव्याश्रितत्वं न लक्षणं कर्मादावतिव्याप्तेस्तथापि द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं तदर्थः। भवति हि गुणत्वं द्रव्यत्वव्यापकतावच्छेदकम् तद्वत्ता च गुणानामिति कर्मत्वं द्रव्यत्वं वा न द्रव्यत्वव्यापकतावच्छेदकम् गगनादौ द्रव्यकर्मणोरभावात्। द्रव्यत्वत्वं सामान्यत्वादिकं वा न जातिरिति तद्व्युदासः। निर्गुणा इति। यद्यपि निर्गुणत्वं कर्मादावपि तथापि सामान्यवत्त्वे कर्मान्यत्वे च सति निर्गुणत्वं बोध्यम्। जात्यादीनां न सामान्यवत्त्वं कर्मणो न कर्मान्यत्वं

१। अवसरसङ्गतिमभिप्रेत्याह—द्रव्यं निरूप्येति।

२। ननु रूपत्वादीनां सत्ताया वा गुणनिष्ठकारणतावच्छेदकत्वं स्यादित्याशङ्क्याह—नहीति।

३। यद्यपि गुणत्वजातौ प्रत्यक्षमेव प्रमाणं रूपादिषु संयुक्तसमवेतसमवायेन गुणत्वस्य

* चकारेणानुक्तसमुच्चायकेन गुरुत्वस्य संग्रहः।

**संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा ।**
**द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ८९ ॥**

द्रव्यस्य न निर्गुणत्वमिति तत्र (४) नातिव्याप्तिः। निष्क्रिय इति स्वरूपकथनं न तु लक्षणं गगनादावतिव्याप्तेः ॥ वेगा इति वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः (६)। मूर्त्तगुणा इति, अमूर्त्तेषु (७) न वर्त्तन्त इत्यर्थः। लक्षणन्तु तावदन्यान्यत्वम्। एवमग्रेऽपि। अमूर्त्तगुणा इति, मूर्त्तेषु (८) न वर्त्तन्त इत्यर्थः। उभयेषामिति। मूर्त्तामूर्त्त(९)गुणा इत्यर्थः ॥८६॥८७॥८८॥

---

प्रत्यक्षसम्भवात्तथाप्यतीन्द्रियरूपादौ तत्प्रत्यक्षासम्भवेन गुणत्वस्य तत्साधारण्या सम्भवात् रूपादेरप्यापामरसाधारणगुण इति प्रत्यक्षस्याप्रशिद्धेश्च अनुमानं प्रदर्शितम् ।

४। तत्र—तेषु ।

५। आदिना कालादीनां परिग्रहः। अव्याप्तिश्च यथाश्रुते सामान्यवत्त्वे सति कर्म्मान्यत्वे च सति कर्म्मवदवृत्तिपदार्थविभाजकोपाधिसत्वेऽतिव्याप्तेरभावात् ।

६। वेगपदस्य भावनान्यसंस्कारपरत्वादिति भावः ।

७। ननु मूर्त्तगुणत्वं मूर्त्तवृत्तिगुणत्वं, तच्च संख्यादावतिव्याप्तमत आह—अमूर्त्तेष्विति, तथाचामूर्त्तावृत्तिगुणत्वं दर्शितगुणानां साधर्म्यमित्यर्थः। न चैतदपि मूर्त्तमात्रवृत्तिसंख्यायामतिव्याप्तमिति वाच्यं, मूर्त्तत्वव्याप्यतावच्छेदकगुणवृत्तिजातिमत्त्वस्य विवक्षितत्वात्। अवावच्छेदकान्तेन संख्यात्वादेर्वृत्तित्वान्तेन कर्म्मत्वादेर्व्युदासः ।

८। ननु धर्म्मेत्यादिमूलेनैतेषाममूर्त्तवृत्तिगुणत्वं साधर्म्यमुक्तं, तच्च संख्यादावतिव्याप्तमत आह—मूर्त्तेष्विति, मूर्त्तावृत्तिगुणत्वमेव तेषां साधर्म्यमित्यर्थः। न च तथाप्यमूर्त्तमात्रवृत्तिसंख्यादावतिव्याप्तिरिति वाच्यं, मूर्त्तत्वाभावव्याप्यतावच्छेदकपरिमाणवृत्तिजातिमत्त्वस्य विवक्षितत्वात्। परममहत्त्वत्वजातिमादायातिव्याप्तिवारणाय परिमाणावृत्तीति ।

९। ननूभयेषां गुणा इति मूलेन संख्यादिपञ्चानामुभयवृत्तिगुणत्वं साधर्म्यमुक्तं, तच्च रूपादावतिव्याप्तमत उभयपदं मूर्त्तामूर्त्तपरतया व्याचष्टे मूर्त्तामूर्त्तेति। नचैतदपि मूर्त्तमात्रवृत्तिसंख्यादावतिव्याप्तमिति वाच्यं, द्रव्यत्वसमव्यापकतावच्छेदकजातिमत्त्वस्य विवक्षितत्वात् ।

अतः शेषा गुणाः सर्वे मता एकैकवृत्तयः *।
बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥९०॥
अदृष्टभावना शब्दा अमी वैशेषिका गुणाः।
संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥ ९१ ॥
गुरुत्ववेगौ† सामान्यगुणा एते प्रकीर्त्तिताः।
संख्यादिरपरत्वान्तो द्रवत्वं स्नेह* एव च ॥ ९२ ॥
एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः।
बाह्यैकैकेन्द्रियग्राह्या गुरुत्वादृष्टभावनाः † ॥ ९३ ॥
अतीन्द्रिया‡ विभूनान्तु ये स्युर्वैशेषिका गुणाः।
अकारणगुणोत्पन्ना एते तु परिकीर्त्तिताः ॥ ९४ ॥

अनेकाश्रिता इति। संयोग(१०)द्वित्वादीनि द्विवृत्तीनि। द्वित्वचतुष्ट्वादिकं त्रिचतुरादिवृत्तीति बोध्यम् ॥ ८९ ॥

अत इति। रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्व-बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दा इत्यर्थः। द्रवो द्रवत्वम्। वैशेषिका इति। विशेषा एव वैशेषिकाः, स्वार्थे ठक्, विशेषगुणा (११) इत्यर्थः। सङ्ख्यादिरिति। सङ्ख्यापरिमाण-पृथक्त्वसंयोगविभागपरत्वापरत्वानीत्यर्थः।

---

१०। नन्वनेकाश्रितत्वं संयोगादावव्याप्तं अनेकपदस्य बहुत्वविशिष्टे शक्तत्वादत आह— संयोगेति। तथाचैकत्वभिन्नसंख्याविशिष्टवाचकत्वमनेकपदस्येति न तदव्याप्तिरिति भावः।

११। विशेषगुणत्वञ्च—भावनान्यो यो वायुवृत्तिस्पर्शावृत्तिधर्म्मसमवायी तदन्यत्वे सति गुरुत्वाजलद्रवत्वान्यगुणत्वम्। अत्र जात्यादावतिव्याप्तिवारणाय विशेष्यं गुरुत्वनैमित्तिकद्रव-

---

* एकैकवृत्तयः—स्वाश्रयप्रतियोगिकान्योन्याभावव्यापकात्यन्ताभावप्रतियोगिन इत्यर्थः।

द्वीन्द्रियेति । चक्षुषा(१२)त्वचाऽपि ग्रहणयोग्यत्वात् । बाह्येति । रूपादीनां चक्षुरादिग्राह्यत्वात् (१३) ।

विभूनामिति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा इत्यर्थः । अकारणेति । कारणगुणेन कार्य्ये ये गुणा उत्पद्यन्ते ते

---

त्वगोर्वारणाय गुरुत्वेत्यादि, सांसिद्धिकद्रवत्वसंग्रहाय अजन्येति । संयोगादिवारणाय सत्यन्तम् । भावनायामव्याप्तिवारणायाद्यमन्यान्तं सत्यन्तघटकसमवायिविशेषणं, सत्तादिकमादाय सम्भववारणाय स्पर्शसंग्रहाय च स्पर्शावृत्तीति ।

१२। ननु द्वीन्द्रियग्राह्यत्वं रूपादिष्वतिव्याप्तं तेषां मनसापि ग्रहणात्, बाह्येन्द्रियद्वयग्राह्यत्वमपि तत्रैवातिव्याप्तं रूपादीनां चक्षुर्द्वयादिना ग्रहणात् अतीन्द्रियसंख्यादावव्याप्तञ्च तस्येन्द्रियग्राह्यत्वस्यैवाभावादत आह चक्षुषा त्वचापीति । चक्षुस्त्वगुभयग्रहणयोग्यत्वं तदर्थः । चक्षुस्त्वगुभयग्राह्यभावनावृत्त्यन्यधर्मसमवायिगुणत्वमिति तु निष्कर्षः, संस्कारत्वादिकमादाय भावनायामतिव्याप्तिवारणाय भावनावृत्त्यन्येति, कर्मादावतिव्याप्तिवारणाय गुणत्वस्य निवेशः ।

१३। तथाचैकैकमात्रग्राह्यत्वं चक्षुस्त्वगाद्युभयाग्राह्यबहिरिन्द्रियग्राह्यगुणसमवेतजातिमत्त्वनिष्कर्षकमेव बाह्यैकैकेन्द्रियग्राह्यत्वपदेन विवक्षितं नातः संख्यादीनामुभयग्राह्यत्वे नैकग्राह्यत्वानपायेऽपि तत्रातिव्याप्तं । नवातीन्द्रियरूपादाविन्द्रियग्राह्यत्वाभावेऽप्यव्याप्तम् । नचैवमपि त्रसरेणुनिष्ठापकर्षस्य चक्षुरिन्द्रियेणैव ग्रहणात्तत्रातिव्याप्तिरिति वाच्यं परिमाणान्यत्वेनापि गुणस्य विशेषणीयत्वात् ।

---

* अत्र वेगपदं भावनातिरिक्तसंस्कारपरं तेन स्थितिस्थापकस्यापि परिग्रहः । सामान्यगुणत्वञ्च रूपस्पर्शान्यत्वे सति †द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकसंयोगविभागवेगद्रवत्वावृत्तिजातिशून्यगुणत्वम् । तथाच द्रव्यविभाजकं पृथिवीत्वादिकं तद्व्याप्यतावच्छेदकञ्च गन्धत्वादि तच्छून्यत्वस्य संख्यादौ सत्त्वाल्लक्षणसमन्वयः । शुक्लरूपानुष्णाशीतस्पर्शयोरतिव्याप्तिवारणाय सत्यन्तं शब्दविशेषजनकतावच्छेदकजात्यावच्छिन्नकठिनावयवद्वयविभागे तेजोवेगातिशये अत्यन्ताग्निसंयोगनाश्यतावच्छेदकवैजात्यावच्छिन्नघृतादिवृत्तिद्रवत्वे चातिव्याप्तिवारणायावृत्त्यन्तं जातिविशेषणं, कर्म्मादावतिव्याप्तिवारणाय विशेष्यं, पृथिव्यादिव्याप्यतावच्छेदकतत्तत्संख्यात्वादिशून्यत्वस्य तत्तत्संख्यायामभावादव्याप्तिवारणाय जातिपदम् । द्रव्यविभाजकोपाधेश्च व्यापकत्वं तत्तद्व्यक्तित्वेन विवक्षितं, नतु तादृशोपाधित्वेन अन्यथा संख्यात्वादेरपि तादृशजातित्वादसम्भवापत्तेरिति ।

† अत्र संयोगेत्यादि पदं वेगस्याप्युपलक्षकं, स्थितिस्थापकस्यत्वतीन्द्रियत्वं वक्ष्यते ।

कारणगुणपूर्वका (१४) रूपादयो वक्ष्यन्ते। बुद्ध्यादयस्तु न तादृशाः। आत्मादेः कारणाभावात्॥ ९०॥ ९१॥ ९२॥ ९३॥ ९४॥

---

१४। तथाच स्वाश्रयसमवायिसमवेतगुणजन्यत्वं कारणगुणोत्पन्नत्वं तादृशगुणाजन्यत्वमकारणगुणोत्पन्नत्वमिति फलितं। यद्यपीदं नित्यरूपे जन्येऽपि च पाकजादौ अवयवावयविनोर्द्वित्वद्विपृथक्त्वातिरिक्तद्वित्वपृथक्त्वादौ कर्म्मजन्यसंयोगविभागेषु पाकजद्रवत्वे चातिव्याप्तं तथापि निरुक्तकारणगुणोत्पन्नावृत्ति परत्वापरत्वावृत्ति गुणत्वसाक्षाद्व्याप्यजातिमत्त्वं विवक्षितमिति न दोषः। कारणगुणोत्पन्नेऽतिव्याप्तिवारणाय प्रथममवृत्त्यन्तं, परत्वापरत्वयोरतिव्याप्तिवारणाय द्वितीयमवृत्त्यन्तं, रूपनिष्ठपाकजन्यतावच्छेदकवैजात्यं संयोगविभागवेगनिष्ठकर्म्मजन्यतावच्छेदकवैजात्यं अणुपरिमाणनिष्ठवैजात्यं परममहत्त्वञ्चादायातिव्याप्तिवारणाय गुणत्वसाक्षाद्व्याप्येति, गुणत्व-

---

*। अत्र भावनापदं वेगभिन्नसंस्कारपरं तेन स्थितिस्थापकस्यापि संग्रहः।

†। नचातीन्द्रियत्वं यदि इन्द्रियजन्यप्रत्यक्षाविषयत्वं तदा गुरुत्वादिष्वसम्भवात्तेषामलौकिकप्रत्यक्षविषयत्वात् लौकिकप्रत्यक्षाविषयत्वविवक्षणे चातीन्द्रियरूपादावतिव्याप्तिरिति वाच्यं, लौकिकसाक्षात्कारविषयगुणत्वन्यूनवृत्तिसंस्कारत्वान्यधर्म्मसमवाय्यन्यगुणत्वस्य विवक्षितत्वात्। सत्तादिकमादायासम्भववारणाय गुणत्वन्यूनवृत्तीति, भावनास्थितिस्थापकयोरव्याप्तिवारणाय संस्कारत्वान्येति, जात्यादावतिव्याप्तिवारणाय गुणपदं।

‡। ननु कारणगुणोद्भवत्वं यदि स्वाश्रयसमवायिसमवेतगुणजन्यत्वं तदा हस्तपुस्तकसंयोगविभागादिजन्यकायपुस्तकसंयोगविभागादावतिव्याप्तिरिति चेन्न स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगुणजन्यवृत्तिसंख्यात्वपृथक्त्वातिरिक्तभावनावृत्त्यन्यजातिमत्त्वस्य विवक्षितत्वात्। मात्रपदान्निरुक्तकायपुस्तकसंयोगविभागादौ नातिव्याप्तिः, अवयवावयविनोरेकत्वाभ्यां जनिते अवयवावयविद्वित्वादावतिव्याप्तिवारणाय स्वसजातीयत्वं गुणविशेषणं, तथाचावयवैकत्वादेरवयवावयविद्वित्वसजातीयत्वाभावेन न तत्रातिव्याप्तिः, साजात्यञ्चात्र गुणत्वव्याप्यव्याप्यजात्या विवक्षितं नातः संख्यात्वेन तयोरपि साजात्यात्तद्दोषतादवस्थ्यं, अवयवावयविरूपादीनां नीलत्वादिना साजात्यसत्त्वान्नासम्भवः, नित्यरूपे संख्याप्रचयजन्यपरिमाणादौ चाव्याप्तिवारणाय जन्यत्वान्तं विहाय तद्वृत्तिजातिमत्त्वपर्य्यन्तानुधावनं, तथाच तत्रापि रूपत्वादिकमादाय लक्षणसमन्वयः। तादृशं संख्यात्वं पृथक्त्वञ्चादाय द्वित्वद्विपृथक्त्वादावतिव्याप्तिवारणाय संख्यात्वपृथक्त्वातिरिक्तत्वं अवयववेगजन्यावयविवेगवृत्तिसत्तागुणत्वादिकमादाय भावनायामतिव्याप्तिवारणाय भावनावृत्त्यन्यत्वञ्च जातिविशेषणं। तादृशरूपत्वादिकमादाय पाकजरूपादावतिव्याप्तिवारणाय मूलोपात्तमपाकजत्वविशेषणमपि देयमेवेति सर्व्वमनाकुलं।

अपाकजास्तु स्पर्शान्ता द्रवत्वञ्च तथाविधम्।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम्॥ ९५॥
स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः।
संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः॥ ९६॥
स्पर्शान्तपरिमाणैकपृथक्त्व*स्नेहशब्दके।
भवेदसमवायित्वमथ वैशेषिके गुणे॥ ९७॥

अपाकजास्त्विति। पाकजरूपादीनां कारणगुणपूर्वकत्वाभावात् अपाकजा इत्युक्तम् (१५) तथाविधम् अपाकजम्। तथैकत्वमपि बोध्यम्। संयोगश्चेति, कर्म्मजन्यत्वं यद्यपि न साधर्म्यं घटादावति-व्याप्तेः संयोगजसंयोगेऽव्याप्तेश्च तथापि कर्म्मजन्यवृत्तिगुणत्वव्याप्य-जातिमत्त्वं बोध्यम्, एवमन्यत्राप्यूह्यम् (१६)॥ ९५॥ ९६॥

स्पर्शान्ता इति। स्पर्शोऽत्रानुष्णो ग्राह्यः। एकपृथक्त्वेत्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयात् एकत्वं पृथक्त्वञ्च ग्राह्यम्। पृथक्त्वपदेन चैकपृथक्त्वं विवक्षितम्।

भवेदसमवायित्वमिति। घटादिरूपरसगन्धस्पर्शाः कपालादि-रूपरसगन्धस्पर्शेभ्यो भवन्ति। एवं कपालादिपरिमाणादीनां घटादि-

---

साक्षाद्व्याप्यत्वञ्च संस्कारत्वान्यगुणत्वव्याप्याव्याप्यत्वे सति गुणत्वव्याप्यत्वं, अन्यथाभावनात्वस्य गुणत्वसाक्षाद्व्याप्यत्वविरहाद्भावनायामव्याप्तिप्रसङ्गादित्यवधेयम्।

१५। तथाच पाकजरूपरसगन्धस्पर्शपाकजद्रवत्वद्वित्वादिद्विपृथक्त्वादिसंयोगविभागपरत्वानां न कारणगुणपूर्व्वकत्वं न वा अकारणगुणपूर्व्वकत्वं साधर्म्यमिति ध्येयम्।

१६। अथ प्रादेशिक इत्यादिमूलेन संयोगादिद्वयविभुविशेषगुणानामव्याप्यवृत्तित्वं साधर्म्यं प्रदर्शनीयं, तत्रापि यथाश्रुतं कर्म्मादावतिव्याप्तेरीश्वरीयज्ञानादावव्याप्तेश्च, अव्याप्यवृत्ति-वृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यमित्यर्थः।

---

* अवैकत्वस्नेऽकपृथक्त्वस्य त्वर्थो बोध्यः।

**आत्मन: * स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयो:।**
**वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ९८ ॥**
**द्विधैव कारणत्वं स्यादथ प्रादेशिको भवेत्।**
**वैशेषिको विभुगुण: संयोगादिद्वयं तथा ॥ ९९ ॥**

परिमाणाद्यसमवायिकारणत्वम्। एवं शब्दस्यापि द्वितीयशब्दं प्रति एवं स्थितिस्थापकैकपृथक्त्वयोरपि ज्ञेयम्।

निमित्तत्वमिति। बुद्ध्यादीनां इच्छादिनिमित्तत्वादिति भाव:।

द्विधैव कारणत्वमिति। असमवायिकारणत्वं निमित्तकारणत्वञ्च। तथा हि—उष्णस्पर्शं (१७) उष्णस्पर्शस्यासमवायी पाकजे निमित्तम्। गुरुत्वं गुरुत्व(१८)पतनयोरसमवायिप्रतिघाते निमित्तम्। वेगो वेगस्पन्दनयोरसमवायी अभिघाते निमित्तम्। द्रवत्वं द्रवत्वस्पन्दनयोरसमवायी संग्रहे (१९) निमित्तम्। भेरीदण्डयोग: शब्दे निमित्तम्। भेर्य्याकाशसंयोगो(२०)ऽसमवायी। वंशदलद्वयविभाग: शब्दे निमित्तम्। वंशदलाकाशविभागोऽसमवायीति। प्रादेशिकोऽव्याप्यवृत्ति: (२१) ॥ ९७ ॥ ९८ ॥ ९९ ॥

---

१७। उष्णस्पर्श:—अवयवगतोष्णस्पर्श:, उष्णस्पर्शस्य—अवयविगतोष्णस्पर्शस्य। एवमग्रेऽपि।

१८। कारणैकार्थप्रत्यासत्त्या कार्य्यैकार्थप्रत्यासत्त्या च गुरुत्वस्यासमवायिकारणत्वमिति प्रदर्शनाय गुरुत्वपतनयोरुभयोरुपादानं। एवमग्रेऽपि।

१९। संग्रहे—सक्त्वादिसंयोगविशेषे।

२०। भेर्य्याकाशसंयोग इति प्रथमान्तसंयोगपदघटित एवायं पाठ:, भावकार्य्यस्यासमवायिकारणजन्यत्वनियमाद्भेर्य्याकाशसंयोगस्य शब्दं प्रत्यसमवायिकारणत्वमावश्यकमिति भाव:। यद्यपि भेरीदण्डसंयोगस्य शब्दे निमित्तत्वं, न तु तत्र तस्यासमवायित्वं एवं भेर्य्याकाशसंयोगस्य शब्दे असमवायिकारणत्वं नतु तत्र तस्य निमित्तत्वमित्येकव्यक्तेर्न द्विविधहेतुत्वमिति तथापि संयोगजातीयस्य द्विविधहेतुत्वमस्त्येवेति भाव:। एवमग्रेऽपि।

२१। अत्र देशिकेत्यादि:, तेन रूपादौ नातिव्याप्ति:।

---

* आत्मनो वैशेषिके गुणे निमित्तत्वमित्यन्वय:।

**चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम्।**
**चक्षुषः सहकारि स्यात् शुक्लादिकमनेकधा ॥१००**

चक्षुरिति। रूपत्वजातिस्तु प्रत्यक्षसिद्धा। रूपशब्दोल्लेखिनी प्रतीतिर्नास्तीति चेत् मास्तु रूपशब्दप्रयोगस्तथापि नीलपीतादिष्वनुगतजातिविशेषोऽनुभवसिद्ध एव। रूपशब्दाप्रयोगेऽपि नीलो वर्णः पीतो वर्ण इति वर्णशब्दोल्लेखिनी प्रतीतिरस्त्येव। एवं नीलत्वादि(१)कमपि प्रत्यक्षसिद्धम्। न चैकैका एव नीलरूपादिव्यक्तय इत्येकव्यक्तिवृत्तित्वान्नीलत्वादिकं न जातिरिति वाच्यम्। नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादेरुत्पादविनाशशालितया नानात्वात्। अन्यथा (२) एकनीलनाशे जगदनीलमापद्येत। न च नीलरक्तादिसमवाययोरेव विनाशोत्पादविषयकोऽसौ प्रत्यय इति वाच्यम् प्रतीत्या समवायानुल्लेखात्। न च स एवायं नील इति प्रत्ययाल्लाघवाच्चैक्यमिति वाच्यम्। प्रत्ययस्य तज्जातीयविषयकत्वात्। सैवेयं गुर्जरीतिवल्लाघवन्तु(३) प्रत्यक्षबाधितम्। अन्यथा(४) घटादीनामप्यैक्यप्रसङ्गादुत्पादविनाशबुद्धेः समवायावलम्बनत्वापत्तेरिति। एतेन (५) रसादिकमपि व्याख्यातम्। चक्षुर्ग्राह्यमिति (६)

---

१। आदिना रक्तत्वादिपरिग्रहः।

२। अन्यथा—नीलत्वादीनामेकव्यक्तिकत्वे।

३। ननु लाघवादेव नीलरूपादिव्यक्त्यैक्यं सेत्स्यतीत्याह—लाघवन्त्विति। प्रत्यक्षबाधितं—नीलो नष्टः रक्त उत्पन्न इत्यादि प्रत्यक्षबाधितमित्यर्थः।

४। अन्यथा—लाघवमात्रेण नीलरूपादीनामैक्याभ्युपगमे।

५। एतेन—ईदृशजातिसाधकप्रमाणेन। रसादिकं—रसत्वादिकत्। आदिना गन्धत्वादीनां परिग्रहः।

६। संयोगादावतिव्याप्तिमाशङ्क्याह—चक्षुर्ग्राह्यमितीति। चक्षुर्ग्राह्यमित्यस्येत्यर्थः, तेन चक्षुरिति मात्प्रतीकधारणेऽपि न पौनरुक्त्यं।

चक्षुर्ग्राह्यविशेषगुण(७) इत्यर्थः। एवमग्रेऽपि। द्रव्यादेरिति। उपलम्भकम् उपलब्धिकारणम्।

इदमेव विवृणोति—चक्षुष इति। द्रव्यगुणकर्म्मसामान्यानां चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणम्। शुक्लादिकमनेकधेति। तद्रूपं शुक्लनीलपीतरक्तकर्बुरादिभेदादनेकप्रकारकं भवति। ननु कर्बुरं कथमतिरिक्तरूपं भवति? इत्थं नीलपीताद्यवयवारब्धोऽवयवी न तावन्नीलरूपः अप्रत्यक्षप्रसङ्गात्(८)। नापि व्याप्यवृत्ति-नीलादिकमुत्पद्यते पीतावच्छेदेनापि नीलोपलब्धिप्रसङ्गात्, नाप्यव्याप्यवृत्तिनीलादिकमुत्पद्यते व्याप्यवृत्तिजातीय(१०)गुणानामव्याप्यवृत्तित्वे विरोधात्। तस्मात् नानाजातीयरूपैरवयविनि विजातीयं चित्ररूपमारभ्यते। अत एवैकं चित्रमित्यनुभवोऽपि नाना(११)रूपकल्पने गौरवात्। इत्यञ्च (१२) नीलादीनां पीताद्यारम्भे प्रतिबन्ध-

---

७। अत्र विशेषगुणत्वं विलक्षणगुणत्वं, वैलक्षण्यञ्च चक्षुर्भिन्नाग्राह्यत्वं। नच तथापि प्रभाभित्तिसंयोगे अतिव्याप्तिरिति वाच्यं, चक्षुर्म्मात्रग्राह्यत्वस्य चक्षुर्म्मात्रगृहीतत्वेऽविशेषे अतिव्याप्त्यापत्त्या चक्षुर्म्मात्रग्राह्यत्वस्य जातिविशेषणत्वं स्वीकृत्य चक्षुर्म्मात्रग्राह्यजातिमद्विशेषगुणत्वविवक्षणस्यावश्यकतया तेनैव प्रभाभित्तिसंयोगे अतिव्याप्तिवारणात्। प्रभात्वमादाय प्रभायामतिव्याप्तिवारणाय गुणपदं।

८। रसादिलक्षणेष्वेषा रीतिर्व्वोध्येत्यर्थः।

९। द्रव्यचाक्षुषं प्रति समवायसम्बन्धेनोद्भूतरूपस्य हेतुत्वादिति भावः।

१०। व्याप्यवृत्तिवृत्तिजातिश्च सविषया वृत्तिर्व्वोध्या, तेन व्याप्यवृत्तीश्वरज्ञानजातीयस्यास्मदादिज्ञानस्याव्याप्यवृत्तित्वेऽपि न क्षतिः।

११। ननु वृक्षाणां बहुत्वेऽप्येकं वनमितिवद्रूपसमुदायगतमेकत्वमादाय एकं चित्रमित्यनुभवोपपत्तिरत आह—नानेति। गौरवात्—चित्रमिति प्रतीतिविषयताया अनेकत्र कल्पने गौरवादित्यर्थः।

१२। ननु चित्ररूपाधिकरणे घटादौ स्वाश्रयसमवेतत्वसम्बन्धेन कपालनीलादीनां कारणानां सत्त्वात् कथं न तत्र नीलाद्युत्पत्तिरित्यत आह—इत्यञ्चेति, उक्तलाघवेन चित्ररूपप्रसिद्धौ चेत्यर्थः।

**जलादिपरमाणौ तन्नित्यमन्यत् सहेतुकम् ।**
**रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०१ ॥**

कत्वकल्पनाद(१३)वयविनि न पीताद्युत्पत्तिः। एतेन स्पर्शोऽपि व्याख्यातः (१४)। रसादिकमपि नाव्याप्यवृत्ति, किन्तु नानाजातीय-रसवदवयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः। तत्र रसनया अवयवरस एव गृह्यते, रसनेन्द्रियादीनां द्रव्यग्रहसामर्थ्याभावादवय-विनो नीरसत्वेऽपि क्षतेरभावात्। नव्यास्तु तत्राव्याप्यवृत्त्येव नाना-रूपम् नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात्। अत एव—

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

इत्यादिशास्त्रमप्युपपद्यते। न च व्याप्याव्याप्यवृत्तिजातीययो-र्द्वयोर्विरोधो मानाभावात्। न च लाघवादेकं रूपम् अनुभवविरो-धात्। अन्यथा घटादेरपि लाघवादैक्यं स्यादिति। एतेन स्पर्शा-दिकमपि व्याख्यातमिति वदन्ति (१५) ॥ १०० ॥

---

१३। समवायेन नीलं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलातिरिक्तरूपत्वेन पीतरूपं प्रति पीतातिरिक्तरूपत्वेन प्रतिबन्धकत्वमेवं रीत्या प्रतिबन्धकत्वकल्पनादित्यर्थः। अन्यथा नाना-जातीयरूपवत्कपालारब्धे घटे नीलकपालाद्यवच्छेदेन पीतोत्पादापत्तेर्दुर्व्वारत्वादिति भावः।

१४। कोमलकठिनस्पर्शवदवयवाभ्यामारब्धे घटादौ स्पर्शानङ्गीकारे घटस्यास्पर्शनापत्ति-रित्यादिरीत्या चित्रस्पर्शोऽप्यावश्यक इति भावः।

१५। नव्यमतेऽपि नानाजातीयरूपवत्कपालारब्धे घटे पीतकपालावच्छेदेन नीलापत्ति-वारणाय अवच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायेन नीलादेः कारणत्वं कल्पनीयं, परन्तु अवच्छेदकतासम्बन्धेन कपालादौ जायमानस्य नीलादेः समवायेन घटादाविव गगणादावप्युत्-पत्तिवारणाय समवायेन नीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलादेर्हेतुत्वं कल्पनीयं एवं चित्रमिति प्रतीतिविषयताया एकत्र कल्पनापेक्षया अनेकत्र कल्पने गौरवमिति निरुक्तनीलादेः पीतादिप्रतिबन्धकत्वकल्पनापेक्षया नव्यमत एव गौरवमित्यस्वरसं वदन्तीत्यनेन सूचित-मनुसन्धेयात्।

सहकारी रसज्ञाया नित्यतादि च पूर्ववत्।
घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥१०२॥
सौरभश्चासौरभश्च स द्वेधा परिकीर्त्तितः।
स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥१०३
अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो मतः।
काठिन्यादिः क्षितावेव नित्यतादि च पूर्ववत् ॥१०४॥
एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित्।
तत्रापि परमाणौ स्यात् पाको वैशेषिके नये ॥१०५॥

जलादीति। जलपरमाणौ तेजःपरमाणौ च रूपं नित्यं, पृथिवीपरमाणुरूपन्तु न नित्यम्, पाकेन रूपान्तरोत्पत्तेः। न हि घटस्य पाकानन्तरं तदवयवोऽपक्व उपलभ्यते। न हि (१६) रक्तकपालस्य कपालिका नीलावयवा भवति। एवं क्रमेण परमाणावपि पाकसिद्धिः।

अन्यज्जलतेजःपरमाणुरूपभिन्नं रूपं सहेतुकं जन्यम्। रसं निरूपयति—रसस्त्विति।

सहकारीति। रासनज्ञाने रसः कारणमित्यर्थः। पूर्ववदिति। जलपरमाणौ रसो नित्योऽन्यः सर्वोऽपि रसोऽनित्य इत्यर्थः॥ गन्धं निरूपयति—घ्राणग्राह्य इति। उपकारको घ्राणजन्यज्ञाने कारणमित्यर्थः। गन्धः सर्वोऽनित्य एव।

स्पर्शं निरूपयति—स्पर्श इति। उपकारक इति स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः॥

अनुष्णाशीत इति। पृथिव्यां वायौ च स्पर्शोऽनुष्णाशीतः।

---

१६। ननु घटावयवेऽप्यवयवेषु पाको न तु परमाणावत आह—न हीत्यादि।

नैयायिकानान्तु नये द्व्यणुकादावपीष्यते ।
गणनव्यवहारे तु हेतुः संख्याऽभिधीयते ॥ १०६ ॥

जले शीतः । तेजस्युष्णः । काठिन्येति । कठिनसुकुमारस्पर्शौ पृथिव्यामेवेत्यर्थः । कठिनत्वादिकन्तु न संयोगनिष्ठो (१७) जातिविशेषः चक्षुर्ग्राह्यतापत्तेः । पूर्ववदिति । जलतेजोवायुपरमाणुस्पर्शा नित्यास्तद्भिन्नस्पर्शास्त्वनित्या इत्यर्थः ॥१०१॥१०२॥१०३॥१०४॥

एतेषामिति । एतेषां रूपरसगन्धस्पर्शानाम् । नान्यत्रेति । पृथिव्यां हि रूपरसगन्धस्पर्शपरावृत्तिः पावकसंयोगादुपलभ्यते । न हि शतधापि ध्मायमाने जलादौ रूपादिकं परावर्त्तते । नीरे सौरभमौष्ण्यञ्च अन्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते, पवनपृथिव्योः शीतस्पर्शादिवत् । तत्रापि पृथिवीष्वपि मध्ये परमाणावेव रूपादीनां पाक (१) इति वैशेषिका वदन्ति । तेषामयमाशयः— अवयविनाऽवष्टब्धेष्ववयविषु पाको न सम्भवति (२) परन्तु वह्निसंयोगेनावयविषु विनष्टेषु (३) स्वतन्त्रेषु(४) परमाणुषु पाकः । पुनश्च पक्वपरमाणुसंयोगाद्द्व्यणुकादिक्रमेण पुनर्महावयविपर्य्यन्तमुत्पत्तिः । तेजसा(५)मतिशयितवेगवशात् पूर्वव्यूहनाशो झटिति

१७। कठिनः संयोग इति प्रतीतिस्तु कठिनस्पर्शवद्द्रव्यप्रतियोगिकत्वमवगाहत इति भावः ।

१। पाकः—परावृत्तिरित्यर्थः ।

२। रूपादिपरावृत्तिर्नसम्भवतीत्यर्थः । रूपादिनाशं प्रति साक्षात् परम्परासम्बन्धावच्छिन्नसर्व्वावयवावच्छेदेन तेजःसंयोगस्य हेतुतया अवयविनावष्टब्धेष्ववयवेषु सत्सु अवयविनि रूपादिनाशो न सम्भवति, तद्धेतोः सर्व्वावयवावच्छेदेन तेजःसंयोगस्याभावादिति भावः ।

३। घटाद्यारम्भककपालादिपरमाणुपर्य्यन्तेष्वग्निसंयोगेन पूर्व्वोक्तरीत्या घटादिद्व्यणुकपर्य्यन्तेषु नाशसम्भवादिति भावः ।

४। स्वतन्त्रेषु—कार्य्यद्रव्यांश्वंसविशिष्टेषु ।

५। ननु तत्र संस्थानभेदादिः कथं न प्रतीयते इत्यत आह—तेजसामिति, व्यूहः—संस्थानं ।

भूतान्तरोत्पत्तिश्चेति। अत्र द्व्यणुकादिविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पन्ने रूपादिमद्भवतीति शिष्यबुद्धिवैशद्यार्थं प्रक्रिया (६)। तत्र विभागजविभागानङ्गीकारे (७) नवक्षणा(८)। तदङ्गीकारे(९)तु विभागः किञ्चित्सापेक्षो विभागं जनयेत् निरपेक्षस्य तत्त्वे (१०) कर्म्मत्वं स्यात्। "संयोग(११)विभागयोरनपेक्षं कारणं कर्म्मे"ति वैशेषिकसूत्रं, स्वोत्तरोत्पन्न (१२) भावान्तरानपेक्षत्वं तदर्थः। अन्यथा कर्म्मणोऽप्युत्तरसंयोगोत्पत्तौ पूर्व्वसंयोगनाशापेक्षणादव्याप्तिः स्यात्। तत्र यदि द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्, तदा दशक्षणा। अथ द्रव्यनाशविशिष्टं

---

६। प्रक्रिया—द्व्यणुकनाशादिरूपाद्युत्पत्तिक्षणनिरूपणं क्रियत इति शेषः।

७। विभागजविभागानङ्गीकारे—कारणाकारणविभागात् कार्य्याकार्य्यविभागवत् कारणमात्रविभागात् कारणाकारणविभागानङ्गीकार इत्यर्थः। द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियायास्तदनारम्भकसंयोगप्रतिद्वन्द्विविभागाजनकत्वनियमे मानाभावादिति भावः।

८। प्रक्रिया इति शेषः। एवं सर्व्वत्र।

९। अत्र च विभागपक्षे वक्ष्यमाणविकसत्कमलभङ्गप्रसङ्गभिया उक्तनियमाङ्गीकारस्यावश्यकत्वे द्व्यणुकारम्भकपरमाणुक्रियया यत्र द्व्यणुकारम्भकसंयोगप्रतिद्वन्द्विविभागो जनितस्तत्र तया तत्परमाणुक्रियया तत्परमाण्वाकाशादिसंयोगप्रतिद्वन्द्विविभागोत्पत्तिर्न सम्भवति, न च मास्तु तत्र परमाण्वाकाशादिविभागः का क्षतिरिति परमाणावुत्तरदेशसंयोगानुत्पत्त्या परमाणुगतक्रियानाशानुपपत्तेः, तस्मात्तादृशपरमाण्वाकाशविभागजनकः परमाण्वोर्व्विभागो वाच्य इत्यभिप्रायवानाह—तदङ्गीकार इति। अनयोः पक्षयोः प्रथमपक्ष एव सम्यक् यदवच्छेदेन कमलारम्भकसंयोगस्तदवच्छेदेन क्रियानुत्पत्त्या च न विकसत्कमलभङ्गप्रसङ्ग इत्यवधेयम्।

१०। तत्त्वे—विभागजनकत्वे। कर्म्मत्वं कर्म्मलक्षणस्यातिव्याप्तिः।

११। कर्म्मलक्षणाविव्याप्तिं दर्शयितुं वैशेषिककर्म्मलक्षणप्रतिपादकं सूत्रमवतारयति—संयोगेत्यादि। तस्य च संयोगस्य विभागस्य वा अनपेक्षं कारणं कर्म्मेतिलक्षणार्थे वाक्यार्थेऽभिप्रेत्य द्वितीयलक्षणस्यावाविव्याप्त्याशङ्काभावमित्यवधेयम्।

१२। ननु कर्म्मणोऽपि संयोगजनने द्रव्यस्य पूर्व्वसंयोगनाशस्य चापेक्षणादव्याप्तिरित्यतः अनपेक्षपदार्थं व्याचष्टे स्वोत्तरोत्पन्नेत्यादिना। तथाच—पूर्व्वसंयोगनाशस्य भावत्वाभावात् संयोगापेक्षद्रव्यस्य च पूर्व्वोत्पन्नत्वान्न तदपेक्षत्वेऽप्यव्याप्तिसम्भव इति।

कालमपेक्ष्य विभागजविभागः स्यात्, तदा एकादशक्षणा। अथ नवक्षणा, तथा हि—(१३) वह्निसंयोगात् परमाणौ कर्म। ततः परमाण्वन्तरेण विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुक-(१४) नाशः।१। ततः(१५) परमाणौ श्यामादिनाशः।२। ततो रक्ताद्युत्पत्तिः।३। ततो द्रव्यारम्भानुगुणक्रिया।४। ततो विभागः।५। ततः पूर्वसंयोगनाशः।६। तत आरम्भकसंयोगः।७। ततो द्व्यणुकोत्पत्तिः।८। ततो रक्ताद्युत्पत्तिः।९। ननु श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणा क्रियाऽस्त्विति चेत् न, अग्निसंयुक्ते परमाणौ यत् कर्म्म, तद्विनाशमन्तरेण गुणोत्पत्तिमन्तरेण च तत्र परमाणौ क्रियान्तराभावात् कर्म्मवति (१६) कर्म्मान्तरानुत्पत्तेः, निर्गुणे(१७) द्रव्ये द्रव्यारम्भानुगुणक्रियानुपपत्तेश्च। तथापि परमाणौ श्यामादिनिवृत्तिसमकालं रक्ताद्युत्पत्तिः स्यादिति चेत् न, पूर्वरूपादिध्वंसस्य रूपान्तरे हेतुत्वात्। इति नवक्षणा। अथ दशक्षणा। सा च आरम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्यात्। तथा हि—वह्निसंयोगाद्द्व्यणुकारम्भके परमाणौ क्रिया। ततो विभागः। तत आरम्भकसंयोगनाशः।

---

१३। नवक्षणां प्रक्रियामुपपादयति—तथाहीत्यादिना।

१४। द्व्यणुकनाशादिक्षणानामिव प्रकृतत्वात्तत्क्षणत एव गणनारम्भ इत्यवधेयं। एवं सर्व्वत्र।

१५। परमाणुगतरूपनाशं प्रति द्व्यणुकात्मकद्रव्यस्य प्रतिबन्धकतया तत्पूर्व्वं श्यामनाशासम्भवादाह—तत इति।

१६। तस्मिन् परमाणौ तदानीं क्रियान्तराभावे हेतुमाह—कर्म्मवतीति। कर्म्मवति कर्म्मान्तरानुदयेन कर्म्मोत्पत्तौ कर्म्मणः प्रतिबन्धकत्वकल्पनादिति भावः।

१७। गुणोत्पत्तिमन्तरेण कर्म्मानुत्पत्तौ हेतुमाह—निर्गुण इति, कारणभावविभागस्य कारणाकारणविभागजनकत्वाभावपक्ष एव परमाण्वन्तरे कर्म्मचिन्तनं विनैव ग्रन्थान्तरे अष्टक्षणप्रक्रिया, सा च निर्गुणद्रव्यारम्भानुगुणक्रियोत्पत्तौ बाधकाभावेन रक्तोत्पत्तिक्षण एव द्रव्यारम्भानुगुणक्रियोत्पत्तिः सम्भवतीत्यभिप्रायेण समर्थनीया।

ततो द्व्यणुकनाश(१८)विभागजविभागौ ।१। तत: (१९) श्यामनाश-पूर्वसंयोगनाशौ ।२। ततो (२०) रक्तोत्पत्त्युत्तरसंयोगौ ।३। ततो वह्नि-नोदनजन्यपरमाणुकर्म्मणो नाश: ।४। ततोऽदृष्टवदात्मसंयोगाद्द्रव्या-रम्भानुगुणक्रिया ।५। ततो विभाग: ।६। तत: पूर्वसंयोगनाश: ।७। तत आरम्भकसंयोग: ।८। ततो द्व्यणुकोत्पत्ति: ।९। ततो रक्ताद्युत्पत्ति:।१०। अथैकादशक्षणा। वह्निसंयोगात् परमाणौ कर्म्म। ततो विभाग:। ततो द्रव्यारम्भकसंयोगनाश:। ततो द्व्यणुकनाश: ।१। ततो द्व्यणुक-नाशविशिष्टं कालमपेक्ष्य विभागजविभागश्यामनाशौ ।२। तत: पूर्व-संयोगनाशरक्तोत्पत्ती ।३। तत उत्तरसंयोग: ।४। ततो वह्निनोदनजन्य-परमाणौ कर्म्मनाश: ।५। ततोऽदृष्टवदात्मसंयोगाद्द्रव्यारम्भानु-गुणक्रिया। ६। ततो विभाग:। ७। तत: पूर्व्वसंयोगनाश:। ८। ततो द्रव्यारम्भकोत्तरसंयोग: ।९। ततो द्व्यणुकोत्पत्ति: ।१०। ततो रक्ताद्युत्पत्ति: ।११। मध्यशब्दवदेकस्मादग्निसंयोगान्न रूप-नाशरक्तोत्पादौ तावत्कालमेकस्याग्नेरस्थिरत्वात् (२२), किञ्च

---

१८। आरम्भकसंयोगनाशस्य तृतीयक्षण एवोत्पन्नतया चतुर्थक्षणे परमाण्वाकाशविभाग: सम्भवतीति भाव:।

१९। परमाणुश्यामनाशपरमाण्वाकाशसंयोगनाशावित्यर्थ:। परमाणुश्यामनाशं प्रति द्व्यणुकनाशस्य हेतुत्वात् पूर्व्वं परमाणुश्यामनाशासम्भवादिति भाव:।

२०। उत्तरसंयोगं विना पूर्व्वकर्म्मणो नाशासम्भवेन द्रव्यारम्भानुगुणक्रियानुत्पत्ति-रिति भाव:।

२१। अत्र यत्र वाग्निसंयोगो द्व्यणुकनाशक: स एव श्यामनाशे रक्तोत्पादे च हेतुरिति केषाञ्चिन्मतं "पुनरग्न्यन्तरसंयोगा"दिति भाष्यविरुद्धं नादरणीयमित्यभिप्रेत्याह—मध्यमशब्द-वदिति। यथा मध्यमशब्दात् पूर्व्वशब्दनाशोत्तरशब्दोत्पादौ भवतस्तथैकस्माद्द्व्यणुकनाशकाग्नि-संयोगात् श्यामनाशरक्तोत्पादौ न भवत इति व्यतिरेके दृष्टान्त:।

२२। तावत् कालं—श्यामनाशोत्पत्त्यव्यवहितपूर्व्वक्षणपर्य्यन्तं, अग्ने:—द्व्यणुक-नाशकाग्निसंयोगस्य। अस्थिरत्वादिति—यदा परमाणावग्निसंयोगाद्द्व्यणुकासमवायिकारण-संयोगविनाशकं परमाणौ कर्म्म, तदैव नोदनाभिघातान्यतरात्मकस्याग्निपरमाणुसंयोगस्य जनक

(२३) नाशक एव यद्युत्पादकस्तदा(२४)नष्टे रूपादावग्निनाशे नीरूपश्चिरं परमाणुः स्यात् (२५)। उत्पादकश्चेन्नाशकस्तदा (२६) रक्तोत्पत्तौ तदग्निनाशे रक्ततरता न स्यात् (२७)। अथ परमाणु-

---

यदग्निकर्म तस्य विनाशः, कर्मणः स्वजन्यसंयोगविनाश्यत्वात् तदुत्तरक्षणे पुनरग्नौ कर्म कारणी-भूतवेगाभिघातादेः स्वसमानाधिकरणकर्मध्वंसरूपसहकारिणश्च सत्त्वात्, ततो विभागः, ततो द्व्यणुकनाशसमकालमग्निपरमाणुसंयोगस्य नाशेन श्यामरूपोत्पत्त्यव्यवहितपूर्व्वक्षणपर्य्यन्तं तस्यास्थिरत्वादिति भावः।

२३। ननु मास्तु द्व्यणुकनाशकाग्निसंयोगस्य परमाणुश्याननाशकत्वं रक्तोत्पादकत्वञ्च, परन्तु द्व्यणुकनाशसमकालोत्पन्नाग्न्यन्तरसंयोगस्य परमाणौ श्यामनाशकत्वं रक्तोत्पादकत्वञ्च स्यादित्याशङ्कायामाह—किञ्चेति।

२४। अत्र स्वान्ययोगव्यवच्छेदकैवकारेण नाशकतावच्छेदकतावच्छिन्नावृत्तित्वरूपा व्याप्ति-रुत्पादकतावच्छेदके लभ्यते। तथाच—यद्युत्पादकतावच्छेदकं नाशकतावच्छेदकव्याप्यं तदा इत्यर्थः।

२५। नष्टे रूपादौ—रूपपरम्परायां नष्टायां, अग्निनाशे—चरमाग्निसंयोगनाशे। परमाणौ पाकेन रक्तोत्पत्तिस्थले प्रथमाग्निसंयोगादिना रूपोत्पत्तिस्तेनैव रूपनाशः, पुनरग्नि-संयोगानन्तरं पुना रूपोत्पत्तिसम्भवेऽपि चरमाग्निसंयोगानन्तरं तेन रूपोत्पादे तद्रूपस्य तेनैवाग्निसंयोगेन नाशसम्भवात्तदग्निसंयोगस्यापि नाशे रूपान्तरोत्पादासम्भवेन नीरूपश्चिरं परमाणुः स्यादित्यर्थः। न च चरमाग्निसंयोगेन विनश्यदवस्थेनैव रूपोत्पत्तिस्तदुत्तरक्षणे च न तद्रूपनाशः, पूर्व्वक्षणे अग्निसंयोगाभावादिति वाच्यं, असमवायिकारणस्य कार्य्यसहभावेनैव हेतुतया न्यायवैशेषिकसिद्धतया विनश्यदवस्थेन चरमाग्निसंयोगेन रूपोत्पादासम्भवात्। परमाणुरिति तु वैशेषिकमताभिप्रायेण न्यायनये पूर्व्वोक्तरीत्या घटादेरपि नीरूपत्वप्रसङ्ग-सम्भवादित्यवधेयम्।

२६। ननु रक्तोत्पादकतावच्छेदकवैजात्यं श्यामनाशकतावच्छेदकवैजात्यव्याप्यमिति न ब्रूमः, परन्तु वैजात्ययोरभेदं तेन न साङ्कर्य्यमत आह—उत्पादकश्चेदित्यादि। चेन्नाशक उत्-पादक इति योजना, नाशकतावच्छेदकमेव यद्युत्पादकतावच्छेदकं तदेत्यर्थः।

२७। अयं भावः—रूपनाशकतावच्छेदकं विलक्षणाग्निसंयोगत्वं तदेव यद्युत्पादक-तावच्छेदकं तदा कार्य्यतावच्छेदकमपि सामान्यतः पृथिवीपरमाणुरूपत्वं त्वया वाच्यं, तथा सति क्वचिद्रक्ततरता क्वचिच्च रक्ततमता परमाणौ न स्यात्, कार्य्यवैचित्र्यस्य कारणतावच्छेदकभेदा-धीनत्वात् सिन्दूरादौ रक्ततारतम्यस्यानुभविकतया तत्परमाणुषु तस्यावश्यकत्वात्।

न्तरे (२८) कर्म्मचिन्तनात् (२९) पञ्चमादि(३०)क्षणेऽपि गुणोत्पत्तिः। तथा हि—एकत्र परमाणौ कर्म्म। ततो विभागः। तत आरम्भकसंयोगनाशपरमाण्वन्तरकर्म्मणी। ततस्तु द्व्यणुकनाशः। परमाण्वन्तरकर्म्मजश्च विभाग इत्येकः कालः।१। ततः श्यामादिनाशः। विभागाच्च पूर्वसंयोगनाश इत्येकः कालः।२। ततो रक्तोत्पत्तिर्द्रव्यारम्भकसंयोगश्चेत्येकः कालः।३। अथ द्व्यणुकोत्पत्तिः।४। ततो रक्तोत्पत्तिः।५। इति पञ्चक्षणा। द्रव्यनाशसमकालं परमाण्वन्तरे कर्म्मचिन्तनात् षष्ठे गुणोत्पत्तिः। तथा हि—परमाणुकर्म्मणा परमाण्वन्तरविभागः। तत आरम्भकसंयोगनाशः। अथ द्व्यणुकनाशपरमाण्वन्तरकर्म्मणी।१। अथ श्यामादिनाशः परमाण्वन्तरकर्म्मजश्च विभागः।२। ततो रक्तोत्पत्तिः परमाण्वन्तरे पूर्वसंयोगनाशश्च।३। ततः परमाण्वन्तरसंयोगः।४। ततो द्व्यणुकोत्पत्तिः।५। अथ रक्तोत्पत्तिः।६। इति षट्क्षणा। एवं श्यामनाशक्षणे(३१) परमाण्वन्तरे कर्म्मचिन्तनात् सप्तक्षणा। तथा हि—परमाणौ कर्म्म, ततः परमाण्वन्तरेण विभागः, तत आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशः।१। ततः श्यामादिनाशपरमाण्वन्तरकर्म्मणी।२। ततो रक्तोत्पत्तिः परमाण्वन्तरे कर्म्मजविभा-

---

इदञ्च पूर्व्वरूपनाशकाग्निसंयोगमावस्योत्तररूपहेतुत्वमित्यभिप्रायेण "पुनरन्यस्मादग्निसंयोगादिति भाष्यानुरोधेन चोक्तं, वस्तुतो रक्ततारतम्यस्य पूर्व्वरूपविशेषध्वंसजन्यत्वादभाष्यस्य द्व्यणुकनाशकाग्निसंयोगापेक्षयान्यपरत्वादुत्पादकविनाशकयोरग्निसंयोगयोरेकत्वानेकत्वे अनियम एवेति ध्येयम्।

२८। परमाण्वन्तरे—द्व्यणुकनाशकक्रियावत् परमाणुभिन्नद्व्यणुकान्तरारम्भकपरमाणावित्यर्थः।

२९। कर्म्मचिन्तनात्—द्व्यणुकारम्भकसंयोगनाशोत्पत्त्यादिक्षणे—द्व्यणुकान्तरारम्भककर्म्मचिन्तनादित्यर्थः।

३०। आदिना षष्ठसप्तमाष्टमक्षणानां परिग्रहः।

३१। ननु यद्येकस्मिन् परमाणावग्निसंयोगसमकालं परमाण्वन्तरे कर्म्मोत्पत्तिस्तदुत्तरक्षणेषु क्रमेणैकत्र क्रियाविभागपूर्व्वसंयोगनाशद्व्यणुकनाशाः, अपरत्र विभागपूर्व्वसंयोगनाशोत्तरसंयोगोत्पत्तिद्व्यणुकोत्पत्तिरूपोत्पत्तयस्तत्र विचया। एवं यस्मिन्

गश्च।३। ततः परमाण्वन्तरेण पूर्वसंयोगनाशः।४। ततः परमाण्वन्तरेण संयोगः।५। ततो द्व्यणुकोत्पत्तिः।६। ततो रक्तोत्पत्तिः।७। इति सप्तक्षणा॥ रक्तोत्पत्तिसमकालं परमाण्वन्तरे कर्म्मचिन्तनात् अष्टक्षणा। तथा हि—परमाणौ कर्म्म, ततः परमाण्वन्तरविभागः, तत आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशः।१। ततः श्यामनाशः।२। ततो रक्तोत्पत्तिपरमाण्वन्तरकर्म्मणी।३। ततः परमाण्वन्तरकर्म्मजविभागः।४। ततः परमाण्वन्तरे पूर्वसंयोगनाशः।५। ततः परमाण्वन्तरसंयोगः।६। ततो द्व्यणुकोत्पत्तिः।७। अथ रक्तोत्पत्तिः।८। इत्यष्टक्षणा॥१०५॥

नैयायिकानामिति। नैयायिकानां मते द्व्यणुकादौ अवयविन्यपि पाको भवति। तेषामयमाशयः—अवयविनां सच्छिद्रत्वादङ्गैः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाको न विरुध्यते (३२)। वैशेषिकमतेऽनन्ता(३३)वयवतन्नाशकल्पने गौरवात्।

---

परमाणौ कर्म्मोत्पत्तिसमकालं परमाण्वन्तरे कर्म्मोत्पत्तिस्तत्र विचक्षणा। एवं यत्रैकस्मिन् परमाणौ कर्म्मोत्पत्तिसमकालं परमाण्वन्तरे कर्म्मोत्पत्तिस्तत्र चतुःक्षणापि सम्भवति प्रक्रियेति। चेन्न द्व्यणुकनाशमन्तरेण परमाणौ श्यामादिनिवृत्तिस्तामन्तरेण च रक्तोत्पत्तिर्न सम्भवतीत्युक्तप्रायं। इत्यत्र द्व्यणुकनाशक्षणे परमाणुश्यामनाशक्षणे रक्तोत्पत्तिक्षणे वा द्व्यणुकान्तरोत्पत्तौ द्विविधतुःक्षणा प्रक्रिया वाच्या, नह्येतेषु क्षणेषु द्व्यणुकान्तरोत्पत्तिः सम्भवति, तथा सति तत्पूर्व्वक्षणेषु परमाणोररक्तत्वेन तदारब्धद्व्यणुकस्याप्यरक्तत्वप्रसङ्गादित्यन्यत्र विस्तरः।

३२। साक्षात्परम्परासाधारणसकलावयवावच्छेदेन तेजःसंयोगस्य रूपादिनाशहेतुत्वे मानाभावेनारम्भकसंयोगावच्छेदेन विजातीयतेजःसंयोगादेव रूपादिनाशसम्भवेऽप्यारम्भकतेजःसंयोगस्याभिघातादेस्तदानीं तत्र सद्भावे मानाभावेन पूर्वोक्तरीत्यावयविनाशस्याप्रसक्तेरिति भावः। यदप्युक्तं वैशेषिकैरवयविरूपं प्रत्यवयवरूपहेतुतायां व्यभिचारापत्त्या नावयविनि पाकेन रूपोत्पाद इति, तदपि न अवयवरूपादेर्विजातीयरूपादिकं प्रत्येव हेतुतया व्यभिचाराप्रसक्तेः। एतेनावयविरूपनाशे आश्रयनाशहेतुतायां व्यभिचारापत्त्या पाकेनावयवविरूपनाशासम्भव इत्यप्यपास्तं आश्रयनाशजन्यतावच्छेदककोटौ वैजात्यस्य निवेशनीयत्वादिति ध्येयम्।

३३। अवयविपाकानभ्युपगमे साधकाभावमुक्त्वा तत्र बाधकमप्याह—अनन्तेति।

नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते।
द्वित्वादय: परार्द्धान्ता अपेक्षाबुद्धिजा मता: ॥१०७॥
अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिता:।
अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपित: ॥१०८॥

इत्यच्च (३४) सोऽयं घट इत्यादिप्रत्यभिज्ञाऽपि सङ्गच्छते (३५)। यत्र तु न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियत इति। सङ्ख्यां निरूपयितुमाह—गणनेति। गणनव्यवहारासाधारण(३६)कारणं संख्येत्यर्थ: ॥ १०६ ॥

नित्येष्विति। नित्येषु परमाण्वादिषु एकत्वं नित्यम्। अनित्ये घटादौ एकत्वमनित्यमित्यर्थ:। द्वित्वादयो व्यासज्यवृत्तिसंख्या अपेक्षाबुद्धिजन्या: ( ३७ ) ॥ १०७ ॥

अनेकेति। यद्यपि द्वित्वादिसमवाय: प्रत्येकं घटादावपि (३८) वर्त्तते, तथाप्येको द्वाविति प्रत्ययाभावात् एको न द्वाविति प्रत्ययसम्भवाच्च द्वित्वादीनां पर्य्याप्तिलक्षण: कश्चन सम्बन्धोऽनेकाश्रयोऽभ्युपगम्यते (३९)। अपेक्षाबुद्धिनाशादिति। प्रथम(४०)मपेक्षा-

---

३४। इत्यच्च—अवयविनाशानङ्गीकारे च।

३५। पूर्व्वावयविनाशे तूत्तरोत्पन्नावयविनि पूर्व्वावयविनो भेदाभावेन अभेदावगाहिनी प्रत्यभिज्ञा न स्यादिति भाव:।

३६। कालादावतिव्याप्तिमाशङ्कयाह—असाधारणमिति।

३७। एकत्वान्यसंख्यामात्रमपेक्षाबुद्धिरूपनिमित्तकारणजन्यमित्यर्थ:। असमवायिकारणन्तु द्वित्वादिकं प्रति समवायिकारणगतयावदेकत्वमिति बोध्यम्। ननु योग्यद्वित्वादावपेक्षाबुद्धेर्हेतुत्वेऽपि अयोग्यद्वित्वादौ तद्धेतुत्वे मानाभाव इति चेन्न योग्यद्वित्वादेरपेक्षाबुद्धिजन्यत्वेऽतीन्द्रियद्वित्वादावप्यनेकसंख्यात्वादिना तदनुमानात्।

३८। तथा चानेकाश्रयपर्य्याप्तेति मूलमसङ्गतमिति भाव:।

३९। तथाच पर्य्याप्तिसम्बन्धेन द्वित्वस्य प्रत्येकमभावात् एको द्वावित्यप्रत्ययस्य एको न द्वाविति प्रत्ययस्य चोपपत्तिरिति भाव:। नचैवमपि आकाशाविति वाक्यस्य प्रामाण्यापत्ति:

बुद्धिस्ततो द्वित्वोत्पत्तिः। ततो विशेषज्ञानं द्वित्वत्वनिर्विकल्पकरूपम्। ततो द्वित्वत्वविशिष्टप्रत्यक्षम्। अपेक्षाबुद्धिनाशश्च ततो द्वित्वनाश इति। यद्यपि ज्ञानानां क्षणमात्रस्थायित्वं योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात् तथाप्यपेक्षाबुद्धेस्त्रिक्षणस्थायित्वं कल्प्यते। अन्यथा (४१) निर्विकल्पकाले अपेक्षाबुद्धिनाशानन्तरं द्वित्वस्यैव (४२) नाशः स्यात्, न तु द्वित्वप्रत्यक्षम्, तदानीं विषयाभावात्। विद्यमानस्यैव (४३) चक्षुरादिना ज्ञानजननोपगमात्। तस्माद्द्वित्वप्रत्यक्षादिक(४४)मपेक्षाबुद्धेर्नाशकं कल्प्यते। न चापेक्षाबुद्धिनाशात् कथं द्वित्वनाश इति वाच्यम्, कालान्तरे द्वित्वप्रत्यक्षाभावात् अपेक्षाबुद्धिस्तदुत्पादिका तन्नाशात्तन्नाश इति कल्प-

---

समवायेनैव पर्य्याप्तिसम्बन्धेनापि द्वित्वस्याकाशे सत्त्वादिति वाच्यं, उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्य्याप्तेरेव द्वित्वसम्बन्धत्वोपगमात् आकाशत्वव्याप्यत्वविशिष्टपर्य्याप्तेरप्रसिद्धत्वात् द्वित्वपर्य्याप्तेर्द्वित्वस्वरूपतया घटादावपि सत्त्वात्। न चैवमुद्देश्यतावच्छेदकव्याप्यत्वविशिष्टसमवायस्य द्वित्वसंसर्गतां स्वीकृत्यापि आकाशाविति प्रयोगवारणसम्भवादलं पर्य्याप्त्येति वाच्यं, तथा सति समवायस्यैकत्वेन घटत्वव्याप्यसमवायस्याप्रसिद्ध्या घटाविति वाक्यस्याप्यप्रामाण्यापत्तेरित्यादिकमनुसन्धेयम्।

४०। अपेक्षाबुद्धिनाशाच्च तेषां नाश इति मूलस्य तृतीयक्षणे अपेक्षाबुद्धिनाशाच्चतुर्थक्षणे द्वित्वादीनां नाश इति नार्थः, परन्तु चतुर्थक्षणे अपेक्षाबुद्धिनाशात् पञ्चमक्षणे तेषां नाश इत्यर्थ इति ज्ञापनाय वैशेषिकप्रक्रियां प्रदर्शयति—प्रथममित्यादिना।

४१। अन्यथा—अपेक्षाबुद्धेर्द्विक्षणमात्रावस्थायित्वे।

४२। एवकारो भिन्नक्रमे द्वित्वस्य नाश एवेत्यर्थः।

४३। ननु तदानीं द्वित्वाभावेऽपि तत्पूर्व्वक्षणे द्वित्वसत्त्वान्न द्वित्वप्रत्यक्षानुपपत्तिरत आह—विद्यमानस्यैवेति, "सम्बद्धं वर्त्तमानञ्च गृह्यते चक्षुरादिना" इत्यनुरोधाल्लौकिकप्रत्यक्षं प्रति द्वित्वादेर्विषयस्य कार्य्यसहभावेन हेतुत्वादिति भावः।

४४। आदिना त्रित्वद्विपृथक्त्वादिपरिग्रहः। योग्यविभुविशेषगुणत्वस्य स्वत्वस्य चाननुगतस्याभावेन स्वोत्तरोत्पन्नगुणत्वस्यानुगतस्याभावात्तद्रूपेणैव नाश्यनाशकभावस्य वाच्यतया द्वित्वत्वविशिष्टप्रत्यक्षरूपकार्य्यानुरोधेन द्वित्वादिप्रत्यक्षस्यैव तत्तद्व्यक्तित्वेनापेक्षाबुद्धिनाशकत्वं कल्प्यते, न तु द्वितीयक्षणोत्पन्नस्मरणादेरिति भावः।

**अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरुच्यते ।**

**परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥१०९॥**

नात्। अत (४५) एव तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यत इति कल्प्यते (४६)। न (४७) चापेक्षाबुद्धेर्द्वित्वप्रत्यक्षे कारणत्वमस्त्विति वाच्यम्। लाघवेन (४८) द्वित्वं प्रति कारणत्वस्यैवोचितत्वात्। अतीन्द्रिये (४९) द्व्यणुकादावपेक्षाबुद्धिर्योगिनाम्। सर्गादिकालीनपरमाण्वादावीश्वरीया(५०)पेक्षाबुद्धिर्ब्रह्माण्डा(५१)न्तरवर्त्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति ॥ १०८ ॥

अपेक्षाबुद्धिः केत्यत आह—अनेकेति। अयमेकः (५२) अय-

---

४५। नन्वपेक्षाबुद्धेर्द्वित्वोत्पादकत्वे चैत्रीयापेक्षाबुद्धिजन्यद्वित्वस्यापेक्षाबुद्धिशून्येन मैत्रेण ग्रहणापत्तिः, सन्निकर्षादिघटितसामग्र्याः सत्त्वात्तद्वारणाय विषयतासम्बन्धेन तत्पुरुषीयप्रत्यक्षे तद्भिन्नपुरुषीयापेक्षाबुद्धिजन्यद्वित्वादेस्तादात्म्येन प्रतिबन्धकत्वकल्पने च गौरवमत आह—अत एवेति। पूर्व्वोक्तयुक्त्यापेक्षाबुद्धेर्द्वित्वोत्पादकस्यावश्यकत्वादेवेत्यर्थः।

४६। तथा चान्यथानुपपत्त्या पूर्व्वोक्तप्रतिबध्यप्रतिबन्धकभावकल्पनागौरवं न दोषायेति भावः।

४७। ननु कालान्तरे द्वित्वप्रत्यक्षवारणाय द्वित्वप्रत्यक्षं प्रत्येवापेक्षाबुद्धेर्हेतुत्वमस्तु न तु द्वित्वं प्रतीत्याशङ्कते—न चेति।

४८। द्वित्वप्रत्यक्षत्वापेक्षया द्वित्वत्वस्य कार्य्यतावच्छेदकस्य लघुत्वादिति भावः।

४९। नन्वपेक्षाबुद्धेर्द्वित्वाद्युत्पादकत्वं न सम्भवति द्व्यणुकस्यास्मदीयप्रत्यक्षागोचरतया तच्चापेक्षाबुद्ध्यसम्भवेन तत्र त्रित्वानुत्पत्त्यापत्तेः, न चेष्टापत्तिः भावकार्य्यस्यासमवायिकारणजन्यत्वनियमेन द्व्यणुकगतत्रित्वं विना त्र्यणुकपरिमाणानुत्पत्तेः परिमाणस्य समानजातीयोत्कृष्टपरिमाणजनकत्वनियमेण द्व्यणुकपरिमाणस्य तत्रासमवायिकारणत्वासम्भवादत आह—अतीन्द्रिये द्व्यणुकादाविति। आदिना परमाणुपरिग्रहः।

५०। सर्गादौ योगिनामभावादाह—ईश्वरीयेति।

५१। ईश्वरीयापेक्षाबुद्धेर्द्वित्वोत्पादकत्वे तस्य नित्यत्वेन तद्द्वित्वस्य नित्यत्वापत्तिमाशङ्क्याह—ब्रह्माण्डान्तरेति।

५२। नन्वेकत्वांशे निर्धर्म्मितावच्छेदकैकत्वज्ञानाद्द्वित्वाद्युत्पत्त्यापत्तिरतो व्याचष्टे

**अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ।**
**अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥११०॥**
**संख्यातः परिमाणाच्च प्रचयादपि जायते ।**
**अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥१११॥**

मेक इत्याकारिका इत्यर्थः । इदन्तु बोध्यं यत्रानियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्वसंख्योत्पद्यते । यथा सेनावनादाविति कन्दलीकारः । आचार्य्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते । तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वजातिर्नातिरिच्यते । सेनादौ चोत्पन्नेऽपि (५३) त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात् (५४) इत्यञ्च इतो बहुतरेयं सेनेति प्रतीतिरुपपद्यते । बहुत्वस्य संख्यान्तरत्वे तत्तारतम्याभावान्नोपपद्येदित्यवधेयम् ॥ परिमाणं निरूपयति—परिमाणमिति । परिमितिव्यवहारासाधारणं कारणं परिमाणमित्यर्थः ॥ १०९ ॥

तच्चतुर्विधम् अणु (५५) महद् दीर्घं ह्रस्वञ्चेति । तत् परिमाणम् । नित्यमित्यत्र परिमाणमित्यनुषज्यते ॥

---

अयमेक—इति । तत्तद्व्यक्तिमात्रनिष्ठेदन्त्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताशालिनी बुद्धिरपेक्षाबुद्धिपदार्थ इति भावः ।

५३ । अनियतैकत्वज्ञानस्यापि त्रित्वाद्युत्पादकत्वादिति भावः ।

५४ । दोषात्—नियतानेकैकत्वज्ञानाभावात् । अनियतानेकैकत्वज्ञानस्य त्रित्वोत्पत्तिकारणत्वेऽपि त्रित्वांशे त्रित्वत्वप्रकारकप्रत्यक्षे नियतानेकैकत्वज्ञानस्यैव हेतुतया तं विना न त्रित्वत्वादिप्रकारकं प्रत्यक्षमिति भावः ।

५५ । यद्यप्यणुत्वमेव ह्रस्वत्वमस्तु महत्त्वमेव दीर्घत्वमस्त्विति कुतश्चातुर्व्विध्यं, तथापि तदवधिकाणुतया प्रतीयमानेऽपि तदवधिकह्रस्वत्वाव्यवहारात् तदवधिकमहत्त्ववत्तया प्रतीयमानेऽपि तदवधिकदीर्घत्वाव्यवहाराच्च ह्रस्वत्वदीर्घत्वयोरतिरिक्तपरिमाणतया तच्चातुर्व्विध्यं बोध्यम् । केचित्तु दीर्घमिति प्रतीतेरवयवसंयोगविशेषेणैवोपपत्तेः दीर्घत्वं न परिमाणमन्यथा वर्त्तुलत्वचतुरस्रत्वादीनां परिमाणान्तरत्वापत्तेरित्याहुः ।

परिमाणं घटादौ तु परिमाणजमुच्यते।
प्रचयः* शिथिलाख्यो यः संयोगस्तेन जन्यते॥११२॥
परिमाणं तूलकादौ नाशस्त्वाश्रयनाशतः।
संख्यावत्तु पृथक्त्वं स्यात् पृथक्प्रत्ययकारणम्॥११३॥

जायत इत्यत्रापि परिमाणमित्यनुवर्त्तते। अनित्यमिति पूर्वेणान्वितम्। तथा चानित्यं परिमाणं सङ्ख्याजन्यं परिमाणजन्यं प्रचयजन्यं चेत्यर्थः। तत्र सङ्ख्याजन्यमुदाहरति—अनित्यमिति। द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकादिपरिमाणं वा न कारणं परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात्। द्व्यणुकादिपरिमाणन्तु परमाणुत्वापेक्षया नोत्कृष्टम्। त्रसरेणुपरिमाणन्तु न सजातीयम्। अतः परमाणौ द्वित्वसङ्ख्या द्व्यणुकपरिमाणस्य, द्व्यणुके त्रित्वसङ्ख्या च त्रसरेणुपरिमाणस्यासमवायिकारणमित्यर्थः॥ ११० ॥ १११ ॥

परिमाणजन्यमुदाहरति—परिमाणं घटादाविति। परिमाणजं कपालादिपरिमाणजन्यम्। प्रचयजन्यमुदाहर्त्तुं प्रचयं निर्वक्ति—प्रचय इति॥ ११२ ॥

परिमाणमाश्रयनाशादेव नश्यतीत्याह—नाश इति। अर्थात्(५६) परिमाणस्य। न चावयविनाशः कथं परिमाणनाशकः सत्यप्यवयविनि त्रिचतुरपरमाणुविश्लेषे तदुपचये चावयविनः प्रत्यभिज्ञानेऽपि

५६। अर्थात्—प्रकरणादित्यर्थः।

*। किञ्चिदवयवावच्छेदेनावयवान्तरासंयोगिनि महत्यवयवे वर्त्तमानः संयोगः प्रचय इत्येके। अत्र महत्पदं न देयं, परमाणुसंयोगस्य प्रचयत्वे क्षतिविरहादित्यन्ये। भूयोऽवयवावच्छेदेनावयवान्तरासंयोगिन्यवयवे वर्त्तमानः संयोगः प्रचयस्तेन परमाणुसंयोगो द्व्यणुकसंयोगो वा न प्रचय इत्यपरे।

परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यम्, परमाणुविश्लेषे द्व्यणुकस्य नाशोऽवश्यमभ्युपेयस्तन्नाशे च त्रसरेणुनाशः एवं क्रमेण महावयविनो नाशस्यावश्यकत्वात्। सति च नाशकेऽनभ्युपगममात्रेण नाशस्यापवदितुमशक्यत्वात्। शरीरादाववयवोपचयेऽसमवायिकारणनाशस्यावश्यकत्वादवयविनाश आवश्यकः। न च पटाद्यविनाशेऽपि तन्त्वन्तरसंयोगात् परिमाणाधिक्यं स्यादिति वाच्यम्, तत्रापि वेमाद्यभिघातेन समवायिकारणतन्तुसंयोगनाशात् पटनाशस्यावश्यकत्वात्। किञ्च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्वं तत्पट एव न स्यात् तत्तन्तुरूपकारणाभावात्। तत्तन्तोरवयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत्। तस्मात् तत्र तन्त्वन्तरसंयोगे सति पूर्वपटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्य्यम्। अवयविनः प्रत्यभिज्ञानन्तु साजात्येन दीपकलिकादिवत्। न च पूर्वतन्तव एव तन्त्वन्तरसहकारात् पूर्वपटे सत्येव पटान्तरमारभन्तामिति वाच्यम्, मूर्त्तयोः समानदेशताविरोधात्तत्र पटद्वयासम्भवात्। एकदा नानाद्रव्यस्य तत्रोपलम्भस्य तस्मात् बाधितत्वाच्च। पूर्वद्रव्यस्य प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यस्यावश्यमभ्युपेयत्वात्।

पृथक्त्वं सकारणं निरूपयति—सङ्ख्यावदिति। पृथक्प्रत्ययासाधारणं कारणं पृथक्त्वम्। तन्नित्यतादिकं सङ्ख्यावत्। यथा हि— नित्येषु एकत्वं नित्यम्, अनित्येऽनित्यम् अनित्यमेकत्वम् आश्रयद्वितीयक्षणे चोत्पद्यते (५७) आश्रयनाशान्नश्यति, तथैकपृथक्त्व (५८) मपि। द्वित्वादिवद्- (५९) द्विपृथक्त्वादिकमपीत्यर्थः। नन्वय-

---

५७। अत्र स्वाश्रयावयवगतैकत्वासमवायिकारणकञ्चेति पूरणीयम्।

५८। एकपृथक्त्वं—एकसमवेतपृथक्त्वं।

५९। तथाच द्विपृथक्त्वादौ समानाधिकरणान्येकपृथक्त्वान्यसमवायिकारणानि, इदमेकं पृथगिदमेकं पृथगिति नानैकपृथक्त्वविषयिण्यपेक्षाबुद्धिर्निमित्तकारणं तादृशबुद्धिनाशात्

**अन्योन्याभावतो नास्य चरितार्थत्वमुच्यते।**
**अस्मात् पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥११४॥**
**अप्राप्तयोस्तु या प्राप्तिः * सैव संयोग ईरितः।**
**कीर्त्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥११५॥**

मस्मात् पृथग् इत्यादावन्योन्याभावो भासते तत् कथं पृथक्त्वं गुणान्तरं स्वीक्रियते। न चास्तु पृथक्त्वं न त्वन्योन्याभाव इति वाच्यम्। रूपं न घट इति प्रतीत्यनापत्तेः। न हि रूपे घटावधिकं पृथक्त्वं गुणान्तरमस्ति, न वा घटे घटावधिकपृथक्त्वमस्ति, येन परम्परासम्बन्धः कल्प्यत (६०) इत्यत आह—अन्योन्याभावत इति। विलक्षणेति. ननु शब्दवैलक्षण्यमेव न त्वर्थवैलक्षण्यमिति चेत्? न। विनार्थभेदं घटात् पृथग् इतिवद्-घटो नेत्यत्रापि पञ्चमी स्यात्(६१)। तस्माद्-यदर्थकयोगे पञ्चमी सोऽर्थो नञर्थान्योन्याभावतो भिन्नो गुणान्तरं कल्प्यत इति ॥ ११३ ॥ ११४ ॥

संयोगं निरूपयति—अप्राप्तयोरिति। तं विभजते। [illegible]त इति। एष संयोगः ॥ ११५ ॥

---

क्वचिदाश्रयनाशात् क्वचिदुभाभ्यां द्विपृथक्त्वादिकं नश्यतीति भावः। अतोभय[illegible]तपृथक्त्वं द्विपृथक्त्वं वितयसमवेतं पृथक्त्वं त्रिपृथक्त्वमित्यादिरीत्या बोध्यं।

६०। सामानाधिकरण्यरूपपरम्परासम्बन्धविषयकत्वमुक्तप्रतीतेः कल्प्यमित्यर्थः।

६१। अन्योन्याभावार्थकपदयोगस्य पञ्चमीप्रयोजकस्य तत्र सत्त्वादिति भावः। अत्र नव्याः—अन्योन्याभाव एव पृथक्त्वं नतु गुणान्तरं। न च घटो नेत्यत्र पञ्चम्यापत्तिरिति वाच्यं, निपातातिरिक्तान्योन्याभावार्थकपदयोगस्यैव पञ्चमीप्रयोजकत्वकल्पनात् अनुशासनस्य प्रयोगाधीनत्वादित्याहुः।

* प्राप्तिः—सम्बन्धः स च समवायोपीत्यत उक्तं—अप्राप्तयोरिति। समवायस्तु नाप्राप्तयोः सम्बन्धः। एतत्तु स्वरूपकथनं लक्षणन्तु संयोगत्वं जातिरिति।

**तथोभयक्रियाजन्यो भवेत् संयोगजोऽपरः।**

**आदिमः श्येनशैलादिसंयोगः परिकीर्त्तितः॥११६॥**

**मेषयोः सन्निपातो यः स द्वितीय उदाहृतः।**

**कपालतरुसंयोगात् † संयोगस्तरुकुम्भयोः॥११७॥**

**तृतीयः स्यात् कर्म्मजोऽपि द्विधैव परिकीर्त्तितः।**

**अभिघातो नोदनञ्च शब्दहेतुरिहादिमः॥ ११८॥**

सन्निपातः संयोगो द्वितीय उभयकर्म्मजः। तृतीय इति संयोगज इत्यर्थः। तृतीयः स्यादिति पूर्वेणान्वितम्। आदिमः अभिघातः। द्वितीयो नोदनाख्यः संयोग इति। विभक्तप्रत्ययकारणं विभागं निरूपयति—विभाग इति। एककर्मेति। उदाहरणन्तु श्येनशैलविभागादिकं पूर्ववत् बोध्यम्। तृतीयो विभागजः कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति। आद्यस्तावत्। यत्र कपाले कर्म्म ततः कपालद्वयविभागः। ततो घटारम्भकसंयोगनाशः। ततो घटनाशः। ततस्तेनैव (६२) कपालविभागेन सकर्म्मणः

---

६२। एवकारो भिन्नक्रमो तेन कपालविभागेनैवेत्यर्थः, तथाचैवकारेण कर्म्मणो व्युदासः।

---

† ननु संयोगजसंयोगे मानाभावः, यत्र कपालक्रियया कपालतरुसंयोगस्ततः कुम्भतरुसंयोगस्तत्र कपालक्रियायाः कुम्भतरुसंयोगं प्रति कारणत्वं, न तु कपालतरुसंयोगस्येति चेन्न, समवायेन संयोगं प्रति समवायेन क्रियायाः कारणत्वात् कुम्भे समवायेन क्रियाया अभावेन कुम्भतरुसंयोगानुपपत्तेः, क्रियायाः सामानाधिकरण्यसम्बन्धेन हेतुत्वान्तरकल्पनापेक्षया समवायेन संयोगस्यैव हेतुत्वकल्पनस्यौचित्यात्। वस्तुतो यत्र कपालक्रियया कपालान्तरेण तरुणा चैकस्मिन् क्षणे संयोगस्तदुत्तरक्षणे घटोत्पत्तिः कपालक्रियानाशश्च नाशकस्योत्तरसंयोगस्य पूर्व्वं सत्त्वात् तदुत्तरक्षणे कुम्भतरुसंयोगानुपपत्तेः पूर्व्वक्षणे कपालक्रियाया नाशात् कपालसंयोग एव तत्र कारणमिति संयोगजसंयोगसिद्धिर्निराबाधैवेति ध्येयम्।

शब्दाद्धेतुर्द्वितीयः स्याद्विभागोऽपि त्रिधा भवेत् ।

एककर्म्मोद्भवस्त्वाद्यो द्वयकर्म्मोद्भवोऽपरः ॥ ११९ ॥

विभागजस्तृतीयः स्यात् तृतीयोऽपि द्विधा भवेत् ।

हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ १२० ॥

कपालस्य आकाशविभागो जन्यते (६३)। तत आकाशसंयोग-नाशः। तत उत्तरदेशसंयोगः। ततः कर्म्मनाश इति। न च तेन कर्म्मणैव (६४) कथं देशान्तरविभागो (६५) न जन्यत इति वाच्यम्, एकस्य कर्म्मण आरम्भकसंयोग(६६)प्रतिद्वन्द्विविभागजनकत्वस्यानारम्भकसंयोग(६७)प्रतिद्वन्द्विविभागजनकत्वस्य च विरोधात्। अन्यथा (६८) विकसत्कमलकुड्मलभङ्गप्रसङ्गात् (६९)। तस्माद्-यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत् तदाऽरम्भक-संयोगप्रतिद्वन्द्विविभागं न जनयेत्। न च कारणविभागेनैव द्रव्य-

---

६३। अन्यथा कपालसंयोगस्य नाशकाभावेन नित्यत्वापत्तिरेव कपालाकाशसंयोगस्य प्रतिबन्धकस्य सत्त्वे नोत्तरसंयोगानुपपत्त्या कर्म्मणोऽपि नित्यत्वापत्तिः उत्तरसंयोगस्यैव स्वजनक-कर्म्मनिवर्त्तकत्वादिति भावः।

६४। कपालद्वयविभागजनककर्म्मणैवेत्यर्थः।

६५। देशान्तरविभागः—कपालाकाशादि-विभागः।

६६। आरम्भकसंयोगः—कपालद्वयसंयोगादिः, तत्प्रतिद्वन्द्वी—तद्विरोधी, तन्नाशक इति यावत्। एवमग्रेऽपि।

६७। अनारम्भकसंयोगः कपालाकाशसंयोगादिः।

६८। अन्यथा—आरम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्म्मणोऽनारम्भकसंयोगप्रतिद्वन्द्वि-विभागजनककर्म्मणश्चैक्ये इत्यर्थः।

६९। तत्रावयवच्छेदेनानारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्म्मणः सत्त्वात्तेन कर्म्मणा मूलावच्छिन्नारम्भकसंयोगविरोधिविभागोत्पत्तिस्तेन चारम्भकसंयोगनाशस्तेन च कमलनाशः स्यादिति भावः।

**परत्वञ्चापरत्वञ्च द्विविधं परिकीर्त्तितम् ।**
**दैशिकं कालिकञ्चापि मूर्त्त एव* तु दैशिकम् ॥१२१॥**

नाशात् पूर्व्वं कुतो देशान्तरविभागो न जन्यत (७०) इति वाच्यम्, आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासम्भवात् (७१)। द्वितीयस्तावद्-यत्र हस्तक्रियया हस्ततरुविभागः ततः शरीरेऽपि विभक्तप्रत्ययो भवति, तत्र च शरीरतरुविभागे हस्तक्रिया न कारणम् व्यधिकरणत्वात् शरीरे तु क्रिया नास्ति, अवयविकर्म्मणो यावदवयवकर्म्म नियतत्वात् (७२)। अतस्तत्र कारणाकारण-विभागेन कार्य्याकार्य्यविभागो जन्यत इति। अत एव (७३) विभागो गुणान्तरम्। अन्यथा शरीरे विभक्तप्रत्ययो न स्यात् (७४)। अतः (७५) संयोगनाशेन विभागो नान्यथासिद्धो भवति ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥

परापरव्यवहारनिमित्ते परत्वापरत्वे निरूपयति—परत्वञ्चेति।

---

७०। तथाच पूर्व्वोक्तं "ततो घटनाशस्ततः कपालस्याकाशविभागो जन्यत" इत्यसङ्गतमिति भावः।

७१। अन्यथा कारणमात्रविभागे कर्म्मलक्षणस्यातिव्याप्त्यापत्ते रिति भावः।

७२। क्रियाया व्याप्यवृत्तित्वनियमादिति भावः।

७३। अत एव—वक्ष्यमाणयुक्ते रेव।

७४। यत्र हस्तक्रियया हस्ततरुविभागस्तत्र शरीरे विभागप्रत्ययः सर्व्वानुभवसिद्धः, स च विभागं विना नोपपद्यते, न च शरीरतरुसंयोगनाश एव तद्विषय इति वाच्यं विभागानङ्गीकारे शरीरतरुसंयोगनाशस्यैवासम्भवात्। नहि तत्र हस्तक्रिया शरीरतरुसंयोगनाशिका व्यधिकरणत्वदतस्तत्र हस्ततरुविभागेन शरीरतरुविभागो जन्यते, तेन च शरीरतरुसंयोगनाशो जन्यत इत्युपेयत इति विभागसिद्धिः।

७५। अतः—विभक्तप्रत्ययानुरोधात्। वस्तुतस्तु संयोगाभावो विभागः, विभागाभावो वा संयोग इत्यत्र विनिगमनाविरहेणोभयोरेवातिरिक्तत्वमङ्गीकर्त्तव्यमित्यवधेयम्।

*। विभुद्रव्ये विप्रकृष्टदेशमात्रवृत्तित्वसन्निकृष्टदेशमात्रवृत्तित्वबुद्धेर्निमित्तकारणस्य दिक्संयोगस्यासमवायिकारणस्य चाभावादिति भावः।

परत्वं सूर्य्यसंयोगभूयस्त्वज्ञानतो भवेत्।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥१२२॥
तयोरसमवायी तु दिक्संयोगस्तदाश्रये।
दिवाकरपरिस्पन्दपूर्वोत्पन्नत्वबुद्धितः॥ १२३ ॥
परत्वमपरत्वन्तु तदनन्तरबुद्धितः।
अत्र त्वसमवायी स्यात् संयोगः कालपिण्डयोः १२४

दैशिकमिति—दैशिकपरत्वं बहुतर (१) सूर्य्यसंयोगान्तरितत्वज्ञानादुत्पद्यते। एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्पद्यते। अत्रावधित्वार्थद्वितीयापेक्षा। यथा पाटलिपुत्रात् काशीमपेक्ष्य प्रयागः परः। पाटलिपुत्रात् कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति॥ १२१॥ १२२॥

तयोर्दैशिकपरत्वापरत्वयोः। असमवायी असमवायिकारणम्। तदाश्रये दैशिकपरत्वापरत्वाश्रये। दिवाकरेति—अत्र परत्वम् अपरत्वञ्च कालिकं ग्राह्यम्। यस्य सूर्य्यपरिस्पन्दापेक्षया यस्य सूर्य्यपरिस्पन्दोऽधिकः स ज्येष्ठः। यस्य न्यूनः स कनिष्ठः। कालिकपरत्वापरत्वे जन्यद्रव्य एव (२)। अत्र कालिकपरत्वापरत्वयोः ॥ १२३ ॥ १२४॥

---

१। दैशिकपरत्वापरत्वयोर्निमित्तकारणमाह—बहुतरेत्यादिना। बहुतरसूर्य्यसंयोगान्तरितत्वरूपविप्रकृष्टविषयविषयिण्यपेक्षाबुद्धिर्दैशिकपरत्वं प्रति अल्पसूर्य्यसंयोगान्तरितत्वरूपसन्निकृष्टत्वविषयिण्यपेक्षाबुद्धिर्दैशिकापरत्वं प्रति निमित्तकारणमित्यर्थः।

२। नित्ये तत्पूर्व्वोत्पन्नत्वरूपज्येष्ठत्वबुद्धेस्तदनन्तरोत्पन्नत्वरूपकनिष्ठत्वबुद्धेर्निमित्तकारणस्य कालसंयोगरूपासमवायिकारणस्य चाभावादिति भावः।

अपेक्षाबुद्धिनाशेन * नाशस्तेषामुदाहृतः ।
बुद्धेः प्रकारः प्रागेव प्रायशोऽपि निरूपितः ॥१२५
अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते ।
अप्रमा च प्रमा चेति ज्ञानं द्विविधमुच्यते ॥१२६॥
तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता ।
तत्प्रपञ्चो विपर्य्यासः संशयोऽपि प्रकीर्त्तितः ॥१२७
आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः ।
भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते ॥१२८॥

तेषां कालिकदैशिकपरत्वापरत्वानाम् । क्रमप्राप्तां बुद्धिं निरूपयितुमाह—बुद्धेरिति । अप्रमां विभजते—तच्छून्य इति । तदभाववति तत्प्रकारजं ज्ञानं भ्रम (२) इत्यर्थः । तत्प्रपञ्चः अप्रमाप्रपञ्चः, ॥ १२५ ॥ १२६ ॥

आद्य इति । विपर्य्यास इत्यर्थः । शरीरादौ यदात्मत्वप्रकारकं ज्ञानं गौरोऽहमित्याकारकम् । एवं शङ्खादौ पीतः शङ्ख इत्याकारकं यज्ज्ञानं निश्चयरूपं तद्भ्रम इति ॥ १२८ ॥

२। अत्र च प्रमायामतिव्याप्तिवारणाय तदभाववतीति। तदभाववद्विशेष्यकतदभावप्रकारकप्रमायामतिव्याप्तिवारणाय तत्प्रकारकमिति। इच्छायामतिव्याप्तिवारणाय ज्ञानपदं।

*। स्वनिमित्तकारणविप्रकृष्टत्वादिदुद्वीमां नाशेनेत्यर्थः ।

किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः।
तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥१२९
स संशयो मतिर्या स्यादेकत्वाभावभावयोः।
साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥१३०

किंस्विदिति। किंस्विदिति वितर्के। निश्चयस्य लक्षणमाह—तदभावेति। तदभावाप्रकारकं तत्प्रकारकं ज्ञानं निश्चयः (४) ॥१२९॥

संशयं लक्षयति—स संशय इति। एकधर्म्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशय (५) इत्यर्थः। साधारणेति। उभयसाधारणो यो धर्म्मस्तज्ज्ञानं संशयकारणम्। यथा उच्चैस्तरत्वं स्थाणुपुरुषसाधारणं ज्ञात्वा अयं स्थाणुर्न वेति सन्दिग्धे। एवमसाधारण-

---

४। अत्र च संशये अतिव्याप्तिवारणाय तदभावाप्रकारकमिति निर्व्विकातिव्याप्तिवारणाय—तत्प्रकारकमिति। इच्छायामतिव्याप्तिवारणाय ज्ञानपदं। एवञ्च तद्विशेष्यकत्वावच्छिन्नतदभावप्रकारताशून्यतद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानत्वं यत्र तत्र तन्निश्चयत्वमवसेयं, न तु यथाश्रुतं महानसोऽयं वह्निमान्नवा पर्व्वतो वह्निमानित्यस्य पर्व्वते वह्निनिश्चयत्वानापत्तेरित्यादिकमवधेयम्।

५। ह्रदपर्व्वतौ वह्निमन्ताविति ज्ञानेऽतिव्याप्तिवारणायैकधर्म्मिकेति। एकधर्म्मितावच्छेदकविशिष्टविशेष्यकत्वावच्छिन्नेत्यर्थः। तेन पर्व्वतो वह्निमान्, द्रव्यं वह्न्यभाववदिति ज्ञानव्युदासः। वृक्षः संयोगवान् तदभाववांश्चेति समुच्चयवारणाय विरुद्धेति, विरोधावगाहित्वं तदर्थः। इच्छाव्युदासाय विशेष्यदलं। वस्तुतस्तु घटो द्रव्यं पृथिवी चेति ज्ञानवारणाय भावाभावेति। एकधर्म्मावच्छिन्नविशेष्यकत्वनिवेशे विभिन्नरूपेणैकधर्म्मितावच्छेदकज्ञानस्य संशयत्वापत्तिः, एकधर्म्मावच्छिन्नविशेष्यतावच्छेदकताकत्वनिवेशे च निरवच्छिन्नविशेष्यतावच्छेदकताकसंशयासंग्रहप्रसङ्गः विभिन्नरूपेण धर्म्मितावच्छेदकतावच्छेदकावगाहि-ज्ञानस्य संशयत्वप्रसङ्गश्चेति स्वीयैककोटि-प्रकारतावच्छिन्नप्रतिबध्यता-निरूपितप्र-ति-बन्धकतावच्छेदकीभूतापर-कोटिप्रकारताशालिज्ञानत्वं संशयत्वमिति ध्येयम्। यत्तु संशयत्वं जातिविशेष इति, तन्न चाक्षुषत्वादिना सङ्करप्रसङ्गात्।

धर्म्मिज्ञानमपि कारणम्। यथा शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे गृहीत्वा शब्दो नित्यो न वेति सन्दिग्धे। विप्रतिपत्तिस्तु (६) शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणं शब्दव्याप्तिज्ञानादीनाम् (७) निश्चयमात्रजनकत्वस्वभावात्। किन्तु (८) तत्र शब्देन कोटि-द्वयज्ञानं जन्यते। संशयस्तु मानस एवेति। एवं ज्ञाने प्रामाण्य(९) संशयाद्विषयसंशय इति। एवं व्याप्यसंशयादपि व्यापकसंशय (१०) इत्यादिकं बोध्यम्। किन्तु संशये धर्म्मिज्ञानं (११) धर्म्मी-न्द्रियसन्निकर्षो (१२) वा कारणमिति ॥ १३० ॥

---

६। "समानानेकधर्म्मोपपत्तेर्व्विप्रतिपत्ते"रित्यादि सूत्रे विप्रतिपत्तिवाक्यजन्यशाब्दसंशय-स्योक्तत्वात् साधारणधर्म्मासाधारणधर्म्मज्ञानजन्यसंशयवद्विप्रतिपत्तिवाक्यजन्यस्तृतीयोऽपिसंशय इति मतनिरासायाह—विप्रतिपत्तिस्त्विति।

७। आदिना अतिदेशव्याक्यार्थज्ञानपरिग्रहः।

८। ननु तर्हि विप्रतिपत्तेरिति सूत्रस्थपञ्चम्यनुपपत्तिरित्यत आह—किन्त्विति। तथाच सूत्रस्थपञ्चमीप्रयोजकतायामिति भावः।

९। अत्र प्रामाण्यपदमप्रामाण्यस्याप्युपलक्षकं, तेन प्रामाण्यसंशयस्याप्रामाण्यसंशयस्य च विषयसन्देहे स्वातन्त्र्येण हेतुत्वमिति भावः।

१०। अथ व्याप्यसंशयस्य व्यापकसंशयहेतुत्वे किं मानं कोटिस्मरणादित एव तत् सम्भवात् क्वचित्तदनुविधानस्य तु व्याप्यतदभावयोर्व्यापकतदभावसाहचर्य्यस्य गृहीतत्वेन तत्स्मरण एवोपक्षीणत्वात्, तदग्रहे तु व्याप्यसंशयाद्व्यापकसंशयस्याप्यभावादिति चेदत्राहुः, महानसे हुताशनो न जलह्रदे इति स्मरतां पर्व्वतादिकमपि पश्यतां धूमादिसंशयभावाभावाभ्यां हुताशनसंशयभावाभावदर्शनात्तस्यापि तद्धेतुत्वं। न चैतद्भगवत्सूत्रकृतोऽप्यनभिमतं "समानानेक-धर्म्मोपपत्तेर्व्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः" इति सूत्रस्थ-चकारस्यानुक्तसमुच्चायकत्वादित्यवधेयम्।

११। ननु साधारणधर्म्मज्ञानादेरिव धर्म्मिज्ञानस्यापि संशयहेतुत्वात्तत्कृतः संशयविभागः कथं न प्रदर्शित इत्यत आह—संशये धर्म्मिज्ञानमिति। संशये—संशयमात्रे। तथाच—धर्म्मिज्ञान-जन्यतावच्छेदकस्य संशयत्वसमव्याप्तत्वान्न तद्विभाजकतावच्छेदकमिति भावः।

१२। ननु धर्म्मिज्ञानस्य संशयहेतुत्वे मानाभावः, न च धर्म्मिज्ञानमन्तरेण संशयः स्यादिति वाच्यं, सति धर्म्मीन्द्रियसन्निकर्षे दृष्टत्वादित्यत आह—धर्म्मीन्द्रियसन्निकर्षो वेति।

दोषोऽप्रमाया जनक: प्रमायास्तु गुणो भवेत्।
पित्तदूरत्वादिरूपो दोषो नानाविध: स्मृत: ॥१३१

दोष इति। अप्रमां प्रति दोष: कारणम्। प्रमां प्रति गुण: कारणम्। तत्रापि पित्तादि(१७)रूपा दोषा अननुगता:। तेषां कारणत्वमन्वयव्यतिरेकाभ्यामेव सिद्धम्। गुणस्य प्रमाजनकत्वन्तु अनुमानात् सिद्धम्। यथा (१४) प्रमा ज्ञानसाधारणकारणभिन्न-कारणजन्या जन्यज्ञानत्वात्, अप्रमावत् न च दोषाभाव एव कारण-मस्त्विति वाच्यम्, पीत: शङ्ख इति ज्ञानस्थले पित्तदोषसत्त्वाच्छङ्खत्व-प्रमानुत्पत्तिप्रसङ्गात्। विनिगमनाविरहात् (१५) अनन्तदोषाभावस्य कारणत्वमपेक्ष्य गुणकारणताया न्याय्यत्वात् (१६)। न च गुणसत्त्वे-ऽपि पित्तप्रतिबन्धाच्छङ्खे न शैत्यज्ञानम्, अत: पित्तादिदोषाभावानां कारणत्वमवश्यं वाच्यं, तथा च (१७) किं गुणस्य हेतुत्वकल्पनयेति वाच्यम्, तथाप्यन्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वसिद्धे:। एवं (१८) भ्रमं प्रति गुणाभाव: कारणमित्यस्यापि सुवचत्वाच्च। तत्र दोषा: के इत्याकाङ्क्षायामाह—पित्तेति। क्वचित् पीतादिभ्रमे पित्तं

---

१३। आदिना मण्डूकवसाञ्जनादिपरिग्रह:।

१४। अनुमानसिद्धत्वमेव दर्शयति—यथेति। भगवज्ज्ञाने व्यभिचारवारणाय हेतौ जन्येति।

१५। ननु पित्तात्मकदोषाभाव: शैत्यप्रमायामेव कारणं न शङ्खत्वप्रमायामत आह—विनिगमनाविरहादिति, प्रमायां दोषाभाव: कारणं, गुणो वा कारणमित्यत्र विनिगमना-विरहादिति भाव:। वस्तुतो गुणहेतुतायामेव लाघवं विनिगमकमस्तीत्याह—अनन्तेति।

१६। अनुगतगुणत्वस्याग्रे वक्ष्यमाणत्वान्न तद्धेतुत्वमतेऽयं दोष इति भाव:।

१७। तथाच दोषाभावानां हेतुत्वस्यावश्यकत्वे च।

१८। एवं—एवं सति, अन्वयव्यतिरेकसत्त्वेऽपि यद्यन्यथासिद्धत्वं तदेत्यर्थ:। गुणाभाव:—गुणाभाव एव न तु दोष: कारणं स्यादिति भाव:।

प्रत्यक्षे तु विशेष्येण विशेषणवता समम्।
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ गुणः ॥१३२
पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत्।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥१३३
शाब्दबोधे योग्यतायास्तात्पर्य्यस्याथ वा प्रमा।
गुणः स्याद्भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा ॥१३४॥
अथ वा तत्प्रकारं यज्ज्ञानं तद्विशेष्यकम्।
तत्प्रमा न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम्॥१३५

दोषः। क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः। क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवं दोषा अननुगता भ्रान्तिजनका इत्यर्थः ॥ १३१ ॥

अथ के गुणा इत्याकाङ्क्षायां प्रत्यक्षादौ क्रमशो गुणान् दर्शयति—प्रत्यक्षे त्विति। प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः। अनुमितौ साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुण इति। एवमग्रेऽप्यूह्यम्। प्रमां निरूपयति—भ्रमभिन्नमिति ॥ १३२ ॥ १३३ ॥ १३४ ॥

ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं, तत्र रजतांशेऽपि प्रमा न स्यात्, तज्ज्ञानस्य भ्रमभिन्नत्वाभावादत आह—अथ वेति। तद्विशेष्यकत्वे सति तत्प्रकारकं ज्ञानं (१९) प्रमा इत्यर्थः। अथैवं स्मृतेरपि प्रमात्वं स्यात्, ततः किमिति चेत्तथा सति तत्करण-

१९। तद्विशेष्यकत्वावच्छिन्नतत्प्रकारत्ववज्ज्ञानमित्यर्थः, सतिसप्तम्या अवच्छिन्नार्थकत्वात्। अत्र च तत्प्रकारकभ्रमेऽतिव्याप्तिवारणाय तद्विशेष्यकेति। रजत एव द्रव्यमिति-ज्ञाने रजतत्वप्रमात्वापत्तिरतस्तत्प्रकारकमिति, ज्ञानपदञ्च तथाविधेच्छाय ामतिव्याप्तिवारणाय।

प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत्।
प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तित: ॥१३६

स्यापि प्रमाणान्तरत्वं स्यादिति चेन्न यथार्थानुभवकरणस्यैव प्रमाणत्वेन विवक्षितत्वात्। इदन्तु बोध्यम्। येन सम्बन्धेन तद्वत्ता, तेन सम्बन्धेन तद्विशेष्यकत्वं, तेन सम्बन्धेन तत्प्रकारकत्वं वाच्यम्। तेन कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्ति:। एवं सति (२०) निर्विकल्पकं प्रमा न स्यात्, तस्य सप्रकारकत्वाभावात्। अत आह— न प्रमेति। ननु वृक्षे कपिसंयोगज्ञानं भ्रम:, प्रमा च स्यादिति (२१) चेन्न प्रतियोगिव्यधिकरणसंयोगाभाववति संयोगज्ञानस्य भ्रमत्वात्। न च वृक्षे संयोगाभावावच्छेदेन संयोगज्ञानं भ्रमो न स्यात्, तत्र संयोगाभावस्य प्रतियोगिसमानाधिकरणत्वादिति वाच्यम् तत्र संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात्। लक्ष्यस्या(२२)-ननुगमात् लक्षणाननुगमेऽपि न क्षति: ॥ १३५ ॥

प्रमात्वमिति। मीमांसका हि प्रमात्वं स्वतो ग्राह्यमिति वदन्ति। तत्र गुरूणां मते ज्ञानस्य स्वप्रकाशरूपत्वात् (२३) तज्ज्ञानप्रामाण्यं तेनैव गृह्यते (२४) इति। भट्टानां मते ज्ञानमतीन्द्रियम्। ज्ञानजन्या ज्ञातता प्रत्यक्षा। तया च ज्ञानमनुमीयते (२५)। मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते। सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते। विषयनिरूप्यं (२६)

२०। एवं सति—तत्प्रकारकत्वस्य प्रमात्वघटकत्वे सति।

२१। लक्षणद्वयस्यैव तत्र सत्त्वादिति भाव:।

२२। नन्वेवं लक्षणाननुगम इत्यत आह—लक्ष्यस्येति।

२३। स्वविषयकत्वादित्यर्थ:।

२४। ज्ञाने गृह्यमाने तन्निष्ठज्ञानत्वादिधर्मवत्तन्निष्ठप्रामाण्यस्यापि ग्रहे बाधकाभावात् तन्मते सर्वं ज्ञानमयं घटो घटमहं जानामीत्याकारकमिति भाव:।

२५। अयमत्रानुमानाकार:—इयं ज्ञातता घटादिविशेष्यकघटत्वप्रकारकज्ञानजन्या घट-

हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषयः। तन्मतं दूषयति—न ग्राह्यमिति। संशयेति। यदि ज्ञानप्रामाण्यं स्वतो ग्राह्यं स्यात् तदाऽनभ्यासदशा (२७) पन्नज्ञाने तत्संशयो (२८) न स्यात्। तत्र हि यदि ज्ञानं ज्ञातं तदा त्वन्मते प्रामाण्यं ज्ञातमेवेति(१९) कथं संशयः। यदि तु ज्ञानं न ज्ञातं तदा धर्म्मिज्ञानाभावात् कथं संशयः। तस्माज्ज्ञानप्रामाण्यमनुमेयम्। तथाहि—इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वाद्यन्नैवं तन्नैवं यथाऽप्रमा। इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति (३०) पृथिवीत्वप्रकारकज्ञानत्वात्। एवमिदं जलज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञानत्वात्। न च हेतुज्ञानं कथं जातमिति वाच्यम् पृथिवीत्वप्रकारकत्वस्य स्वतो ग्राह्यत्वात्, तत्र गन्धवद्विशेष्यकत्वस्यापि सुग्रहत्वात्। तत्प्रकारक(२१)त्वावच्छिन्नतद्वद्विशेष्यकत्वं परं न गृह्यते संशयानुरोधात् (३२)।

---

वृत्तिघटत्वप्रकारकज्ञाततात्वाद् या यद्वृत्तिर्यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या यथा पटे पटत्वप्रकारकज्ञातता।

२६। ननु ज्ञानज्ञानस्य विषयाविषयकत्वात् कथं विषयघटितं प्रामाण्यं तस्य विषय इत्यतो ज्ञानज्ञानस्य विषयविषयकत्वे प्रमाणमाह—विषयनिरूप्यमिति, विषयाविषयकप्रत्यक्षाविषय इत्यर्थः। ज्ञानवित्तिवेद्यो विषय इति विषयविषयकतानियतस्वविषयताकप्रत्यक्षकं ज्ञानमित्यर्थकं, नातः साध्यहेत्वोर्व्वैयधिकरण्यं। तथाच ज्ञानं विषयविषयकतानियतस्वविषयताकप्रत्यक्षकं विषयाविषयकप्रत्यक्षाविषयत्वे सति प्रत्यक्षविषयत्वादित्यनुमानं ज्ञानप्रत्यक्षस्य विषयविषयकत्वे प्रमाणमिति भावः।

२७। यस्मिन् प्रामाण्यमवधृतं तत्सजातीये साजात्येन लिङ्गेन प्रामाण्यानुमानान्नैव संशय इत्यभिप्रेत्याह—अनभ्यासदशापन्नेति, अनवधृतप्रामाण्यसजातीयेत्यर्थः।

२८। तत्संशयः—प्रामाण्यसंशयः।

२९। ज्ञातमेव—निश्चितमेव।

३०। व्याप्यवति व्यापकप्रकारकत्वस्य व्यापकवति व्यापकप्रकारकत्वव्याप्यत्वादिति भावः।

३१। ननु कथं तर्हि प्रामाण्यस्यानुमेयता गन्धवति पृथिवीत्वप्रकारत्वस्येव पृथिवीत्ववति पृथिवीत्वप्रकारत्वादेरपि प्रत्यक्षसम्भवादत आह—तत्प्रकारकत्वेति।

३२। संशयजनकदोषस्यानायत्या प्रामाण्यग्रहप्रतिबन्धकत्वकल्पनादिति भावः।

ननु(३३) सर्वेषां ज्ञानानां यथार्थत्वात् प्रमालक्षणे तद्वद्विशेष्यकत्वं विशेषणं व्यर्थम्(३४)। न च रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या(३५) न स्यात्, तव मते भ्रमस्याभावादिति वाच्यम्। तत्र(३६) हि दोषाधीनस्य पुरोवर्त्तिनि स्वतन्त्रोपस्थितरजतभेदाग्रहस्य हेतुत्वात्। सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात् तदेव कारणम्। अस्तु वा(३७) तत्रापि भेदाग्रह एव कारणमिति। न वाऽन्यथाख्यातिः सम्भवति,(३८) रजतप्रत्यक्षकारणस्य रजतसन्निकर्षस्याभावात्(३९) रङ्गे रजतबुद्धेरनुपपत्तेरिति चेन्न सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः (४०) क्लृप्तत्वात्, अन्यत्रापि (४१) तत्कल्पनात्।

---

३३। भ्रमानङ्गीकारी गुरुः शङ्कते नन्विति।

३४। व्यावर्त्त्याया अन्यथाख्यातेरभावादिति भावः।

३५। न्यायमतसिद्धा भ्रमजन्याप्रवृत्तिस्तव मते न स्यादित्यर्थः।

३६। तत्र—रङ्गगोचरविसंवादिरजतार्थिप्रवृत्तौ, रजते इदं रजतमिति ज्ञानकाले रजतभेदाग्रहसत्त्वाद्विसंवादिप्रवृत्त्यापत्तिवारणाय दोषाधीनस्येत्युक्तम्। न्यायनये दोषाधीनो यो रजतभ्रमस्तत्स्थानाभिषिक्तरजतभेदाग्रहस्यैव तन्मते दोषाधीनतया रजते रजतभेदाग्रहस्य दोषानधीनत्वादिति भावः। यत्र रङ्गगोचरमेतद्रजतवद्गूतत्वमिति ज्ञानं तत्र विसंवादितादृगप्रवृत्तिवारणाय स्वतन्त्रोपस्थितेति रजतविशेषणं मुख्यविशेष्यतयोपस्थितत्वं तदर्थः। यदि तु रङ्गगोचरादेतद्रजतवद्गूतत्वमिति ज्ञानादपि प्रवृत्तिरिष्टैव तदा स्वतन्त्रोपस्थितत्वं न देयमिति ध्येयम्।

३७। कार्य्यकारणभावद्वयकल्पनापेक्षया लाघवादाह—अस्तु वेति। तत्रापि—सत्यरजतगोचरप्रवृत्तावपि, अपिना रङ्गगोचरप्रवृत्तिपरिग्रहः। रजतभेदाग्रहः—रजतभेदासंसर्गाग्रहाभावः, यथाश्रुते रजते नेदं रजतमिति ग्रहेऽपि प्रवृत्त्यापत्तेः प्रभाकरमते तत्र रजते भेदग्रहाभावस्य सत्त्वादन्यथा अन्यथात्वात्यात्तेरिति।

३८। अत्र "येन विसंवादिप्रवृत्तौ तद्धेतुत्वं" स्यादिति पूरणीयम्।

३९। ज्ञानलक्षणायाः प्रत्यासत्त्यन्तरस्य कल्पनन्तु गौरवग्रस्तमित्यभिमानः।

४०। अन्वयव्यतिरेकाभ्यामिति शेषः।

४१। अन्यत्रापि—रङ्गगोचररजतार्थिप्रवृत्तावपि, तत्कल्पनात्—विशिष्टज्ञानहेतुत्वकल्पनात्।

न च संवादिप्रवृत्तौ तत् कारणं विसंवादिप्रवृत्तौ तु भेदाग्रहः कारणमिति वाच्यम्, लाघवेन (४२) प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात्। इत्यञ्च (४३) रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षतिः। फलमुखगौरवस्यादोषत्वात् (४४)। किञ्च (४५) यत्र रङ्गरजतयोरिमे रजते रङ्गे वा इति ज्ञानं जातं, तत्र न कारणबाधोऽपि (४६)। अपि च (४७) यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्याताम्। रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहेऽन्यथाख्यातिभयात् (४८)। त्वन्मते

---

४२। लाघवेन—संवादिविसंवादिप्रवृत्तिभेदेन कार्य्यकारणभावद्वयमपेत्य प्रवृत्तिमात्रे विशिष्टज्ञानस्यैव हेतुत्वकल्पनालाघवेनेत्यर्थः।

४३। रजतांशे सन्निकर्षाभावान्नान्यथाख्यातिः सम्भवतीति प्रभाकरोक्तं दूषणमुद्धरति—इत्थञ्चेति, प्रवृत्तिमात्रे विशिष्टबुद्धेर्हेतुत्वसिद्धौ चेत्यर्थः।

४४। कार्य्यकारणभावाग्रहात्मकफलात् पूर्व्वं गौरवस्यानिर्णयात् गौरवसन्देहस्य चाप्रतिबन्धकत्वादिति भावः।

४५। ननु प्रवृत्त्यनुमितिसाधारणरजतत्वविशिष्टविषयकत्वावच्छिन्नं प्रति भेदाग्रहस्यैव कारणताकल्पनेनैव निर्व्वाहात् न्यायनये प्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञानत्वेन हेतुत्वान्तरकल्पने गौरवमिति न तदनुरोधेन कल्पनीयभ्रमात्मकरजतज्ञानार्थं ज्ञानलक्षणाप्रत्यासत्त्यादर इति कारणबाधाद्बाधितमेव मिथ्याज्ञानमित्याशङ्कां मनसि निधाय स्थलविशेषे कारणबाधाभावादनिवार्य्यमेव मिथ्याज्ञानमित्याह—किञ्चेत्यादिना।

४६। युगपदिन्द्रियसन्निकर्षस्य रजतत्वेन समं संयुक्तसमवायस्य च सत्त्वादित्यर्थः। तथाच तादृशज्ञानं रङ्गांशे न प्रमात्मकं विशेषणवद्विशेष्यसन्निकर्षरूपप्रमासामग्र्यभावात्, किन्त्वन्यथाख्यातिरेवेति भावः।

४७। ननु तत्तद्विशेष्यतत्तद्विशिष्टबुद्धिं प्रति तत्तद्विशेषणे तत्तद्विशेष्यघटितसन्निकर्षो हेतुरन्यथातिप्रसङ्गात्, तथाच कथं रजतघटितसंयुक्तसमवायेन रङ्गे रजतत्वग्रह इत्यत आह—अपिचेति।

४८। भयादित्यनन्तरं रङ्गे रङ्गभेदाग्रहस्य रजते रजतभेदाग्रहस्येति पूरितस्य सत्त्वादित्यनेनान्वयः। अनेन रङ्गेऽनिष्टभेदाग्रहरूपा निवृत्तिसामग्री रजते इष्टभेदाग्रहरूपा प्रवृत्तिसामग्री च दर्शिता। रङ्गे रजतभेदाग्रहस्येत्यादिना च रङ्गे इष्टभेदाग्रहरूपा प्रवृत्तिसामग्री रजतेऽनिष्टभेदाग्रहरूपा निवृत्तिसामग्री च दर्शिता।

**व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा।**
**हेतुर्व्याप्तिग्रहे तर्कः क्वचित् शङ्कानिवर्त्तकः ॥१३७॥**

दोषादेव(४९) रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात्। किञ्चा(५०)नुमितिं प्रति भेदाग्रहस्य (५१) हेतुत्वे जलह्रदे वह्नि-व्याप्यधूमवद्भेदाग्रहादनुमितिर्निराबाधा (५२)। यदि च विशिष्ट-ज्ञानं कारणं तदाऽयोगोलके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादा-पतितम् (५३)। सेयमुभयतः पाशारज्जुः। इत्थञ्च (५४) अन्यथा-ख्यातौ प्रत्यक्षमेव प्रमाणम्। रङ्गं रजततयाऽवेदिषमित्यनुभवादिति सङ्क्षेपः (५५) ॥ १३६ ॥

पूर्वं व्याप्तिरुक्ता तद्ग्रहोपायस्तु न दर्शित इत्यतस्तं दर्शयति—व्यभिचारस्येति। व्यभिचारग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारण-मित्यर्थः। व्यभिचारग्रहस्य व्याप्तिग्रहे प्रतिबन्धकत्वात् तदभावः

---

४९। त्वन्मते न्यायाभिमतभ्रमस्थलाभिषिक्तभेदाग्रहं प्रति दोषस्य हेतुत्वादिति भावः।

५०। ननु रङ्गे रजतभेदाग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वान्न रङ्गे निवृत्तिः, एवं रजते रङ्गभेदासंसर्गाग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वान्न रजते प्रवृत्तिरिति कथं युगपत्प्रवृत्ति-निवृत्त्योरापादनमित्यत आह—किञ्चेति।

५१। व्याप्यवद्भेदाग्रहस्येत्यर्थः।

५२। सति बाधकाभावे अन्यथाख्यातिरूपानुमितिर्निराबाधैवेति भावः।

५३। अन्यथाख्यातिरूपप्रमापतितमित्यर्थः।

५४। अन्यथाख्यातौ प्रमाणं दर्शयति—इत्थञ्चेति, चकारोऽप्यर्थः।

५५। ननु तादृशानुव्यवसायो नेदं विशेष्यकज्ञानं रजतत्वप्रकारकत्वविशिष्टबुद्धिरूपः, परन्तु विद्यमानेऽपि भेदग्रहे रजतत्वप्रकारकत्वासंसर्गाग्रहरूप एवेत्यत आह—संक्षेप इति। इच्छानामुत्तेजकत्वं वाच्यं, इच्छानामुत्तेजकत्वानुरोधेन चानुमितित्वा-वाहार्य्यप्रत्यक्षोत्पादादिच्छाया उत्तेजकत्वं वाच्यं, प्रवृत्तित्वावच्छिन्नं प्रति भेदग्रहाभावत्वेन पृथक् कारणत्वे दीनामेव कार्य्यतावच्छेदकत्वात् प्रवृत्तित्वावच्छिन्नं प्रति भेदग्रहाभावत्वेन पृथक् कारणत्वे गौरवापत्त्याः विशिष्टज्ञानत्वेनैव तव हेतुता कल्पनीयेति विसंवादिप्रवृत्त्यनुरोधेनान्यथाख्याति-स्वीकारेणैवेति भावः।

कारणम् । अन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता । भूयोदर्शनन्तु न कारणम् । व्यभिचारास्फूर्त्तौ सकृद्दर्शनेऽपि क्वचिद्व्याप्तिग्रहात् । क्वचिद्व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते । यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षबाधकतर्कोऽपेक्षितः । तथाहि—वह्निविरहिण्यपि धूमः स्यादिति यद्याशङ्का भवति, तदा सा वह्निधूमयोः कार्य्यकारणभावस्य प्रतिसन्धानान्निवर्त्तते । यद्ययं वह्निमान्न स्यात् तदा धूमवान्न स्यात् कारणं विना (१) कार्य्यानुपपत्तेः । यदि च क्वचित् कारणं विना कार्य्यं भविष्यति तदा अहेतुक एव भविष्यतीति तत्राप्या(२)शङ्का भवेत्तदा सा व्याघातादपसारणीया । यदि हि (३) कारणं विना कार्य्यं स्यात् तदा धूमार्थं वह्नेस्तृप्त्यर्थं भोजनस्य नियमत उपादानं तत्रैव न स्यादिति । यत्र (४) स्वत एव शङ्का नावतरति, तत्र न तर्कापेक्षापीति (५) तदिदमुक्तं तर्कः क्वचित् शङ्कानिवर्त्तक (६) इति ॥१३७॥

---

२। तथाच धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादिति तर्काकारो बोध्यः ।

२। तथापि—तादृशतर्ककारणीभूतकार्य्यकारणभावग्रहेऽपि ।

३। व्याघातमेव दर्शयति—यदि हीत्यादिना ।

४। ननु तर्कं प्रत्यापाद्यव्याप्यापादकवत्ताज्ञानं कारणं, तत्र व्याप्तिज्ञानप्रतिबन्धकव्यभिचारशङ्कानिवर्त्तकस्तर्कोऽपेक्षितः एवमग्रेऽपीत्यनवस्थेत्यत आह—यत्रेति । स्वत एव—शङ्कासामग्रीविरहादेव ।

५। अतो नानवस्थेति शेषः ।

६। ननु तर्कस्य न व्यभिचारशङ्कानिवर्त्तकत्वं तर्ककारणीभूतव्याप्तिज्ञानेनैव तन्निवृत्तेः सम्भवादितिचेदत्र केचित् तर्कस्य शङ्कानिवर्त्तकत्वं—व्याप्तिज्ञानकारणीभूतो यो व्यभिचारशङ्काविरहस्तत्सम्पादकत्वं, एवञ्च व्यभिचारशङ्काप्रतिबन्धकतायां तर्कस्योत्तेजकतया उत्तेजकाभावविशिष्टव्यभिचारशङ्काविरहसम्पादकत्वमक्षुण्णमेव तर्कस्येत्याहुः । परे तु तदापादककापत्तित्वेनाहार्य्यानाहार्य्यसाधारणतद्विशिष्टबुद्धित्वावच्छिन्नं प्रति प्रतिबन्धकतया तर्कस्य व्यभिचारशङ्कानिवर्त्तकत्वमित्याहुः । तर्कश्चाहार्य्यारोपविशेषः, तत्त्वञ्च मानसत्वव्याप्यो जातिविशेषस्तर्कयामीत्यनुभवात्सिद्धस्तत्सामग्रीविशेषनिवर्त्तकतया वा सिद्ध इति । तर्कश्च द्विविधो

**साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।**
**स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥१३८॥**

इदानीं (१) परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति— साध्यस्येति। साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमता-व्यापक इत्यर्थः। ननु स श्याम मित्रातनयत्वादित्यत्र (३) शाक-पाकजत्वं नोपाधिः स्यात्, तस्य साध्यव्यापकत्वाभावात्, श्यामत्वस्य घटादावपि सत्त्वात्। एवं (४) वायुः प्रत्यक्षः स्पर्शाश्रयत्वादित्यत्र उद्भूत(५)रूपवत्त्वं नोपाधिः स्यात्। प्रत्यक्षत्वस्यात्मादिषु सत्त्वात् तत्र रूपाभावात्। एवं ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वं

---

विषयपरिशोधको व्याप्तिग्राहकश्चेति। तत्र विषयपरिशोधको निर्वह्निः स्यान्निर्धूमः स्यादित्यादिः। व्याप्तिग्राहकश्च धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादित्यादि-रित्यन्यत्र विस्तरः।

१। इदानीं व्याप्तिग्रहोपायनिरूपणोत्तरं व्याप्तिनिश्चयभावप्रयोजकव्यभिचारशङ्काकारण-ज्ञानविषयत्वेनोपाधेः स्मरणे सति। तथाच प्रसङ्गसङ्गत्योपाधिनिरूपणमिति भावः।

२। सिद्धिविषयत्वरूपसाध्यत्वस्य सिद्धिजनकत्वरूपसाधनत्वस्य च सोपाधावभावा-दभिमतेति। यो यदवच्छिन्नव्यापकत्वे सति यदवच्छिन्नाव्यापकः स तदवच्छिन्नसाध्यकतदवच्छिन्न-हेतावुपाधिरित्यर्थः। अथाश्रुतेऽभिमतस्य विशेषणत्वे यत्र न तदभिमानस्तत्राव्याप्त्यापत्तेः। यदवच्छिन्नत्वविवक्षणादगुणकर्म्मान्यत्वविशिष्टसत्तावान् जातिमत्त्वादित्यादौ संयोगी गुण-कर्म्मान्यत्वविशिष्टसत्त्वादित्यादौ च नाव्याप्त्यतिव्याप्ती।

३। काकः श्यामो मित्रातनयत्वादित्यादावित्यर्थः। तेन वक्ष्यमाणेन ध्वंसो विनाशी जन्यत्वादित्यनेन न पौनरुक्त्यं, अस्य साधनावच्छिन्नसाध्यव्यापकत्वादग्रिमस्य साधनरूपपक्ष-धर्म्मावच्छिन्नसाध्यव्यापकत्वात्।

४। ननु साधनावच्छिन्नसाध्यव्यापकत्वं विवक्षणीयमतो नोक्ता व्याप्तिरतः पक्षधर्म्मा-वच्छिन्नसाध्यव्यापकोपाधावव्याप्तिमाह—एवं वायुरिति।

५। अत्र यद्यपि प्रत्यक्षं प्रत्युद्भूतरूपस्याव्यापकत्वे रूपस्य सुतरामव्यापकत्वमित्युद्भूतपदं व्यर्थं, तथाप्युपाधेः साध्यव्यापकत्वे कार्य्यकारणभावलक्षणानुकूलतर्कप्रदर्शनार्थमुद्भूतपदं। पक्षधर्म्मावच्छिन्नसाध्यव्यापकत्वोक्तौ तु पूर्व्वोक्तशाकपाकजत्वाव्याप्तिरिति भावः।

नोपाधिः स्यात् - विनाशित्वस्य प्रागभावे सत्त्वात्, तत्र च भावत्वाभावादिति चेन्न। यद्धर्म्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्म्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्य्यात्। मित्रातनयत्वा(६)वच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वतदवच्छिन्नसाधनाव्यापकञ्च। एवं बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपत्त्वं बहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकञ्च। एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकं भावत्वम्। सद्धेतौ तु एतादृशो धर्म्मो नास्ति यदवच्छिन्नस्य साध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्य चाव्यापकं किञ्चित् स्यात्। व्यभिचारिणि तु उपाध्यधिकरण (७) यत्साध्याधिकरणं यच्चोपाधिशून्यं साध्यव्यभिचाराधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेरस्तत: (८) सम्भवतीति ॥ १३८ ॥

---

६। अव्याप्तीः परिहरति—मित्रातनयत्वेत्यादिना।

७। वायुः प्रत्यक्षो द्रव्यत्वादित्यादौ प्रत्यक्षत्वरूपसाध्याधिकरणमात्मा उद्भूतरूपात्मकोपाधिशून्यं साध्यव्यभिचाराधिकरणं गगणं तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वस्य उद्भूतरूपेऽभावादुक्तमुपाध्यधिकरणमिति। उद्भूतरूपाधिकरणपरमाण्वाकाशान्यतरत्वावच्छिन्नसाध्याप्रसिद्ध्या तद्दोषतादवस्थ्यमतः साध्याधिकरणमिति।

उद्भूतरूपाधिकरणं यत् प्रत्यक्षत्वाधिकरणं घटादिस्तद्वृत्तिद्रव्यत्वव्यापकधर्म्मावच्छिन्नसाध्यव्यापकत्वाभावादुक्तं—यच्चेत्यादि। तत्रापि साध्यव्यभिचाराधिकरणपरमाणुघटान्यतरत्वावच्छिन्न-द्रव्यत्वात्मकसाधनव्यापकत्वादुपाधिशून्यमिति। तत्रैवोपाध्यधिकरणसाध्याधिकरणं घटः उपाधिशून्यमधिकरणमात्मा तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वाभावात् साध्यव्यभिचाराधिकरणमिति। उद्भूतरूपाधिकरणं यत्प्रत्यक्षत्वाधिकरणं घटः यच्चोद्भूतरूपशून्यं प्रत्यक्षत्वाभावाधिकरणमतीन्द्रियरूपादि तदन्यतरत्वावच्छिन्नद्रव्यत्वरूपसाधनाव्यापकत्वस्योद्भूतरूपेऽभावात् साध्यभावाधिकरणमिति परित्यज्य साध्यव्यभिचाराधिकरणमित्युक्तं, तदर्थश्च साधननिष्ठसाध्यव्यभिचारनिरूपकाधिकरणत्वम्।

८। अस्तत:—तादृशधर्म्मान्तरस्यास्फूर्त्तावित्यर्थः।

**सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः।**
**हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥१३९॥**
**व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम्।**
**शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते ॥१४०॥**
**अनुमानगतार्थत्वादिति वैशेषिकं मतम्।**
**तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः ॥१४१॥**

अत(९)एव लक्षणमप्युपाधिस्वरूपमेतदनुसारेण (१०) दर्शयति—सर्वे इत्यादिना। स्वसाध्येति। स्वम् उपाधिः स्वञ्च (११) साध्यञ्च स्वसाध्ये तयोर्व्यभिचारिता इत्यर्थः॥ १३९॥

उपाधेर्दूषकताबीजमाह—व्यभिचारस्येति। उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानम् उपाधेः प्रयोजनमित्यर्थः। तथाहि—यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्। यथा धूमवान् वह्नेरित्यादौ वह्निर्धूमव्यभिचारी तद्व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात्। यत्र तु किञ्चिद्धर्म्मावच्छिन्नसाध्यव्यापक उपाधिस्तत्र तद्धर्म्मवति उपाधिव्यभिचारेण (१२) साध्यव्यभिचारानुमानम्। यथा स श्यामो मित्रातनयत्वादित्यत्र मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये (१३) शाकपाकजत्वव्यभि-

---

९। अत एव—यद्धर्म्मावच्छिन्नत्वघटितनिरुक्तलक्षणस्य तात्पर्य्यविषयत्वादेव।

१०। एतदनुसारेण—निरुक्तलक्षणानुसारेण।

११। स्वस्य साध्यमिति षष्ठीतत्पुरुषभ्रमं व्यावर्त्तयितुमाह—स्वञ्चेति।

१२। अत्र तत्पदं यद्धर्म्मावच्छिन्नसाध्यव्यापकत्वं तत्परम्। तद्धर्म्माधिकरणीभूतं यदुपाध्यभावाधिकरणं तद्वृत्तित्वं नेति समुदितार्थः।

१३। तद्धर्म्मवतीति यदुक्तं तदेव दर्शयति—मित्रातनय इति। श्यामघटादिमात्रवृत्तिगुणादावपि शाकपाकजत्वाभाववद्वृत्तित्वरूपहेतोः सत्त्वाच्च श्यामत्वव्यभिचारित्वरूपसाध्य-

चारित्वादिति। बाधानुन्नीत(१४)पक्षेतरत्वन्तु साध्यव्यापकताग्राहक-प्रमाणाभावात् स्वव्याघातकत्वाच्च (१५) नोपाधिः। बाधोन्नीतन्तु(१६) पक्षेतरत्वम् उपाधिर्भवत्येव। यथा वह्निरनुष्णः कृतकत्वादित्यादौ प्रत्यक्षेण वह्नेरुष्णत्वग्रहे वह्नीतरत्वमुपाधिः। यत्र साध्यव्यापकत्वा-दिकं सन्दिह्यते स सन्दिग्धोपाधिः। पक्षेतरत्वन्तु सन्दिग्धोपाधि-रपि (१७) नोद्भावनीयं, कथकसम्प्रदायानुरोधादिति (१८)। केचित्तु सत्प्रतिपक्षोत्थापनमुपाधिफलम्। तथाहि—अयोगोलकं धूमवद्वह्ने-रित्यादौ अयोगोलकं धूमाभाववद् आर्द्रेन्धनाभावादिति सत्प्रतिपक्ष-सम्भवात्। इत्यञ्च (१९) साधनव्यापकोऽपि क्वचिदुपाधिः। यथा करका पृथिवी कठिनसंयोगवत्त्वादित्यादौ अनुष्णाशीतस्पर्शवत्त्वम्। न चात्र स्वरूपासिद्धिरेव दूषणमिति वाच्यम्, सर्वत्रोपाधेर्दूषणान्तर-

---

स्याभावाद्व्यभिचारः स्यादिति तद्वारणाय हेतौ निवातनय इत्यंशस्य प्रवेशः, तथाच शाकपाकजत्वा-भाववन्निवातनयवृत्तित्वार्थपर्य्यवसानान्न व्यभिचारः।

१४। ननु पक्षेतरत्वेऽतिव्याप्तिः, न च तस्य लक्ष्यत्वमेव एकाश्रये येषामित्यादि मूलेन प्रदर्शितस्य लक्ष्यतावच्छेदकस्य तत्राभावात्, तथाहि—तत्र हेतौ पक्षेतरत्वव्यभिचारस्य पक्षमादायैव सम्भवः साध्यव्यभिचारस्य च तमादाय न सम्भव इत्यत आह—बाधानुन्नीतेत्यादि।

१५। उपाधिमात्रस्य दूषकताव्याघातकत्वादित्यर्थः। पक्षेतरत्वस्योपाधित्वे सर्व्वत्रानुमाने पक्षेतरत्वस्योपाधेः सम्भवादनुमानमात्रोच्छेदापत्त्या व्यभिचारानुमानाधीनस्योपाधेर्दूषकत्वस्या-सम्भवादिति भावः।

१६। ननु तथापि यत्र साध्यव्यापकताग्राहकं प्रमाणमस्ति तत्र पक्षेतरत्वे लक्षणातिव्याप्ति-र्दुर्व्वारेत्यत आह बाधोन्नीतमित्यादि। बाधेन—पक्षे साध्याभाववत्तया, उन्नीतं—साध्यव्यापक-त्वेन निश्चितमित्यर्थः।

१७। पक्षे साध्यसन्देहेन साध्यव्यापकतासन्देहपक्षेतरत्वे सम्भवादिति भावः।

१८। न च स्वव्याघातकत्वे नानुपाधित्वादेवानुद्भावनसम्भवे सम्प्रदायमात्रे तद्धेतुत्वकथ-नमसङ्गतमिति वाच्यं, यत्र साध्यव्यापकताग्राहकतर्कावतारस्तत्र व्यापकव्यभिचारिणो व्याप्यव्यभि-चारावश्यम्भावेन व्यभिचारानुमापकत्वरूपस्य दूषकत्वस्य व्याघातासम्भवात्।

१९। सत्प्रतिपक्षोत्थापकतया दूषकत्वे वेत्यर्थः।

माङ्गयात्। अत्र च (२०) साध्यव्यापक: पक्षावृत्ति(२१)रुपाधिरिति वदन्ति। शब्दोपमानयोरिति वैशेषिकाणां मते प्रत्यक्षमनुमानञ्च प्रमाणं शब्दोपमानयोरनुमानविधयैव प्रामाण्यम्। तथाहि—दण्डेन गामानयेदित्यादि लौकिकपदानि यजेत इत्यादि वैदिक-(२२) पदानि वा तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि (२३) आकाङ्क्षादि(२४)मत्पदकदम्बत्वात् घटमानयेतिपदकदम्बवत्। यद्वा (२५) एते पदार्था मिथ: संसर्गवन्त: (२६) योग्यतादिमत्पदोप-

---

२०। सत्प्रतिपक्षोव्यापकत्वपक्षे च।

२१। उपाधे: पक्षवृत्तित्वे तु तदभावेन पक्षे साध्याभावसाधनं न सम्भवतीति पक्षा-वृत्तित्वमुक्तम्।

२२। गुरुमते लौकिक: शब्दोऽनुवादक: वैदिक एव प्रमाणं तन्मतनिराकरणायाह—वैदिकेति।

२३। अव ब्राह्मणे विद्येत्यादौ यदाधिकरणत्वसंसर्गे तात्पर्यं तदा विषयत्वादिसंसर्गेणा-र्थान्तरवारणाय तात्पर्यविषयत्वं संसर्गविशेषणम्। तात्पर्यज्ञाने इतरपदार्थत्वेनेतर-पदार्थस्य प्रवेशाद्घटत्वादिना स्मृतस्य संसर्गो न सिध्यदत:—स्मारितेति।

२४। आदिपदेनासत्तियोग्यतयो: परिग्रह:। अयमेति पुत्रो राज्ञ: पुरुषोऽपसार्यता-मित्यादौ राज्ञ: पुरुष इति भागे राजपुरुषयोर्योग्यार्थयो: संसर्गे तात्पर्याभावेन साध्याभावाद्व्यभि-चार इत्याकाङ्क्षाविशेषणं, तच्च इदम्पदमनेन पदेन सहामुकसंसर्गेणैतदर्थान्वितस्वार्थबोधं जनयत्विति पदतात्पर्यार्थकं, तेन नाकाङ्क्षाया इतरांशवैयर्थ्यप्रसङ्ग:। नीलो घटो द्रव्यं पट इत्यत्र नील इति भागे नीलपटयोराकाङ्क्षायोग्यतासत्त्वेन हेतुसत्त्वाद्व्यभिचारवारणायासत्ति-पदम्। वह्निना सिञ्चतीत्यादिवाक्ये संसर्गप्रमाणपूर्वकत्वरूपसाध्याभावेन व्यभिचारापत्त्या तद्वारणाय योग्यतापदम्। कदम्बपदञ्चाकाङ्क्षादीनां परस्परप्रतियोगित्वलाभाय अन्यथासाध्यस्य परस्परार्थघटितत्वेन व्यभिचारप्रसङ्गात्।

२५। नन्विष्टतावच्छेदकप्रकारकप्रवृत्तिविषयविशेष्यकज्ञानस्य प्रवर्त्तकतया संसर्गज्ञान-पूर्वकत्वानुमितेरतादृशतया कथं प्रवर्त्तकत्वम् अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन प्रमापूर्वकत्वत्वेन प्रमापूर्वकत्वसिद्धावपि पुरोवर्त्तित्वविशेष्यकरजतत्वादिप्रकारकज्ञानस्य तस्मा-दनुपपत्तेस्तदर्थं शब्दप्रामाण्यस्वीकार इत्यत आह—यद्वेति।

२६। तात्पर्यविषयपरस्परसंसर्गवन्त इत्यर्थ:, तेन नातात्पर्यविषयसंसर्गमादायार्था-न्तरम्।

त्रैविध्यमनुमानस्य केवलान्वयिभेदतः ।
द्वैविध्यन्तु भवेद्व्याप्तेरन्वयव्यतिरेकतः ॥१४२॥

स्थापितत्वात् तादृशपदार्थवत्। दृष्टान्तेऽपि (२७) दृष्टान्तान्तरेण साध्यसिद्धिरिति। एवं गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्व-प्रवृत्तिनिमित्तकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्। असति च वृत्त्यन्तरे वृद्धैर्यत्र यत् प्रयुज्यते, तत्र तत् तत्प्रवृत्तिनिमित्तकं। यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्। यद्वा गवयपदं सप्रवृत्तिनिमि-त्तकं साधुपदत्वादित्यनुमानेन पक्षधर्म्मताबलाद्गवयत्वप्रवृत्तिनिमि-त्तकत्वं भासते। तन्मतं दूषयति--तन्न सम्यगिति। विनापि व्याप्तिज्ञानं शब्दादितो बोधस्यानुभविकत्वात्। न हि सर्वत्र शब्द-श्रवणाद्यनन्तरं व्याप्तिज्ञाने मानमस्तीति। किञ्च (२८) सर्वत्र शब्द स्थले यदि व्याप्तिज्ञानं कल्प्यते, तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा(२९) शाब्दबोध एव किं न स्वीक्रियतामिति ॥१४०॥१४१॥

त्रैविध्यमिति। अनुमानं हि त्रिविधं, केवलान्वयिकेवलव्यति-रेक्यन्वयव्यतिरेकिभेदात्। तत्र-(३०)सद्विपक्षः केवलान्वयी। यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ। तत्र हि सर्वस्यैवाभिधेयत्वाद्-विपक्षासत्त्वम् (३१)। ननु सर्वेषां धर्म्माणां व्यावृत्तत्वात् केवला-

२७। ननु दृष्टान्ते साध्यसिद्धेरभावात् कथं व्याप्तिग्रह इत्यत आह—दृष्टान्तेऽपीति।

२८। ननु सर्व्वत्र शब्दश्रवणानन्तरमनुमितिरूपकार्य्यान्यथाऽनुपपत्त्या व्याप्तिज्ञानं कल्प-नीयमित्यत आह—किञ्चेति।

२९। पदस्मरणं कल्पयित्वेत्यर्थः। वह्न्यादिशब्देनार्थस्येव वह्न्यादिरूपेणार्थेनापि वह्न्यादि-पदस्मरणसम्भवात् वाच्यत्वादिवद्वाचकत्वादिसम्बन्धस्यापि स्मारकत्वादिति भावः।

३०। तत्र तेषु मध्ये, असद्विपक्षः—अत्यन्ताभावाप्रतियोगिसाध्यक इत्यर्थः। यथाश्रुते सि[illegible]प्रसिद्धिव्याघातात्। नचैवमपि प्रमाज्ञानविषयत्वरूपस्य प्रमेयत्वस्य विषयभेदाद्भिन्नत्वेनानु-गमात् कथमत्यन्ताभावाप्रतियोगित्वमिति वाच्यं, स्वाश्रयविषयत्वरूपपरस्परासम्बन्धेन प्रमात्वस्यै-वानुगतस्य प्रमेयत्वरूपत्वात्।

३१। सर्व्वस्यैवाभिधेयत्वादिति तु तस्याभावाप्रसिद्धिसूचनाय। विपक्षासत्त्वं—अत्यन्ता-भावाप्रतियोगित्वमित्यर्थः।

**अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते।**

**साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥१४३॥**

न्वयसिद्धिरिति चेन्न, व्यावृत्तत्वस्य सर्वसाधारण्ये तस्यैव केवला-
न्वयित्वात्। किञ्च वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयि-
त्वम्, तच्च गगनाभावादौ प्रसिद्धम्। असत्सपक्षः (३२) केवल-
व्यतिरेकी। यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ।
तत्र हि जलादित्रयोदशभेदस्य पूर्व्वमनिश्चिततया निश्चितसाध्यवतः
सपक्षस्याभाव इति। सत्सपक्षविपक्षो-(३३)ऽन्वयव्यतिरेकी। यथा
वह्निमान् धूमादित्यादौ। तत्र सपक्षस्य महानसादेर्विपक्षस्य जल-
ह्रदादेश्च सत्त्वादिति॥

तत्र व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं, तदर्थं व्यतिरेक-
व्याप्तिं निर्वक्ति—साध्याभावेति। साध्याभावव्यापकीभूताभावप्रति-
योगित्वमित्यर्थः। अत्रेदं बोध्यम्। यत्सम्बन्धेन यदवच्छिन्नं
प्रति येन सम्बन्धेन येन रूपेण व्यापकता गृह्यते, तत्सम्बन्धावच्छिन्न-
प्रतियोगिताकतद्धर्म्मावच्छिन्नाभाववत्ताज्ञानात्तत्सम्बन्धावच्छिन्न-प्रति-
योगिताकतद्धर्म्मावच्छिन्नाभावस्य सिद्धिरिति। इत्थञ्च यत्र विशे-
षणतादिसम्बन्धेनेतरत्वव्यापकत्वं गन्धाभावे गृह्यते, तत्र गन्धाभावा-
भावेनेतरत्वात्यन्ताभावः सिध्यति। यत्र तु तादात्म्यसम्बन्धेनेतर-
व्यापकता (३४) गन्धाभावस्य गृह्यते, तत्र तादात्म्यसम्बन्धेन(३५)
तरस्याभावः सिद्धति। स एवान्योऽन्याभावः। एवं यत्र संयोग-

---

३२। सिद्धासिद्धिव्याघातादस्यापि अगृहीतहेतुसहचारव्यतिरेकिसाध्यकत्वमर्थो बोध्यः। व्यतिरेकित्वञ्चात्यन्ताभावप्रतियोगित्वं।

३३। गृहीतान्वयव्यतिरेकिसाध्यकमित्यर्थः।

३४। तादात्म्यसम्बन्धावच्छिन्ना या इतरनिष्ठव्याप्यता तन्निरूपितव्यापकतेत्यर्थः।

सम्बन्धेन धूमं प्रति संयोगसम्बन्धेन वह्नेर्व्यापकता गृह्यते, तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन (३६) जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिध्यति। अत्र च (३७) व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणम्। केचित् (३८) तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते न, तु (३९) व्यतिरेकव्याप्तिज्ञानं कारणम्। यत्र (४०) च व्यतिरेकसहचाराद्-व्याप्तिग्रहस्तत्र व्यतिरेकीत्युच्यते। साध्यप्रसिद्धिस्तु (४१) घटादा-वेव जाता, पश्चात् पृथिवीत्वावच्छेदेन (४२) साध्यत इति वदन्ति (४३)॥ १४२ ॥ १४३ ॥

---

३५। सावधारणमेतत्, नतु सम्बन्धान्तरेणेत्यर्थः। येन सम्बन्धेन व्याप्यतागृहीतेत्यस्य फलमनेन सूचितम्।

३६। एतदपि सावधारणं तेन सम्बन्धान्तरावच्छिन्नप्रतियोगिताकेन न तत्सिद्धिरित्यर्थः। अनेन च येन सम्बन्धेन व्यापकता गृह्यते इत्यस्य फलं सूचितं। एवंरीत्यैव येन रूपेण यदवच्छिन्नेत्यनयोरपि प्रयोजनमूह्यं।

३७। ननु साध्यसाधनसहचारज्ञानाभावात् कथं व्यतिरेकव्याप्तिज्ञानमत आह—अत्र चेति। तथाच व्यतिरेकसहचारेणैव व्यतिरेकव्याप्तिग्रहान्नान्वयसहचारग्रहापेचेति भावः।

३८। आचार्य्यमतमाह—केचित्त्विति। व्यतिरेकसहचारेणेति अन्वयसहचारनिरपेचे-णेत्यर्थः। अन्वयव्याप्तिरेवेत्येवकारेण व्यतिरेकव्याप्तेर्व्युदासः।

३९। नन्वेवं व्यतिरेकव्याप्तिरूपकारणाभावात् कथं व्यतिरेक्यनुमितिरत आह—नत्विति।

४०। नन्वेवं व्यतिरेकव्याप्तिरूपकारणाभावात् कथं व्यतिरेक्यनुमितिरिति व्यवहार इत्यत आह—यत्र चेति।

४१। ननु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ साध्यस्येतरभेदादेरप्रसिद्धत्वात् कथं व्यतिरेकसहचारग्रह इत्यत आह—साध्यप्रसिद्धिस्त्विति।

४२। ननु घटादौ साध्ये निर्णीते कथं तत्रेतरभेदानुमितिरत आह—पृथिवीत्वावच्छेदेनेति। तथाचावच्छेदावच्छेदेनानुमितौ सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकत्वान्न दोष इति भावः।

४३। अवचान्वयव्याप्तिघटकतावत्पदार्थज्ञानादेवान्वयव्याप्तिज्ञानोत्पत्तौ व्यतिरेकसह-

**अर्थापत्तेस्तु नैवेह प्रमाणान्तरतेष्यते।**
**व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥१४४॥**

अर्थापत्तेस्त्विति। अर्थापत्तिं प्रमाणान्तरं मन्यन्ते केचन (१)। तथाहि—यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं, जीविनो गृहासत्त्वञ्च प्रत्यक्षादवगतं, तत्र शतवर्षजीवित्वान्यथानुपपत्त्या बहिःसत्त्वं कल्प्यते, तदनुमानेन गतार्थत्वान्नेष्यते। तथाहि—जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतम्। तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते। एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ (२) पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनसिद्धौ। दिवाभोजनबाधे रात्रिभोजनं सिद्ध्यतीति। अभावप्रत्यक्षस्यानुभविकत्वादनुपलम्भोऽपि न प्रमाणान्तरम्। किञ्चानुपलम्भस्याज्ञातस्य हेतुत्वे ज्ञानाकरणकत्वात् प्रत्यक्षत्वम्। ज्ञातस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था। एवं चेष्टापि न प्रमाणान्तरम्। तस्याः सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात्। यत्र तु व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति ॥ १४४ ॥

सुखं निरूपयति—सुखन्तु इति। काम्यमभिलाषविषयः। धर्मेणेति, धर्मत्वेन सुखत्वेन कार्य्यकारणभाव (३) इत्यर्थः।

---

चारज्ञानस्य तद्धेतुत्वे मानाभावः, न च व्यतिरेकसहचारिणेत्यत्र प्रयोजकत्वं तृतीयार्थः, तच्च नानुपपन्नं अन्वयव्याप्तिज्ञानप्रतिबन्धकव्यभिचारशङ्कानिरासद्वारा व्यतिरेकसहचारज्ञानस्य तत्र प्रयोजकत्वादिति वाच्यं व्यतिरेकसहचारग्रहेऽप्यधिकरणान्तरे व्यभिचारशङ्कातादवस्थ्यात्। तदधिकरणीयव्यभिचारशङ्कानिरासद्वारा तत्र तस्योपयोगित्वमित्यपि न तदधिकरणे साधनाभावग्रहमात्रेणैव तदधिकरणीयव्यभिचारशङ्कानिवृत्तेरित्यस्वरसो वदन्तीत्यनेन सूचितः।

१। केचन—मीमांसकाः।

२। आदिना मयूरः पर्व्वतेतरस्मिन्न नृत्यति नृत्यति चेतस्य परिग्रहः।

३। इदञ्च प्राचां मतेनोक्तं, नवीनमते तु नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुत्या भगवति

सुखन्तु जगतामेव काम्यं धर्म्मेण जन्यते ।
अधर्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम् ॥१४५॥
निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।
इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥१४६ ॥
चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् ।
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥१४७ ॥

दुःखं निरूपयति अधर्मेति। अधर्म्मत्वेन दुःखत्वेन कार्य्य-कारणभाव इत्यर्थः। प्रतिकूलमिति दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकद्वेषविषय इत्यर्थः ॥ १४५ ॥

इच्छां निरूपयति—निर्दुःखत्व इति। इच्छा द्विविधा फलविषयिणी उपायविषयिणी च। फलन्तु—सुखं दुःखाभावश्च । तत्र(४)फलेच्छां प्रति फलज्ञानं कारणम्। अत एव (५) पुरुषार्थः सम्भवति। यज्ज्ञातं सत् स्ववृत्तितयेष्यते, स पुरुषार्थ इति तल्लक्षणात्। इतरेच्छा-(६)नधीनेच्छाविषयत्वं फलितोऽर्थः। उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम् ॥ १४६ ॥

चिकीर्षेति। कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणीच्छा चिकीर्षा, पाकं कृत्वा साधयामीति तदनुभावात्। चिकीर्षां प्रति

---

नित्यसुखसिद्धौ धर्म्मस्य कार्य्यतावच्छेदकं जन्यसुखत्वं सुखत्वावान्तरजातिर्व्वेति बोध्यं ।

४। तत्र—तयोर्म्मध्ये।

५। अत एव—फलेच्छां प्रति फलज्ञानस्य हेतुत्वादेव। अन्यथा स्वविषयकज्ञानजन्येच्छा-विषयत्वाभावात् सुखे दुःखाभावे चानन्तरोक्तपुरुषार्थलक्षणस्याव्याप्तिः स्यादिति भावः।

६। ननु यज्ज्ञातमित्यादेः स्वविषयकज्ञानजन्येच्छाविषयत्वमर्थः, तथा चोपायेऽतिव्याप्तिः, तस्यापि स्वविषयकेष्टसाधनताज्ञानजन्येच्छाविषयत्वादत आह—इतरेच्छेत्यादि।

**बलवद्द्विष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका ।**
**तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते * ॥१४८॥**

कृतिसाध्यताज्ञान(७)मिष्टसाधनताज्ञान(८)ञ्च कारणमित्याह—तद्धेतुरिति। अत एव(९)वृष्ट्यां कृतिसाध्यताभावान्न चिकीर्षा ॥१४७॥

बलवदिति। बलवद्द्विष्टसाधनताज्ञानं (१०) तत्र प्रतिबन्धकम्। अतो मधुविषसंपृक्तान्नभोजने न चिकीर्षा। बलवद्द्वेषः (११)

---

७। ननु कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण चिकीर्षां प्रति हेतुत्वे मानाभावः तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनताज्ञानस्य तद्धर्मप्रकारकेच्छां प्रति हेतुतायाः क्लृप्तत्वात् कृतिसाध्यपाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानादेव चिकीर्षायाः सम्भवादिति चेन्न, यत्र कृतिसाध्यपाकत्वे नेष्टसाधनत्वं न गृहीतमपि तु शुद्धपाकत्वेन कृतिसाध्यत्वं शुद्धपाकत्वेन चेष्टासाधनत्वं गृहीतं, तत्रापि पाकगोचरप्रवृत्तेरानुभविकतया तदनुरोधेन चिकीर्षाया अप्यावश्यकत्वेन तन्निर्वाहाय कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण हेतुताया आवश्यकत्वात्। अथ कृत्यसाध्यताज्ञानस्य प्रतिबध्यकत्वादेव वृष्ट्यादौ चिकीर्षानुत्पादात् कृतिसाध्यताज्ञानस्य चिकीर्षां प्रति हेतुत्वे मानाभाव इति चेन्न कृतिसाध्यत्वाभाववत्ताव्याप्यतदवच्छेदकधर्मज्ञानानां प्रतिबन्धकत्वकल्पनापेक्षया कृतिसाध्यताज्ञानस्य हेतुत्वे लाघवात्।

८। इष्टसाधनताज्ञानस्य हेतुत्वाकल्पने निष्फलत्वज्ञानेऽपि चैत्यवन्दनादौ चिकीर्षापत्तिः स्यात्।

९। अत एव—कृतिसाध्यताज्ञानस्य हेतुत्वादेव।

१०। द्वेषे बलवत्त्वं जातिविशेषः। तद्धर्मप्रकारकद्वेषविशिष्टस्य तद्धर्मावच्छिन्नजनकत्वज्ञानस्य प्रतिबन्धकत्वमित्यर्थः, नातश्चैवौयद्वेषविषयसाधनताज्ञाने सैवस्य जातेऽपि सैवस्येच्छाद्यनुपपत्त्यादिदोषः। तद्धर्मप्रकारकद्वेषानुत्तरतादृशेच्छायां तद्धर्मावच्छिन्नजनकत्वज्ञानाभावः कारणमित्येतत्कल्पने तु न काप्यनुपपत्तिरिति तत्त्वम्।

११। लाघवमेव द्वेषस्य प्रतिबन्धकत्वस्वीकारे अन्येषामभिमानः।

द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम्।
प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥१४९॥
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिदर्शितम्।
चिकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा ॥१५०॥

प्रतिबन्धक इत्यन्ये (१२) कस्यचिन्मत इति। बलवदनिष्टाजनकत्वज्ञानं (१३) कारणमित्यर्थः ॥१४८॥

द्वेषं निरूपयति—द्विष्टसाधनतेति। दुःखोपायविषयकं द्वेषं प्रति-बलवद्द्विष्टसाधनताज्ञानं कारणमित्यर्थः। बलवदिष्टसाधनता-ज्ञानञ्च प्रतिबन्धकम्, तेन (१४) नान्तरीयकदुःखजनके पाकादौ न द्वेषः ॥१४९॥

प्रयत्नं निरूपयति—प्रवृत्तिश्चेति। प्रवृत्तिनिवृत्तिजीवनयोनि-यत्नभेदात् (१५) प्रयत्नस्त्रिविध इत्यर्थः ॥१५०॥

चिकीर्षेत्यादि। मधुविषसंपृक्तान्नभोजनादौ बलवदनिष्टानु-बन्धित्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः। कृतिसाध्यता-

---

१२। यत्र चोत्कटसुखोत्कटदुःखजनकत्वमेकस्मिन् कर्म्मणि गृहीतं, तत्र सत्प्रतिपक्ष-स्थल इवेच्छाद्वेषयोरनुत्पत्तेस्तन्मते तत्र कार्य्यकाले द्वेषाभावस्य सत्त्वे नेच्छोत्पादापत्तिः, न च यत्र बलवद्द्विष्टसाधनताज्ञानेन तृतीयक्षणे द्वेषो न जनितस्तदुत्तरक्षणे इच्छोत्पादापत्तिस्तत्रापीति वाच्यं, तत्रेच्छोत्पादस्येष्टत्वात् क्षणविलम्बस्य शपथनिर्णेयत्वादित्यस्वरसः अन्ये इत्यनेन सूचितः।

१३। अत्रापि तद्धर्म्मप्रकारकद्वेषोत्तरेच्छायां तद्धर्म्मावच्छिन्नाजनकत्वज्ञानं कारणं, तादृशद्वेषानुत्तरेच्छायान्तु तद्धर्म्मप्रकारकद्वेषाभावः कारणमिति निष्कर्षो बोध्यः।

१४। तेन—द्वेषबलवत्त्वविशेषणेन।

१५। प्रवृत्तित्वं रागजन्यतावच्छेदको जातिविशेषः। निवृत्तित्वञ्च द्वेषजन्यतावच्छेदक-तया सिद्धो जातिविशेषः। जीवनयोनिप्रयत्नत्वञ्च साहजिकप्राणसञ्चारविषयकयत्नत्वं।

---

* कृतिसाध्यताज्ञानादिमतो बलवदनिष्टसाधनताज्ञानशून्यस्य बलवदनिष्टजनकत्वज्ञानं विनापि चिकीर्षायां विलम्बाभावात् बलवदनिष्टाजनकत्वज्ञानस्य हेतुत्वं न सम्भवतीत्यस्वरसः कस्यचिन्मत इत्यनेन सूचितः।

ज्ञानादिवद् (१६) बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकाभ्यां प्रवृत्तौ कारणमित्यपि वदन्ति। कार्य्यताज्ञानं प्रवर्त्तकमिति गुरवः। तथाहि—ज्ञानस्य प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति। सा (१) च कृतिसाध्यताज्ञानसाध्या, इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमात्। चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा। तत्र कृतिसाध्यत्वं प्रकारस्तत्प्रकारकज्ञानं चिकीर्षायां तद्द्वारा (२) प्रवृत्तौ च हेतुः, न त्विष्टसाधनताज्ञानं तत्र हेतुः, कृत्यसाध्येऽपि प्रवृत्त्यापत्तेः। ननु कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेन्न, तदभावापेक्षया कृतिसाध्यताज्ञानस्य लघुत्वात्। न च द्वयोरपि हेतुत्वं गौरवात्। ननु त्वन्मतेऽपि मधुविषसंपृक्तान्नभोजने चैत्यवन्दने च प्रवृत्त्यापत्तिः कार्य्यताज्ञानसत्त्वादिति चेन्न, (३) स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्य्यताज्ञानस्य

---

१६। अन्यथा कृतिसाध्यताज्ञानादेरपि चिकीर्षायामेव हेतुत्वं स्यान्न तु प्रवृत्तौ, व्यापारेण व्यापारिणो नान्यथासिद्धत्वमिति तु प्रकृतेऽपि समानमिति भावः।

१। सा च—चिकीर्षा च।

२। तद्द्वारा—कृतिसाध्यत्वप्रकारकेच्छाद्वारा।

३। स्वं प्रवर्त्तमानः पुरुषः तद्विशेषणं काम्ये कामनानित्ये कालशौचादि, तद्वत्तापक्षे तत्सम्बन्धः, तस्य प्रतिसन्धानं ज्ञानमित्यर्थः। तस्य कार्य्यताज्ञानहेतुता लिङ्गज्ञानविधया, तथाहि—पाको मत्कृतिसाध्यः, मत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वादित्यनुमानं; एवमहमिदानीन्तनकृतिसाध्यसन्ध्यावन्दनः द्विजातित्वे सति विहितसन्ध्याकालीनशौचादिमत्त्वादित्यनुमानं।

नचैवं रीत्येष्टसाधनत्वहेतुकानुमानसम्भवेऽपि पक्षे स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्य्यताज्ञानं न सम्भवति, इष्टसाधनत्वस्य यागनिष्ठत्वेन पुरुषविशेषणत्वाभावादिच्छायाः पुरुषविशेषणत्वेऽपि तस्या लिङ्गत्वासम्भवात्, लिङ्गघटकत्वेऽपि पक्षे तद्वत्ताज्ञानानिर्वाहकत्वादिति वाच्यं, काम्यसाधनताज्ञानस्यापि पक्षे यागादौ स्वविषयसाधनत्वरूपकामनासम्बन्धज्ञानात्मकत्वात्। वस्तुतस्तद्वत्ताज्ञानं तत्सम्बन्धज्ञानं तज्ज्ञानमेव वा न तु पक्षोऽपि तत्रान्तर्भूत इति काम्यसाधनताज्ञानस्यापि कामनासम्बन्धज्ञानात्मकतया कामनाज्ञानात्मकतया वाऽनुपपत्त्यभावात्।

प्रवर्त्तकत्वात्। काम्ये हि (४) यागपाकादौ कामना स्वविशेषणम्। ततश्च (५) बलवदनिष्टाननुबन्धिकाम्यसाधनताज्ञानेन कार्य्यताज्ञानम्। ततः प्रवृत्तिः। तृप्तश्च भोजने न प्रवर्त्तते, तदानीं कामनायाः पुरुषविशेषणत्वाभावात् (६)। नित्ये च शौचादिकं (७) पुरुषविशेषणम्। तेन शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात् तत्र प्रवृत्तिः। ननु (८) तदपेक्षया लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्य्यताज्ञानत्वेनैव हेतुत्वमस्तु, बलवदनिष्टाननुबन्धित्वञ्च (९) इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं

---

४। ननु स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्य्यताज्ञानस्य प्रवर्त्तकत्वे इष्टसाधनताज्ञानशून्यकालेऽपि पाके स्वविशेषणकृत्यादिघटितहेत्वन्तरादत्र कार्य्यानुमितिर्यथा—पाकः स्वेच्छाधीनमत्कृतिसाध्यः श्रमादिभिन्नत्वे सति मत्कृतिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वात्, स्वेच्छाधीनमत्कृतिं विनाऽसत्त्वादिति वा तत्रापि प्रवृत्त्यापत्तिरत आह—काम्ये हीति। कामना—यागपाकादिगोचरकामना, क्वचित्तथैव पाठः। तथाच स्वविशेषणेत्यत्र विशिष्यतादृशकामनारूपमेव स्वविशेषणं वाच्यं, एवं विशेषणवत्त्वमपि स्वविषयसाधनत्वरूपं वाच्यं, तेन न स्वेच्छाधीनेत्यादि हेतुज्ञानजन्यकार्य्यानुमितिस्थले प्रवृत्त्यापत्तिरिति भावः।

५। ननु काम्यसाधनताज्ञानजन्यकार्य्यताज्ञानस्य प्रवर्त्तकत्वे मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरित्यत आह—ततश्च बलवदनिष्टेति। तथाच स्वविशेषणवत्ताप्रतिसन्धाने बलवदनिष्टाननुबन्धित्वविषयकत्वं विशेषणं देयमिति भावः।

६। तथाच स्वविशेषणेत्यत्र तदानीन्तनत्वं विशेषणं देयमिति भावः।

७। आदिना विहितकालजीवित्वादेः परिग्रहः, तथाच नित्यगोचरप्रवृत्तिस्थले स्वविशेषणपदेन विशिष्यतत्कालीनशुचित्वादिरूपविशेषणमेव ग्राह्यमिति न यथेच्छविशेषणमादाय दोषः शङ्कनीयः।

८। नैयायिकः शङ्कते—नन्विति। तदपेक्षया—बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वज्ञानजन्यकृतिसाध्यताज्ञानापेक्षया, लाघवेन—नियमादिघटितजन्यत्वापेक्षया विषयत्वस्य लघुत्वेनेत्यर्थः।

९। ननु बलवदनिष्टाजनकत्वज्ञानं न हेतुः, क्वचिदल्पायाससाध्ये बहुतरस्यापि दुःखस्याबलवत्त्वात् क्वचिदल्पस्य बलवत्त्वादनुगतस्याबलवत्त्वस्य बलवत्त्वस्य वा दुर्वचत्वादत आह—बलवदनिष्टाननुबन्धित्वञ्चेति।

(१०)बलवद्द्वेषविषयदुःखाजनकत्वं(११)वेति चेन्न, इष्टसाधनत्वकृतिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात् साध्यत्वसाधनत्वयोर्विरोधात्। असिद्धस्य (१२) साध्यत्वं, सिद्धस्य च साधनत्वम्। न चैकमेकैनैकदा (१३) सिद्धमसिद्धञ्चेति ज्ञायते। तस्मात् कालभेदादुभयं ज्ञायते। मैवम् (१४) लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य हेतुत्वात्। न च (१५) साध्यत्वसाधनत्वयोर्विरोधः यदा कदाचित् साध्यत्वसाधनत्वयोरविरोधात् (१६)।

---

१०। एतेन मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरपास्ता, इष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तस्य मरणदुःखस्य तेन जननात्। नचैवं सुखमात्रजनके कर्म्मणीष्टोत्पत्तिनान्तरीयकदुःखाप्रसिद्ध्या तत्र प्रवृत्त्यभावप्रसङ्ग इति वाच्यं, "कष्टं कर्म्मेति" न्यायेन सुखजनकेऽपि कर्म्मणि दुःखजनकत्वनियमेनाप्रसिद्ध्यभावात्।

११। नन्वेवं सति नरकसाधनत्वेन प्रमिते परदाराभिगमनादौ रागोत्कव्यान्न प्रवर्त्तेत इष्टोत्पत्त्यनान्तरीयकदुःखाजनकत्वेन तस्य नियमादत आह—बलवद्द्वेषेति। द्वेषे च बलवत्त्वं जातिविशेषः। तथाच—रागान्धस्य यदागम्यागमनादिजन्यदुःखे न तादृशो द्वेषस्तदा तद्धेतावपि न प्रवृत्त्यनुपपत्तिः।

१२। साध्यत्वसाधनत्वयोर्व्विरोधमुपपादयति—असिद्धस्य हीत्यादि। असिद्धस्य—आद्यक्षणवृत्तित्वविशिष्टस्य। सिद्धस्य—अनाद्यक्षणविशिष्टस्य। कृत्यव्यवहितोत्तरक्षणसम्बन्धित्वरूपस्य कृतिसाध्यत्वस्य पाकोत्पत्तिक्षण एव पाकवृत्तित्वात्, कालान्तरभाव्योदनसाधनत्वस्योदनाव्यवहितपूर्व्वक्षणसम्बन्धित्वघटितस्य चोत्पत्तिक्षणे पाकावृत्तित्वात्, तयोरेकक्षणावच्छेदेनैकवावृत्तित्वरूपविरोधादिति भावः।

१३। साध्यत्वसाधनत्वयोर्व्विरोधं व्युत्पाद्य तयोरेकज्ञानाविषयत्वमपि न सम्भवतीत्याह—न चैकमेकैनैकदेति।

१४। प्राभाकरमतं दूषयति—मैवमिति।

१५। साध्यत्वसाधनत्वयोर्व्विरोधं दूषयति—न चेति।

१६। तथाचैककालीनकृतिसाध्यत्वेष्टसाधनत्वयोर्व्विरोधेऽपि न क्षतिस्तथाज्ञानस्यास्माभिः कारणत्वानङ्गीकारात्, किन्तु निर्व्विशेषितयोः सामान्यतः कृतिसाध्यत्वेष्टसाधनत्वयोर्ज्ञानस्यैव हेतुत्वाङ्गीकारादिति भावः।

एकदा साध्यत्वसाधनत्वयोश्च ज्ञानात् (१७) नव्यास्तु (१८) ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्त्तकमनागते तस्य ज्ञातुमशक्यत्वात् (१९) किन्तु यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्त्तते, तेनौदनकामस्य तत्साधनताज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यस्तादृशश्चाहमिति प्रतिसन्धाय पाके प्रवर्त्तत इत्याहुस्तन्न, स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्भेदादिना सम्भोगादौ च तदभावात् (२०)। इदन्तु बोध्यम्। इदानीन्तनेष्ट-साधनत्वादिज्ञानं प्रवर्त्तकम्, तेन (२१) भावियौवराज्ये बालस्य न प्रवृत्तिः, तदानीं कृतिसाध्यत्वाज्ञानात्। एवं तृप्तस्य भोजने न प्रवर्त्तते, तदानीमिष्टसाधनत्वाज्ञानात्। प्रवर्त्तते च रोगदूषितचित्तो विषादिभक्षणे तदानीं बलवदनिष्टाननुबन्धित्वज्ञानात्। न चास्ति-कस्यागम्यागमनशत्रुबधादिप्रवृत्तौ कथं बलवदनिष्टाननुबन्धित्व-बुद्धिर्नरकसाधनत्वज्ञानादिति वाच्यम्, उत्कटरागादिना नरकसाधन-ताधीतिरोधानात्। वृष्ट्यादौ तु कृतिसाध्यताज्ञानाभावान्न चिकीर्षा-प्रवृत्ती, किन्त्विष्टसाधनताज्ञानादिच्छामात्रम्। कृतिश्च प्रवृत्तिरूपा बोध्या (२२)। तेन (२३) जीवनयोनियत्नसाध्ये प्राणपञ्चकसञ्चारे

---

१७। ज्ञानात्—ज्ञानसम्भवात्। मूलाद्यनवगाहिनोऽपि वृक्षः कपिसंयोगीति ज्ञानस्यानु-भविकतया "अव्याप्यवृत्तेर्ज्ञानं स्वावच्छेदकविषयकमेवेति" नियमे मानाभावादिति भावः।

१८। प्राभाकरानुयायि नवीनमतमाह—नव्यास्त्विति।

१९। सामान्यलक्षणा प्रत्यासत्यनङ्गीकारे प्रत्यक्षस्य पक्षज्ञानाभाविनानुमितेश्चासम्भवादिति भावः।

२०। तदभावात्—यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वज्ञानाभावात्।

२१। इष्टसाधनत्वादीत्यत्रादिपदोपगृहीतस्येदानीन्तनकृतिसाध्यताघटककृताविदानीन्तनत्व-विशेषणस्य प्रयोजनमाह—तेन भावीति।

२२। कृतिसाध्यताज्ञानमित्यत्र प्रवृत्तित्वेन कृतेः प्रवेश इत्यर्थः।

२३। तेन—प्रवृत्तिप्रवेशेन।

न प्रवृत्ति: (२४)। इत्यञ्च (२५) प्रवर्त्तकत्वानुरोधाद्विधेरपीष्टसाधनत्वादिकमेवार्थ:। इत्यञ्च (२७) "विश्वजिता यजेत" इत्यादौ यत्र फलं न श्रूयते, तत्रापि स्वर्ग: फलं कल्प्यते। नन्वहरह: सन्ध्यामुपासीतेत्यादौ इष्टानुत्पत्ते: प्रवृत्ति: कथम्, न चार्थवादिकं (२८) ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यम्। तथा सति काम्यत्वेन नित्यत्वहान्यापत्ते: (२९)। कामनाभावे चाकरणापत्ते: (३०)। इत्यञ्च (३१) यत्र फलश्रुतिस्तत्रार्थवादमात्रमिति चेन्न, ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव नित्यत्वकाम्यत्वयोरप्यविरोधात्। न च कामनाभावेऽकरणापत्ति: त्रिकालस्तवपाठादाविव

---

२४। प्राणानामतीन्द्रियतयोपादानप्रत्यक्षाभावादेव न प्राणोपादानकसञ्चारसाधक-प्रवृत्त्यापत्तिरिति वाच्यं, प्राणवहनाड्युपादानकप्राणसञ्चारसाधकप्रवृत्त्यापत्तिवारणायैव प्रवृत्तिसाधकताज्ञानहेतुताङ्गीकारात्।

२५। प्रवृत्तिं प्रतीष्टसाधनताधियो हेतुत्वे चेत्यर्थ:।

२६। आदिना बलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वयो: परिग्रह:। अत्र च निष्फले प्रवृत्त्यभावादिष्टसाधनत्वस्य इष्टसाधनेऽपि मधुविषसम्पृक्तान्नभोजने अप्रवृत्तेर्बलवदनिष्टाननुबन्धित्वस्य कृत्यसाध्ये सुमेरुशृङ्गाहरणादावप्रवृत्ते:, कृतिसाध्यत्वस्य च ज्ञानं प्रवृत्तिहेतु:, तच्च विधित इतीष्टसाधनत्वादिकं विध्यर्थ इति भाव:।

२७। नन्वेवं विश्वजिता यजेतेत्यादौ फलाश्रवणेनेष्टसाधनताज्ञानाभावात् प्रवृत्तिर्न स्यादत आह—इत्यञ्चेति, इष्टसाधनत्वादेर्विध्यर्थत्वे चेत्यर्थ:।

२८। सन्ध्यामुपासते ये तु नियतं शंसितव्रता:। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयमित्यर्थवादबोधितमित्यर्थ:।

२९। नित्यत्वकाम्यत्वयोर्विरोध इत्यभिमान:।

३०। अकरणे प्रत्यवायानुत्पत्त्यापत्तेरित्यर्थ:। कामनारूपाधिकाराभावादनधिकृताकरणस्य प्रत्यवायजनकत्वाभावादिति भाव:।

३१। ननु तथापि नित्यस्थलीयफलश्रुतेर्व्यर्थत्वमित्याशङ्क्यार्थवादतया स्तुतिमात्रे तात्पर्यं कल्प्यत इत्याह—इत्यञ्चेति।

कामनासद्भावस्यैव (३२) कल्पनात्। नतु वेदबोधितकार्य्यताज्ञानात् प्रवृत्तिरिति सम्भवति, स्वेष्टसाधनत्वमविज्ञाय तादृशकार्य्यताज्ञान-सहस्रेणापि प्रवृत्तेरसम्भवात् (३३)। यदपि (३४) परैरपूर्वं फल-मिति तदपि न. कामनाभावेऽकरणापत्तेस्तौल्यात्। कामनाकल्पने त्वार्थवादिफलमेव रात्रिसत्रन्यायात् (३५) कल्प्यतामन्यथा (३६) प्रवृत्त्यनुपपत्तेः। तेना-(३७)नुत्पत्तिं प्रत्यवायस्यान्ये मन्यन्ते। एवम्—

"सन्ध्यामुपासते ये तु सततं शंसितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्॥"

एवम्—

"दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्।" इति

प्रीत्यादिकमेव फलमस्तु। न च पितृप्रीतिः कथं फलं व्यधि-करणत्वादिति वाच्यम्, गयाश्राद्धादाविव उद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचित् कल्पनात्। अत (३८) एवोक्तं शास्त्रदर्शित-फलमनुष्ठातरीत्युत्सर्ग इति। पितॄणां मुक्तत्वे तु स्वस्य स्वर्गफलं

---

३२। ननु नित्यगोचरप्रवृत्ताविष्टसाधनताज्ञानं कारणमेव नेत्यनेनैवोपपत्तौ किमर्थं नित्यस्यापि काम्यत्वं कल्पनीयमत आह—न त्विति।

३३। अन्वयव्यतिरेकाभ्यां प्रवृत्तित्वावच्छिन्नं प्रतीष्टसाधनताज्ञानस्य हेतुत्वादिति भावः।

३४। प्रभाकरमतं दूषयति—यदपीति।

३५। यथाहि रात्रिसत्रशब्दवाच्यानां ज्योतिर्गौरित्यादिवाक्योत्पन्नकर्म्मणां फलजिज्ञासाया-मत्यन्ताश्रुतस्वर्गादिफलकल्पने गौरवाद्विश्वजिन्न्यायापवादेन "प्रतितिष्ठन्तीह वा य एता रात्रीरु-पयन्ती" त्यर्थवादश्रुतौ प्रतिष्ठैव फलमिति सिद्धान्तितं, तथात्राप्यार्थवादिकब्रह्मलोक एव फलं लाघवादित्यर्थः।

३६। अन्यथा—फलाभावे।

३७। तेन—आर्थवादिकफलकल्पने लाघवेन। तत्र तत्रार्थवादिकफलं दर्शयति—अनुत्पत्तिमित्यादिना।

३८। अत एव—पितृप्रीतेः श्राद्धफलत्वादेव।

यावन्नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गादिफलकल्पनात्। पण्डापूर्व्वार्थं प्रवृत्तिश्च न सम्भवति। न हि तत्सुखदुःखाभाववत् स्वतः पुरुषार्थः न वा तत्साधनम् (३९)। प्रत्यवायानुपपत्तौ (४०) कथं प्रवृत्तिरिति चेत् इत्थम्, यथा हि नित्ये कृते प्रत्यवायाभावस्तिष्ठति (४१) तदभावे तदभावः। एवं प्रत्यवायाभावस्य सत्त्वे दुःखप्रागभावसत्त्वं तदभावे (४२) तदभाव इति योगक्षेमसाधारणकारणतया (४३) दुःखप्रागभावं प्रत्यपि सुवचत्वात्। एवमेव (४४) प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति। ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे (४५) कथं नञर्थान्वयः, इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति (४६) चेन्न, तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वञ्च न विध्यर्थः, किन्तु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते। अथवा (४७) बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः।

---

३९। तथाचेच्छाविषयत्वाभावेन फलत्वाभावान्न तत्साधनताज्ञानं प्रवर्त्तकमिति भावः।

४०। उद्देश्यत्वं सप्तम्यर्थः, इच्छाविषयत्वाभावात् प्रत्ययानुत्पत्तेः फलत्वाभावेन तत्साधनताज्ञानस्य प्रवृत्त्या हेतुत्वात् सन्ध्यावन्दनादौ कथं प्रवृत्तिरिति शङ्कार्थः।

४१। प्रत्यवायाभावः—प्रत्यवायप्रागभावः। तदभावे—सन्ध्यावन्दनादिनित्याभावे। तदभावः—प्रत्यवायाभावस्याभाव इत्यर्थः।

४२। तदभावे—प्रत्यवायाभावस्याभावे। तदभावः—दुःखप्रागभावाभावो दुःखरूपः।

४३। योगोऽप्राप्तस्य प्राप्तिः, क्षेमः सिद्धस्य संरक्षणं, प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्य हेतुतायां साधनतायाः क्षेमसाधारण्या एव प्रविष्टत्वादिति भावः।

४४। एवमेव—योगक्षेमसाधारणमेव।

४५। ननु न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणाभाव इष्टसाधनमित्यन्वयबोधाभ्युपगमे बाधकाभाव इत्यत आह—विध्यर्थे वाथं नञर्थेति। विध्यर्थनञर्थयोः कथमन्वयः ? विध्यर्थेष्टसाधनत्वाद्यन्वितनञर्थस्याभावस्य कलञ्जभक्षणे कथमन्वय इत्यर्थः।

४६। कलञ्जभक्षणे तस्य बाधादिति भावः।

४७। प्रवृत्तिं प्रति कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वज्ञानत्वेने-

तदभावस्य नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति (४८)। ननु (४९) श्येनेनाभिचरन् यजेतेत्यादौ कथं बलवदनिष्टाननुबन्धित्वमर्थः? श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्। न च वैधत्वान्न निषेध इति (५०) वाच्यम्, अभिचारे प्रायश्चित्तोपदेशात् (५१) न च (५२) मरणानुकूलव्यापारमात्रं यदि हिंसा तदा खड्गकारस्य कूपकर्त्तुश्च हिंसकत्वापत्तिर्गललग्नान्नभक्षणजन्यमरणे स्वात्मवधत्वापत्तिश्चेति वाच्यम्, मरणोद्देश्यकत्वस्यापि विशेषणत्वात्। अन्योद्देश्यकच्छिन्ननाराचहतब्राह्मणस्य तु वाचनिकं प्रायश्चित्तमिति चेन्न. श्येनवारणायादृष्टाद्वारकत्वेन

---

कस्यैव हेतुत्वं लाघवान्नतु कृतिसाध्यत्वादिप्रत्येकविषयकज्ञानत्वेन हेतुत्वं गौरवादतो विधेरपि विशिष्टमेव शक्यं वाच्यं, एवञ्च निषेधस्थले विशिष्टाभावो विधिसमभिव्याहृतनञा बोध्यते इत्यभिप्रायवानाह—अथवेति।

४८। एवञ्चेष्टसाधनत्वादिमति कलञ्जभक्षणादौ विशिष्टाभावो बोध्यमानो बलवदनिष्टाननुबन्धित्वाभावे पर्य्यवस्यतीति भावः।

४९। विशिष्टस्य विध्यर्थत्वे श्येने बलवदनिष्टाननुबन्धित्वरूपविशेषणबाधात् कथं विशिष्टस्य विध्यर्थस्य बोध इत्याशङ्कते—ननु श्येनेति। श्येनेति कर्म्मनामधेयां, अभिचरन्—वैरिमारणं कारयन्।

५०। यज्ञीयपश्वालम्भनानुरोधेन मा हिंस्यादिति निषेधस्य वैधहिंसेतरहिंसापरत्वं स्यादित्यभिमानः।

५१। तथाचाभिचारसङ्गीनश्च विभिः कृच्छ्रैर्व्यपोहतीति प्रायश्चित्तोपदेशवैयर्थ्यापत्त्या निषेधविधेस्तदतिरिक्तपरत्वं न सम्भवतीति भावः। नचैवं यज्ञीयपशुहिंसाया अपि प्रत्यवायजनकत्वापत्तिरिति वाच्यं, मा हिंस्यादिति निषेधविधेरनुपदिष्टप्रायश्चित्तहिंसेतरहिंसापरत्वात्।

५२। साक्षान्मरणानुकूलव्यापार एव हिंसा, नहि श्येनस्तथेति मा हिंस्यादिति निषेधाविषयत्वादस्यैव बलवदनिष्टाननुबन्धित्वमित्यभिप्रायेण साक्षात्परम्परासाधारणमरणानुकूलव्यापारमात्रस्य हिंसात्वे दोषमाह—मरणानुकूलेति।

**निवृत्तिस्तु भवेद्द्वेषाद् द्विष्टसाधनता धियः ॥१५१॥**

विशेषणात् (५३)। अत एव (५४) काशीमरणाद्यर्थकृतशिवपूजादेरपि न हिंसात्वम् (५५)। न च (५६) साक्षान्मरणजनकस्यैव हि हिंसात्वं श्येनस्तु न तथा, किन्तु तज्जन्यापूर्वमिति वाच्यम्, खड्गाघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानापत्तेः। केचित् (५७) तु श्येनस्य हिंसाफलं (५८) न तु मरणम्। तेन श्येनजन्यखड्गघातादिरूपा हिंसा अभिचारपदार्थः। तस्य च पापजनकत्वम्। अतः श्येनस्य वैधत्वात् पापाजनकत्वेऽपि अग्रिमपापं प्रतिसन्धाय सन्तो न प्रवर्त्तन्ते इत्याहुः। आचार्य्यास्तु (६०) आप्ताभिप्रायो

---

५३। मरणानुकूलव्यापार इति शेषः। तथाहि—श्येनस्यादृष्टद्वारैव वैरिमरणसाधनत्वान्न हिंसात्वमिति भावः।

५४। अत एव—अदृष्टाद्वारकत्वविशेषणादेव।

५५। तथा च ताद्दशशिवपूजनादेर्हिंसात्ववारणायावश्यकेनादृष्टाद्वारकत्वविशेषणेन श्येनस्यापि हिंसात्ववारणमिति भावः।

५६। ननु साक्षान्मरणजनकत्वविशेषणादेव ताद्दशशिवपूजनश्येनादेर्व्वारणसम्भवे किमदृष्टाद्वारकत्वेन गुरुविशेषणेनेति तटस्थः शङ्कते—न च साक्षादिति।

५७। अदृष्टाद्वारकत्वविशेषणं विनैव श्येने बलवदनिष्टाननुबन्धित्वमुपपादयतां मतमाह—केचित्त्विति।

५८। साक्षान्मरणफलको व्यापारः फलमित्यर्थः। न च पूर्व्वं न चेत्यादिना साक्षान्मरणजनकव्यापारस्यैव हिंसात्वमित्याशङ्कितत्वात्तेन पौनरुक्त्यमिति वाच्यं, पूर्व्वं साक्षान्मरणजनकस्य श्येनजन्यापूर्व्वस्य हिंसात्वमाशङ्कितं, इह च तथाभूतस्य खड्गाभिघातादेरिति भेदात्। नचादिपदेन श्येनजन्यापूर्व्वस्य तथाभूतस्य ग्रहणात् कथं भेद इति वाच्यं, श्येनजन्यापूर्व्वस्यैतन्मते साक्षान्मरणजनकखड्गाभिघातं प्रत्येव व्यापारतया तस्य मरणजनकत्वाभावात्। न च व्यापारस्य हिंसात्वे खड्गाघातेन ब्राह्मणे व्रणपरम्परामृते हिंसात्वानुपपत्तिस्तदवस्थैवेति वाच्यं, तत्र खड्गघाताद्युत्तरमेव सन्निपातादिदोषोत्पत्त्या मरणं प्रति तस्य व्यापारतया व्यापारेण व्यवधानासम्भवात्।

५९। कुतस्तर्हि आस्तिकानां श्येने न प्रवृत्तिरत आह—अग्रिमेति।

६०। विध्यर्थश्चाप्ताभिप्रायः, स च स्वेष्टसाधनतानुमापकः इष्टसाधनताज्ञानञ्च प्रवर्त्तकमित्युदयनाचार्य्यमतमाह—आचार्य्यास्त्विति।

विध्यर्थः। "पाकं कुर्य्या" इत्यादौ (६१) आज्ञादिरूपेच्छावाचित्व-वल्लिङ्गमात्रस्येच्छावाचित्वं (६२) लाघवात् (६३)। एवं "स्वर्गकामो यजेते"त्यादौ यागः स्वर्गकामकृतिसाध्य तया आप्तेष्ट इत्यर्थः। तत-स्त्वाप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमाय (६४) प्रवर्त्तते। कलञ्जभक्ष-णादौ तदभावान्न (६५) प्रवर्त्तते। यस्तु (६६) वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधिरेव (६७) तावद्गर्भ इव श्रुतिः कुमार्याः पुंयोगे मानम्। न च कर्त्तृस्मरण (६८) बाधकम्, कपिलकणा-दादिभिरद्यपर्य्यन्तं कर्तृस्मरणस्यैव (६९) प्रतीयमानत्वात्। अन्यथा (७०) स्मृतीनामप्यकर्त्तृकत्वापत्तेः। तत्रैव कर्त्तृस्मरणमस्तीति चेद्वेदेऽपि "छन्दांसि जज्ञिरे तस्मा"दित्यादि कर्त्तृस्मरणमस्त्येव। (७१) एवं "प्रति मन्वन्तरं चैषा श्रुतिरन्या विधीयत" इत्यपि द्रष्टव्यम्।

"स्वयम्भुरेष (७२) भगवान् वेदो गीतस्त्वया पुरा।
शिवाद्या ऋषिपर्य्यन्ताः स्मर्त्तारोऽस्य न कारकाः"॥

---

६१। आदिना पाकं कुर्य्यामित्युत्तमपुरुषपरिग्रहः।

६२। आदिनाध्येषणादिपरिग्रहः।

६३। बलवदनिष्टाननुबन्धीष्टसाधनत्वाद्यपेक्षयेच्छात्वेन विधिशक्तौ लाघवादित्यर्थः।

६४। अतश्च यागो मम स्वर्गकामस्य बलवदनिष्टाननुबन्धीष्टसाधनं मत्कृतिसाध्यतयाप्तेनेष्य-माणत्वात् मन्मात्रकृतिसाध्यतयेष्यमाणमद्भोजनवदित्यनुमानमवधेयम्।

६५। तदभावात्—आप्तेष्टत्वाभावेन तद्धेतुकेष्टसाधनत्वाभावात्।

६६। ननु वेदे वक्तुरभावात् कस्येच्छा लिङा बोधनीयेत्यत आह—यस्त्विति।

६७। वक्तृभिन्नेच्छाया बोधने विधेः सामर्थ्याभावाद्विधिरेव वेदवक्तरीश्वरे मानमिति भावः।

६८। कर्त्तुः—वेदकर्त्तुः. अस्मरणं—स्मृतिभिरबोधनम्। तथाच वेदोऽपौरुषेयः अस्मर्य्य-माणकर्त्तृकत्वादित्यनुमानं बाधकमित्यर्थः।

६९। कर्त्तृस्मरणस्य—सकर्त्तृकत्वबोधक स्मृतेरित्यर्थः।

७०। अन्यथा—वेदे सकर्त्तृकत्वानङ्गीकारे।

७१। वेदस्य सकर्त्तृकत्वं श्रुतिं प्रदर्श्य स्मृतिमपि दर्शयति—एवमित्यादि।

इति तु वेदस्य स्तुतिमात्रम् ( ७३ )। न च पौरुषेयत्वे भ्रमादिसम्भवादप्रामाण्यं स्यादिति वाच्यम्, नित्यसर्वज्ञत्वेन ( ७४ ) निर्दोषत्वात्। अत एव ( ७५ ) पुरुषान्तरस्य भ्रमादिसम्भवान्न कपिलादेरपि कर्तृत्वं वेदस्य। किञ्च ( ७६ ) वर्णानामेवानित्यत्वस्य वक्ष्यमाणत्वात् सुतरां तत्सन्दर्भस्य ( ७७ ) वेदस्यानित्यत्वमिति संक्षेपः॥
उपादानस्येति—उपादानस्य समवायिकारणस्याध्यक्षं प्रत्यक्षं प्रवृत्तौ ( ७८ ) कारणमिति॥

निवृत्तिरिति, द्विष्टसाधनताज्ञानस्य निवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमिति भावः॥ १४९ ॥ १५० ॥ १५१ ॥

---

७२। ननु वेदस्य नित्यत्वबोधकं भागवताद्येव तस्याकर्तृकत्वे प्रमाणं भविष्यतीत्याशङ्कते—स्वयम्भुरिति, नित्य इत्यर्थः। एष भगवानित्यपि वेदविशेषणम्।

७३। तथाच पूर्वोक्तश्रुतिस्मृत्योर्विरोधेनास्य भारतस्य न स्वार्थे तात्पर्यं, अपि तु स्तुतिपरत्वमिति भावः।

७४। नित्यसर्वज्ञत्वेन—नित्यसर्वविषयकज्ञानवत्त्वेन। निर्दोषत्वात् भ्रमादिशून्यत्वात्।

७५। अत एव—नित्यसर्वज्ञत्वाभावादेव।

७६। ननु नित्यसर्वज्ञपुरुषप्रणीतत्वापेक्षया नित्यनिर्दोषत्वं वेदे स्वीकृत्य तदेव वेदप्रामाण्ये प्रयोजकमस्तु, तथाच सकर्तृकत्वानुमाने बाध इत्यतो वेदस्य नित्यत्वे बाधकमाह—किञ्चेति।

७७। तत्सन्दर्भस्य—तन्निष्ठानुपूर्वीविशेषणस्य। आनुपूर्व्या नित्यत्वे त्वनित्यसमवेतनित्यस्य जातित्वेनानुपूर्व्या जातित्वापत्तेरिति भावः। अवाप्तेच्छाविषयत्वस्येश्वरेच्छाविषयत्वरूपस्य केवलान्वयिनः कलञ्जभक्षणेऽपि सत्त्वात् बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपसाध्यस्य च तत्राभावेन व्यभिचारात् कथं तस्य तदनुमापकत्वं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वप्रकारकेच्छाया लिङर्थत्वे च लाघवादबलवदनिष्टाननुबन्धीष्टसाधनत्वमेव लिङर्थोऽस्तु कृतमाप्तेच्छयेत्यस्वरसः आचार्य्यास्त्वित्यनेन सूचितः।

७८। नचैवं शब्दसाध्यकप्रवृत्तिर्मृदङ्गादौ न स्यात् तत् समवायिकारणस्य गगनस्यातीन्द्रियत्वात्। एवं ध्वंससाध्यकप्रवृत्तिरपि न स्यात् तत्समवायिनोऽप्रसिद्धेरिति वाच्यं, इष्टापत्तेः। प्राचीनमतानुसारेणेदं शब्दसाक्षात्कारसाध्यकप्रवृत्तेरेव मृदङ्गादिगोचराया उपगमात्। नवीनमते त्वधिष्ठानमात्रमुपादानं बोध्यं, तेन यागादेर्हविः शब्दस्य मृदङ्गादिः प्राणसञ्चारादेश्च प्राणवहनाड्यादिरिति ध्येयम्।

यतो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत्।
शरीरे प्राणसञ्चारकारणं परिकीर्त्तितम् ॥१५२॥
अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु तत्।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥१५३॥
तदेवासमवायि स्यात् पतनाख्ये तु कर्म्मणि।
सांसिद्धिकद्रवत्वं स्यान्नैमित्तिकमथापरम् ॥१५४॥
सांसिद्धिकन्तु सलिले द्वितीयं क्षितितेजसोः।
परमाणौ जले नित्यमन्यत्रानित्यमुच्यते ॥ १५५ ॥

यत इति। जीवनयोनियत्नो (७९)यावज्जीवनमनुवर्त्तते। स चातीन्द्रियः॥

तत्र प्रमाणमाह—शरीर इति, (८०) प्राणसञ्चारो हि अधिकश्वासादिः प्रयत्नसाध्यः। इत्यञ्च प्राणसञ्चारस्य सर्व्वस्य यत्नसाध्यत्वानुमानात् प्रत्यक्षयत्नस्य बाधाच्चातीन्द्रिययत्नसिद्धिः। स एव जीवनयोनिप्रयत्नः॥ १५२ ॥

गुरुत्वं निरूपयति अतीन्द्रियमिति—

अनित्ये द्व्यणुकादौ तद्गुरुत्वमनित्यम्। नित्ये परमाणौ नित्यम्। गुरुत्वमित्यनुवर्त्तते। तद्गुरुत्वम् असमवायि (१) असमवायिकारणम्। पतने आद्यपतने (२) इत्यर्थः। द्रवत्वं निरूपयति—

---

७९। नव्यास्तु जीवनयोनियत्ने मानाभावः प्राणक्रियाया अदृष्टविशेषप्रयोज्यात्मसंयोगरूपाज्जीवनात्तत्प्रयोजकादृष्टाद्वा सम्भवादित्याहुः।

८०। अधिकश्वासादिप्राणसञ्चारो यत्नसाध्यः, प्रत्यक्षयत्नसाध्यतया दृष्टो धावतः प्रयत्नोत्कर्षेण श्वासक्रियोत्कर्षदर्शनादिति भावः।

१। पतनसमवायिभिन्नत्वरूपं पतनासमवायित्वं रूपादावतिव्याप्तमतो व्याचष्टे—असमवायि कारणमिति।

नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु ।

द्रव्यत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥१५६॥

स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ ।

तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥१५७॥

सांसिद्धिकमिति। द्रवत्वं द्विविधं सांसिद्धिकं नैमित्तिकञ्चेति। द्वितीयं नैमित्तिकं। परमाणाविति जलपरमाणौ द्रवत्वं नित्यम्। अन्यत्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यम् ॥ १५३॥ १५४ ॥ १५५ ॥

कुत्रचित्तेजसि कुत्रचित् पृथिव्याञ्च नैमित्तिकं द्रवत्वम् तत्र का वा नैमित्तिकार्थस्तद्दर्शयति—नैमित्तिकमिति। अग्निसंयोगजन्यं (३) नैमित्तिकं द्रवत्वम्। तच्च सुवर्णादिरूपे तैजसे घृतजतुप्रभृति पृथिव्यां वर्त्तत इत्यर्थः॥

द्रवत्वमिति। हेतुरिति असमवायिकारणमित्यर्थः। संग्रहे सक्तुकादिसंयोगविशेषे तद्द्रवत्वं स्नेहसहित(४)मिति बोद्धव्यम्। तेन द्रुतसुवर्णादीनां न संग्रहः॥ १५६ ॥

स्नेहं निरूपयति—स्नेह इति। जल इति जल एवेत्यर्थः। असौ स्नेहः॥

---

२। द्वितीयादिपतनस्य वेगासमवायिकारणकत्वादाह— आद्येति। एवञ्च संयोगासमवधानकालीना क्रिया गुणासमवायिकारणिकाक्रियात्वात् संयोगजन्यक्रियावदित्यनुमानेन गुरुत्वसिद्धिरिति भावः।

३। अग्निसंयोगजन्यं – अग्निसंयोगासमवायिकारणकमित्यर्थः।

४। सांसिद्धिकमित्यर्थः, तथाच सांसिद्धिकद्रवत्वत्वेन हेतुत्वान्न सुवर्णादिद्रवत्वस्य संग्रह इति भावः। नचावश्यकत्वे हेतुत्वेनैवानतिप्रसङ्गे सांसिद्धिकद्रवत्वस्य संग्रहहेतुत्वे मानाभाव इति वाच्यं, स्नेहत्वेन सांसिद्धिकद्रवत्वत्वेन वा हेतुत्वमित्यत्र विनिगमनाविरहेणोभयस्यापि हेतुत्वात्।

संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ।
मूर्त्तमात्रे तु वेगः स्यात् कर्म्मजो वेगजः क्वचित् ॥ १५८
स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि ।
अतीन्द्रियोऽसौ विज्ञेयः क्वचित् स्पन्देऽपि कारणम् १५९

ननु पृथिव्यामपि तैले स्नेह उपलभ्यते, न चासौ जलीयः, तथा सति (५) दहनप्रातिकूल्यं स्यादत आह—तैलान्तर इति। तत्-प्रकर्षात् स्नेहप्रकर्षात्। तैले उपलभ्यमानस्नेहोऽपि जलीय एव। तस्य प्रकृष्टत्वादग्नेरानुकूल्यम्। अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः ॥ १५७ ॥

संस्कारं निरूपयति—संस्कारेति। वेगस्थितिस्थापकभावनाभेदात् संस्कारस्त्रिविध इत्यर्थः।

मूर्त्तमात्रे कर्म्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः। शरादौ हि नोदनजनितेन कर्म्मणा वेगो जन्यते। तेन (६) च पूर्वकर्म्मनाशस्तत उत्तरं कर्म्म। एवमग्रेऽपि (७) विना च वेगं कर्म्मणः कर्म्म-प्रतिबन्धकत्वात् पूर्वकर्म्मनाश उत्तरकर्म्मोत्पत्तिश्च न स्यात्। यत्र वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः ॥ १५८ ॥

स्थितिस्थापकेति। आकृष्टशाखादीनां परित्यागे पुनर्गमनस्य (८) स्थितिस्थापकसाध्यत्वात् (९) केचिदिति। चतुर्षु क्षित्यादिषु

---

५। तथा सति—तैलान्तर्जलभागस्वीकारे।

६। कर्म्मनाशकस्योत्तरसंयोगस्य तदानीमभावाद्वेगस्यैव कर्म्मनाशकत्वं कल्प्यत इति भावः। वेगत्वञ्च प्रत्यक्षसिद्धो जातिविशेषः।

७। उत्तरकर्म्मणापि पूर्व्ववेगनाशस्ततो वेगान्तरोत्पत्तिरित्येषा दिगित्यर्थः।

८। पुनर्गमनस्य—यथापूर्व्वसंयोगजनकक्रियाया इत्यर्थः।

९। वेगस्य तूत्तरदेशसंयोगजनकक्रियाजनकत्वं, न तु यथापूर्व्वसंयोगजनकक्रियाजनकत्वमिति न वेगेन स्थितिस्थापकस्यान्यथासिद्धिरिति भावः। स्थितिस्थापकत्वं जातिविशेषः, क्रियाविशेषजनकतावच्छेदकतया सिद्धः।

भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥१६०॥
स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते।
धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥१६१॥
गङ्गास्नानादियागादिव्यापारः परिकीर्त्तितः।
कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥१६२॥

स्थितिस्थापकं केचिन्मन्यन्ते तदप्रमाणमिति भावः। असौ स्थिति-स्थापकः। क्वचित् आकृष्टशाखादौ ॥ १५८ ॥

भावनाख्य इति तस्य संस्कारस्य। उपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेरुपेक्षानात्मक इत्युक्तम्। तत्संशयात् संस्कारानुत्पत्तेर्निश्चय इत्युक्तम्। तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः। ननु स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वं तेनोपेक्षादिस्थले न स्मरणम्। इत्यञ्च (१०) संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेन्न, विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात्। किञ्च (११) उपेक्षास्थले संस्कारकल्पनाया गुरुत्वात् संस्कारं प्रति चोपेक्षान्यत्वेन हेतुतायाः (१२) सिद्धत्वात् ॥ १६० ॥

असौ संस्कारः। तत्र प्रमाणं दर्शयति—स्मरणे इति। यतः स्मरणं प्रत्यभिज्ञानञ्च जनयति अतः संस्कारः कल्प्यते। विना व्यापारं पूर्वानुभवस्य स्मरणादिजननासामर्थ्यात्। स्वस्वव्यापारान्यतरा

१०। इत्यञ्च—उक्तप्रकारेणोपेक्षाज्ञानात् स्मृतिवारणे च।

११। वस्तुतः संस्कारं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्व एव विनिगमकमस्तीत्याह—किञ्चेति।

१२। सिद्धत्वादित्यस्यापि पञ्चम्यन्तस्य नेत्यनेनान्वयः।

१३। उद्देश्यतावच्छेदकपदस्य प्रागपेक्षितत्वात्तथान्वयप्रदर्शनार्थमुदीच्यस्याप्यसावित्यस्य प्राग्धारणमिति बोध्यम्।

भावे कारणत्वासम्भवात् (१४)। न च प्रत्यभिज्ञां प्रति तत्तत् संस्कारस्य हेतुत्वेन प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम्, अप्रयोजकत्वात् (१५)। परे तु (१६) अनुद्बुद्ध-संस्कारात् प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्-स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः (१७)॥

अदृष्टं निरूपयति—धर्म्माधर्म्माविति। स्वर्गादीति स्वर्गादिसकल-(१८) सुखानां स्वर्गसाधनीभूतशरीरादीनाञ्च साधनं धर्म्म इत्यर्थः। तत्र (१९) प्रमाणं दर्शयितुमाह—यागादीति (२०)। यागादि-व्यापारतया हि धर्म्मः कल्प्यते। अन्यथा (२१) यागादीनां चिर-विनष्टतया निर्व्यापारतया (२२) च कालान्तरभाविस्वर्गजनकत्वं न स्यात्। तदुक्तमाचार्य्यैः—

---

१४। कार्य्याव्यवहितप्राक्क्षणवृत्तिस्वस्वव्यापारान्यतरकत्वस्यैव कारणतापदार्थत्वादिति भावः।

१५। संस्कारजन्यत्वस्य स्मृतित्वप्रयोजकत्वाभावादित्यर्थः।

१६। मणिकृन्मतं दर्शयति—परे त्विति।

१७। त्वन्मतेऽन्तराकल्पनीयस्मृतिव्यक्तावुद्बुद्धसंस्कारस्य हेतुत्वकल्पनं मन्मते तु प्रत्यभिज्ञाया तद्धेतुत्वकल्पनमिति समानं अन्तरा स्मृतिव्यक्तिकल्पने प्रत्यभिज्ञायां तद्धेतुत्वकल्पने च तवाधिकं गौरवमित्यस्वरस आहुरित्यनेन सूचितः।

१८। स्वर्गादीत्यत्र स्वर्गपदेन सुखमात्रस्य आदिपदेन शरीरेन्द्रियादेः परिग्रह इति प्रदर्शयति—स्वर्गादिसकलेत्यादिना।

१९। तत्र—धर्म्मे।

२०। आदिना होमदानपरिग्रहः। यागत्वञ्च—देवतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छावत्त्वं। देवतोद्देश्यकत्वं देवतास्वत्ववद्विशेष्यकत्वं। शब्दमाया देवतेति पक्षे तु तस्या इदमित्यारोपज्ञानविषयत्वमुद्देश्यत्वं। होमत्वञ्चाग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्ति नोदनादि-वृत्ति व्यापारत्वं। दानत्वञ्च मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजनकत्यागत्वमिति सम्प्रदायः। यागत्वहोमत्वादयो मानसप्रत्यक्षगम्या जातिविशेषा इत्यन्ये।

२१। अन्यथा—धर्म्माभावे।

२२। चिरविनष्टस्याप्यनुभवस्य स्मृतिजनकत्वादाह—निर्व्यापारतयेति।

"चिरध्वस्तं (२३) फलायालं न कर्म्मातिशयं विना" इति॥

ननु यागध्वंस एव व्यापारः स्यात् न च प्रतियोगितद्ध्वंसयोरेकत्वाजनकत्वम्। सर्वत्र तथात्वे (२४) मानाभावात्। न च त्वन्मते फलानन्त्यं मन्मते चरमफलस्यापूर्वनाशकत्वान्न तथात्वमिति वाच्यम्। कालविशेषस्य सहकारित्वादित्यत आह—गङ्गास्नानेति। गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्वं कल्प्यते लाघवादिति भावः॥

ननु ध्वंसोऽपि न व्यापारोऽस्तु। न च निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यम्, अनन्यथासिद्धनियतपूर्ववर्त्तित्वस्य तत्रापि सत्त्वात्। अव्यवहितपूर्व्ववर्त्तित्वं हि चक्षुःसंयोगादेः कारणत्वे, न तु सर्वत्र, कार्य्यकालवृत्तित्वमिव (२५) समवायिकारणस्य कारणत्वे इत्यत आह—कर्म्मनाशेति। यदि हि अपूर्वं न स्यात्, तदा कर्म्मनाशाजलस्पर्शादिना नाश्यत्वं धर्म्मस्य न स्यात्। न हि तेन यागादेर्नाशः प्रतिबन्धो वा कर्त्तुं शक्यते, तस्य (२६) पूर्वमेव वृत्तत्वादिति भावः। एतेन देवताप्रीतेरेव फलत्वमित्यपास्तम्। गङ्गास्नानादौ सर्वत्र देवताप्रीतेरसम्भवाच्च। देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात्। प्रीतेः सुखस्वरूपत्वेन विष्णुप्रीत्यादौ तदसम्भवात्। तेन विष्णुप्रीतिजन्यत्वेन पराभिमतजन्यसुखादेस्तत्राभावात्। तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते॥ १६१॥ १६२॥

---

२३। चिरकालविनष्टं कर्म्म अतिशयं—अपूर्व्वं विना फलाय—फलसाधनाय नालं—न समर्थमित्यर्थः।

२४। तथात्वे—ध्वंसप्रतियोगिनोरेकत्वजनकत्वाभावे।

२५। यथा समवायिकारणस्य कारणत्वे कार्य्यकालवृत्तित्वं घटकं नत्वसमवायिकारणस्य कारणत्वे तथेत्यर्थः।

२६। तस्य—यागादेः पूर्व्वं कर्म्मनाशाजलस्पर्शादितः पूर्व्वं। वृत्तत्वात्—उत्पन्नत्वाद्विनष्टत्वाच्चेत्यर्थः। योग्यविभुविशेषगुणानां, स्वोत्तरोत्पन्नगुणनाश्यत्वादिच्छात्मकयागस्य तृतीयक्षण एव नष्टत्वादिति भावः।

अधर्म्मो नरकादीनां हेतुर्निन्दितकर्म्मजः।
प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ॥ १६३॥
इमौ तु वासनाजन्यौ * ज्ञानादपि विनश्यतः।
शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः॥ १६४॥
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः।
सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते॥ १६५॥
वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता।
कदम्बकोरकन्यायादुत्पत्तिः कस्यचिन्मते॥ १६६॥

अधर्म्म इति। नरकादिसकलदुःखानां नारकीयशरीरादीनाञ्च साधनमधर्म्म इत्यर्थः। तत्र प्रमाणमाह—प्रायश्चित्तेति। यदि ह्यधर्म्मो न स्यात्, तदा प्रायश्चित्तादिनाश्यत्वं न स्यात्। न हि तेन ब्रह्महननादीनां नाशः प्रतिबन्धो वा विधातुं शक्यते। तस्य पूर्वमेव विनष्टत्वादिति भावः। जीवेति। ईश्वरस्य धर्म्माधर्म्माभावादिति भावः॥ १६३॥

इमौ इति। इमौ धर्म्माधर्म्मौ। वासनेति। अतो ज्ञानिना कृतेऽपि सुकृतदुष्कृतकर्म्मणो न फलायालमिति भावः। ज्ञानादपीत्यपिना भोगपरिग्रहः। ननु तत्त्वज्ञानस्य कथं धर्म्माधर्म्मनाशकत्वम् "नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपी"ति वचनविरोधात्। इत्यञ्च (२७) तत्त्वज्ञानिना झटिति कायव्यूहेन सकलकर्म्मणां भोगेन क्षय इति चेन्न, तत्र भोगस्य वेदबोधितनाशकोपलक्षकत्वात्। कथमन्यथा

२७। इत्यञ्च—कर्म्मणां भोगैकनाश्यत्वे च।

*। ननु गङ्गादिदर्शनादिना ईश्वरे कुतो न धर्म्मादेरुत्पत्तिरत आह—वासनाजन्यादिति। ईश्वरे मिथ्याज्ञानजन्यवासनाविरहान्न धर्म्मादेरुत्पत्तिरिति भावः।

**उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता।**
**सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते॥१६७॥**

(२८) प्रायश्चित्तादिना कर्मणां नाशः। तदुक्तम्—"ज्ञानाग्निः (२९) सर्वकर्म्माणि"त्यादिना। श्रूयते च। "क्षीयन्ते (३०) चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" इति। ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि च न स्यात्, ज्ञानेन च सर्वेषां कर्म्मणां नाशादिति चेन्न, प्रारब्धेतरकर्मणामेव नाशात्। तत्तच्छरीरभोगजनकं हि यत् कर्म तत् प्रारब्धं, तदभिप्रायमेव नाभुक्तमिति वचनमिति॥

शब्दं निरूपयति—शब्द इति। नभोवृत्तिराकाशसमवेतः। दूरस्थशब्दस्याग्रहणादाह—श्रोत्रेति। ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह—वीचीति। आद्यशब्देन बहिर्दिग-दिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते। तेन चापरस्त-द्व्यापकः। एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति॥

कदम्बेति। आद्यशब्दाद्दशदिक्षु दश शब्दा उत्पद्यन्ते। ततश्चान्ये दश शब्दा उत्पद्यन्त इति भावः। अस्मिन् कल्पे गौरवादुक्तं (३१) कस्यचिन्मत इति॥१६४॥१६५॥१६६॥

ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसङ्गतमत आह—उत्पन्न इति। शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः॥

ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम्, इत्थं चोत्पादविनाशबुद्धिर्भ्रमरूपैवेत्यत आह—सोऽयं क इति। साजात्यमिति तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु

---

२८। अन्यथा—उपलक्षकत्वाभावे।

२९। सर्व्वकर्म्माणि—सर्व्वकर्मजन्यादृष्टानीत्यर्थः।

३०। स्मृतिं दर्शयित्वा श्रुतिं दर्शयति—क्षीयन्त इति।

३१। दशशब्दानां तत्प्रागभावानां तद्धेतुहेतुमद्भावानाञ्च कल्पने गौरवादित्यर्थः।

तदेवौषधमित्यादौ † सजातीयेऽपि दर्शनात्।
तस्मादनित्या एवेति वर्णाः सर्व्वे मतं हि नः ॥१६८॥

इति श्रीमहामहोपाध्याय-विद्यानिवासभट्टाचार्य्य-
सुत-श्रीपञ्चाननभट्टाचार्य्यविरचितो भाषा-
परिच्छेदः समाप्तः।

---

तद्व्यक्त्यभेदो विषयः। उक्तप्रतीतिविरोधात् (३२)। इत्यञ्च (३३) द्वयोरपि बुद्ध्योर्न भ्रमत्वमिति ॥ १६७ ॥

ननु सजातीयत्वं सोऽयमिति प्रत्यभिज्ञायां भासते इति कुत्र दृष्टमित्यत आह—तदेवेति। यदौषधं मया कृतं (३४) तदेवान्येनापि कृतमित्यादिदर्शनादिति भावः ॥ १६८ ॥

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्य्यसुत-
श्रीविश्वनाथपञ्चाननभट्टाचार्य्यविरचितायां
सिद्धान्तमुक्तावल्यां गुणनिरूपणम् ॥
समाप्तश्चायं ग्रन्थः ॥



---

३२। उत्पादविनाशशालिप्रत्ययविरोधादित्यर्थः।

३३। इत्यञ्च—प्रत्यभिज्ञानस्य सजातीयविषयत्वे चेत्यर्थः। द्वयोरपीति—उत्पाद-प्रतीतिप्रत्यभिज्ञानयोरित्यर्थः।

३४। ननु तत्रापि व्यक्त्यभेद एव विषयोऽस्त्वतो भावार्थं प्रकाशयति—यदौषधं मया कृतमित्यादिना। अत्र च स्वकर्तृकत्वस्वभिन्नकर्तृकत्वरूपविरुद्धधर्माध्यासाहितभेदप्रत्ययस्य प्रतिबन्धकस्य सत्त्वान्न व्यक्त्यभेदो विषयः, किन्तु तत्सजातीयाभेदो विषय इति भावः।

इति काव्यतर्कतीर्थोपनामक-श्रीकुञ्जविहारितर्कसिद्धान्त-संगृहीता
सिद्धान्तमुक्तावलीटिप्पनी सम्पूर्णा।

---

†। आदिना सैवेयं दीपकलिकेत्यादेः परिग्रहः।

## आर्य्यप्रभा। ( संस्कृत-मासिकपत्रिका )

जगत्पुराश्रमप्रधानाध्यापकेन काव्यतर्कतीर्थोपनामकश्रीकुञ्जविहारितर्कसिद्धान्तभट्टाचार्य्येण सम्पादिता प्रकाशिता च।

अस्यां नानाविषयकप्रबन्धाः समालोचनेतिवृत्तादीनि परीक्षापाठ्यान्तर्व्वर्त्ति प्राचीनसंस्कृतपुस्तकानि च टीकावङ्गानुवादादिभिः सहितानि प्रकाश्यन्ते। वैशाखादस्या वर्षारम्भः। अस्या अग्रिमवार्षिकमूल्यं सपादैकरूपकम् १।०, नैयव्ययादिकमपि पृथक् न प्रदेयम्। अस्मिंश्च प्रचलिते पञ्चमवर्षे काव्यशास्त्रीयोपाधिपरीक्षापाठ्यरूपेण निर्व्वाचितं मालतीमाधवंनाम प्रकरणं स्वकृतातिविस्तृतटीकया वङ्गानुवादेन च समलङ्कृतं प्रकाश्येत सम्पूर्णताञ्च लभेत। टीका च यथा मालतीमाधवपाठार्थिनां विशेषतः परीक्षार्थिनां अवश्यज्ञातव्यसर्वविषयैः ( सलक्षणनान्दीप्रस्तावनादोषगुणरीत्यलङ्कारच्छन्दः-समालोचनव्याकरणवार्त्तातात्पर्य्यार्थसार्थैः ) समुद्भासिता निगूढ़ार्थप्रकाशिका च सम्पद्येत, तत्रातीव यत्नो विधीयते। अलमनल्पजल्पनया सम्भाव्यते चैतत्टीकासाहाय्येनोपाध्यायोपदेशमन्तरेणापि मालतीमाधवाध्ययनमनायाससाध्यं भवेत्।

ग्राहकाणामाग्रहातिशयान्निःशेषितांशपूरिताः पुरातनार्य्यप्रभाः पुनरपिक्रय्या वर्त्तन्ते, मूल्यं प्रतिवर्षमेकरूपकम् १)। अयं पुनर्म्महान् सुयोगः ग्राहकेषु यैः पञ्चमवर्षीयपत्रिकामूल्येन सपादैकरूपकेण १।० सह पादोनरूपकद्वयं १॥० सङ्कलने तु रूपकत्रयं ३) प्रेष्येत, तैस्तैनैवाधोलिखितभाषापरिच्छेदपिङ्गलसूत्राभ्यां समन्विताः प्रथमद्वितीयतृतीयचतुर्थवर्षीयपत्रिकाः मालतीमाधवसमन्विताः पञ्चमवर्षीयपत्रिकाश्च लभ्येरन्, यैः पुनः रूपकद्वयं २) प्रेष्येत, तैस्तैनैवाधोलिखितपिङ्गलसूत्रसमन्विता चतुर्थवर्षीयपत्रिका मालतीमाधवसमन्विता पञ्चमवर्षीयपत्रिका च लभ्येत। नैयव्ययादिकमपि पृथक

न देयमिति सुयोगोऽयं न परित्यक्तव्यः संस्कृतानुरागिभिः। पत्रप्राप्तिमात्रत एव भि पि द्वारापि पत्रिकादिकं सर्व्वं प्रेष्येत, किन्तु तत्राधिकमानकमात्रं ) सर्वैरेव प्रदेयमिति सर्वेषामेव सदयदर्शनमाकर्षामि इति। शम्।

प्राप्तिस्थानम्—

आर्य्यप्रभासम्पादक,—पोः महामुनि, जिला चट्टग्राम।

## निम्नलिखितानि पुस्तकानि क्रय्याणि वर्त्तन्ते।

१। भाषापरिच्छेदः (सटिप्पनसिद्धान्तमुक्तावलीसहितः)। मूल्यम्—१)

२। पिङ्गलच्छन्दःसूत्रम् (काव्यव्याकरणशास्त्रीयमध्यपरीक्षापाठ्यरूपेण निर्दिष्टं) हलायुधकृतवृत्तिसहितं सुविस्तृतवङ्गानुवादेन दुरूहस्थलानां टिप्पन्या नानाविधज्ञातव्यविषयपूर्णपरिशिष्टेन च समलङ्कृतम्। मूल्यम्—१)

३। मालतीमाधवं नाम प्रकरणम् (काव्योपाधिपरीक्षापाठ्यरूपेण निर्दिष्टं) विस्तृतटीकावङ्गानुवादाभ्यां सहितम्। मूल्यम्—१॥)

नेयव्ययः प्रतिपुस्तकमानकद्वयम् ). भिपिद्वाराग्रहणे पुनरधिकमानकमात्रं ) प्रदेयम्।

प्राप्तिस्थानानि—

| श्रीआशुतोषकाव्यतीर्थ<br>पोः मेदिनीमण्डल, जिला ढाका। | श्रीहेरम्बनाथ-तर्कतीर्थ—<br>पोः टोंगाछि, जिला ढाका। |
|---|---|

सम्पादक-आर्य्यप्रभा—पोः महामुनि, जिला चट्टग्राम।

कलिकातानगर्यां वाराणस्याञ्च प्रधानप्रधानपुस्तकालयेऽपि पुस्तकान्येतानि प्राप्तव्यानि।